|| श्रीरस्तु ||

श्रीहस्तिशैलशिखरोज्ज्वलपारिजाताय नमः ।

श्री पराङ्कुशपरकाल [illegible]तिवर वरवरमुनीन्द्रेभ्यो नमः ।

1/3

द्राविडाम्नाय चतुस्सहस्रदिव्यप्रबन्धे प्रथम सहस्रान्तर्गतम्

# तिरुप्पल्लाण्डु - पेरियाऴ्वार्तिरुमोऴिनामकम्

मङ्गलाशासन प्रबन्ध - श्री भट्टनाथसूक्तात्मकम्

# ॥ दिव्यप्रबन्धद्वितयम् ॥

## श्री भट्टनाथापरनामधेय श्री विष्णुचित्त मुनीन्द्रानुगृहीतम् ।

श्रीकाञ्ची प्रतिवादि भयङ्कर जगदाचार्य सिंहास[illegible] श्रीमदण्णङ्गराचार्य विरचित

संस्कृत टीकासनाथम् ॥

मदरास - लिबर्टि मुद्रणालये सम्मुद्रितम् ।

एतन्मुद्रणार्थं द्रव्यसाहाय्यकर्तारः

Sr.. १. श्रीमती. पारुबाई [illegible] ([illegible] हैदराबाद) [illegible]

Sr. [illegible]मप्रसादजी वेणुगोपालजी (हीरानंद[illegible]मसुखजी, [illegible]

[illegible]णजी भांगडियः (पन्नालाल ही[illegible]लालजी)

1961

॥ श्रीरस्तु ॥

श्रीहस्तिशैलशिखरोज्ज्वलपारिजाताय नमः ।

श्री पराङ्कुशपरकाल यतिवर वरवरमुनीन्द्रेभ्यो नमः ।

द्राविडाम्नाय चतुस्सहस्रदिव्यप्रबन्धे प्रथम सहस्रान्तर्गतम्

# तिरुप्पल्लाण्डु - पेरियाळ्वार्तिरुमोळिनामकम्

मङ्गलाशासन प्रबन्ध - श्री भट्टनाथसूक्तात्मकम्

# ॥ दिव्यप्रबन्धद्वितयम् ॥

श्री भट्टनाथापरनामधेय श्री विष्णुचित्त मुनीन्द्रानुगृहीतम् ।

श्रीकाञ्ची प्रतिवादि भयङ्कर जगदाचार्य सिंहासनाधीश श्रीमदण्णङ्गराचार्य विरचित

संस्कृत टीकासनाथम् ॥

मदरास - लिबर्टि मुद्रणालये सम्मुद्रितम् ।

एतन्मुद्रणार्थं द्रव्यसाहाय्यकर्तारः -

१. श्रीमती. पारुबाई साहब (द. हैदराबाद)

२. श्री रामप्रसादजी वेणुगोपालजी (हीरानंदरामसुखजी)

३. श्री सत्यनारायणजी भांगडिया (पन्नालाल हीरालालजी)

rajganj,

j,

1961

|| श्रीः ||



श्रीकाञ्ची प्रतिवादि भयङ्कर-अण्णङ्गराचार्यः।

— व्याख्यान वाचस्पतिः —

॥ श्रीरस्तु ॥

॥ श्रीहस्तिशैलशिखरोज्ज्वलपारिजाताय नमः ॥



॥ श्रीशठकोप श्रीरामानुज श्रीवरवरमुनीन्द्रेभ्यो नमः ॥

# ॥ द्राविडवेददिव्यप्रबन्ध व्याख्यान प्रस्तावना ॥

लक्ष्मीनाथारम्भां शठरिपुयतिराजमध्यमामनघाम् ।
श्रीमद्वरवरमुनिराट्पर्यन्तां नौमि पूर्वगुरुपङ्क्तिम् ॥

श्रीकाञ्चीपरवादिभीकरगुरुश्रीवंशलब्धोदयो वेदान्तद्वयसिन्धुमग्नधिषणो नानाकलाकोविदः ।
श्रीमद्द्राविडवेदसूक्तिनिवहान् गीर्वाणवाण्या क्रमाद्व्याचष्टे विदुषां मुदं प्रगुणयन्नण्णङ्गरार्याह्वयः ॥

श्रीवैष्णवसम्प्रदाये आळ्वारपदवाच्या दिव्यसूरयो दश । ते च—१. सरोयोगी, २. भूतयोगी, ३. महदाह्वययोगी, ४. भक्तिसारयोगी, ५. श्रीशठकोपमुनीन्द्रः, ६. कुलशेखरसूरिः, ७. भट्टनाथमुनिः, ८. भक्ताङ्घ्रिरेणुसूरिः, ९. मुनिवाहन(श्रीपाण)सूरिः, १०. परकालमहायोगी—इति संशब्द्यन्ते । सर्वेऽप्येते दिव्यसूरिप्रवरा भक्तिबलात्कारेण भगवद्विषयकान् दिव्यप्रबन्धाननुगृहीतवन्तः। ते च द्राविडभाषामयाः। द्राविडवेदः, द्राविडाम्नायः, द्रमिडोपनिषत्, द्राविडब्रह्मसंहिता इत्यादिनामविशेषैर्व्यपदिश्यन्त एते दिव्यप्रबन्धाः ॥

श्रीशठकोपमुनीन्द्राणामन्तेवासी मधुरकविसमाख्यो ब्राह्मणाग्रणीरासीत् । सोऽपि दिव्यसूरिगोष्ठी-परिगणितोऽभूत् । श्रीशठकोपमुनीन्द्रैकदैवतस्स भगवद्विषयिणीं गाथामेकामपि न निरमिमीत । अपि तु स्वाचार्यभूतशठकोपमुनीन्द्रविषयकमेव कमपि लघुतमं गुणैर्गुरुतमञ्च दिव्यप्रबन्धमररचत् । सोऽपि द्राविडवेद-सङ्केतभाजनतां निन्ये पूर्वाचार्यैः ॥

सप्तमस्य श्रीभट्टनाथमुनेः श्रीमती गोदानाम्नी दुहिताऽऽसीत् । इयमयोनिजा मैथिलीव । भट्टनाथमुने-स्तुलसीकानने समुद्भूता तेन च पुत्रीत्वेन स्वीकृताऽभूत्, जनकचक्रवर्तिना सीतेव । भगवद्दिव्यमहिषीष्वन्यतमा सेयं गोदादेव्यपि स्वकान्तविषयकं परमभोग्यं मधुरमधुरं परमविलक्षणं दिव्यप्रबन्धद्वितयं प्रणिनाय; तदपि द्राविडवेदमध्यपरिगणितं विभ्राजते । एवं च निर्दिष्टैर्द्वादशभिर्व्यक्तिविशेषैः प्रकाशितानां परमपावनीनां दिव्यसू-क्तीनां द्राविडाम्नायव्यपदेशः सुप्रथितः ॥

संस्कृतभाषायां दिव्यमिति किमपि पदम् उत्तमोत्तमार्थकमुल्लसति। भगवद्गीतायाम् * जन्म कर्म च मे दिव्यम् * दिव्यं ददामि ते चक्षुः * इत्यादिस्थलेषूपात्तमिदं दिव्यपदं श्रीवैष्णवसम्प्रदाये प्रमाणप्रमेयप्रमातृषु प्रयुक्तं सत् परमविलक्षणं सौरभं धत्ते। तथाहि। प्रमाणेषु मूर्धन्यो द्राविडवेद एवेति तं दिव्यप्रबन्धनाम्ना व्यपदिदिशुः। प्रमेयमूर्धन्यता अर्चावतारस्थलविशेषाणामेवेति तान् दिव्यदेशनाम्ना प्रथयामासुः। प्रमातृमूर्धन्यता श्रीपरांकुश-परकालप्रमुखसूरिवराणामेवेति तान् दिव्यसूरिपदेनाभिलपन्ति स्म। अहो! दिव्यतमेयं खलु व्यवस्था॥

दिव्यसूरिष्वेतेषु श्रीशठकोपमुनेरेव सर्वसंप्रतिपन्नं प्राधान्यम्। अन्ये सर्वेऽपि सूरयः शठकोपमुनेरस्य अवयवभूताः; अयमेव श्रीपराङ्कुशमुनीन्द्रः अवयवीति संप्रदायः।

अवतारक्रमे प्राथम्यमनुद्वहतः शठकोपमुनेर्ननु कथमवयवित्वं प्रोच्यते? इति चेत्; तत्तु भगवत्सङ्कल्पा-धीनतत्प्रभावातिशयनिबन्धनमिति सम्प्रति संक्षेपः। एतैः सर्वैरपि दिव्यसूरिवरैः प्रणीतास्सर्वेऽपि दिव्यप्रबन्धाः कदाचिद्विलुप्तप्रचारा अभूवन्। आचार्यपरम्परायामादिमः श्रीमन्नाथमुनिसमाख्यो गुरुवरस्तेषां दिव्यप्रबन्धानां पुनरुद्धारं चिकीर्षुस्सन् महतां नियोगेन श्रीशठकोपमुनीन्द्रदिव्यावतारस्थलीं श्रीकुरुकापुरीमुपेत्य तत्र दिव्यतिंत्रिणी-तरुमूले निपद्य श्रीशठकोपमुनीन्द्रविषयकं श्रीमधुरकविसूरिप्रणीतं लघुतरं प्रबन्ध द्वादशसहस्रकृत्वः सनियमं जपित्वा अथ योगदशायां दत्तसाक्षात्कारात् श्रीशठकोपमुनीन्द्रात् चतुस्सहस्रसंख्याकगाथात्मकं द्राविडाम्नायं लेभे (श्रीमन्नाथमुनिः) इति संप्रदायः। अनेनापि हेतुना श्रीशठकोपमुनेः प्राधान्यमवसेयम्। अत्र चायमनु-सन्धेयः श्लोकः—* पत्युः श्रियः प्रसादेन प्राप्तसार्वज्ञ्यसम्पदम्। प्रपन्नजनकूटस्थं प्रपद्ये श्रीपरांकुशम्॥ * इति। शठकोपमुनेरेव नामान्तरं श्रीपरांकुश इति। वकुलाभरणमुनिरित्यप्यस्य व्यपदेशः प्रथितः। एतादृशमहिमशालिनि सत्यपि श्रीशठकोपमुनौ, दिव्यप्रबन्धपरिगणनायां प्राथम्यं तु श्रीभट्टनाथ(विष्णुचित्त) समाख्यदिव्यसूरिप्रणीतस्य तिरुप्पल्लाण्डुनाम्नो दिव्यप्रबन्धविशेषस्यैव समभूत्। स एव द्राविडाम्नायरूपसकलदिव्यप्रबन्धेष्वपि प्राथमिकं स्थानं प्राप्नोति॥ सहस्रचतुष्टयात्मना विभक्तेषु दिव्यप्रबन्धेषु प्रथम सहस्रे प्राथमिकः स एव दिव्यप्रबन्धः॥

अत्रेदं किमप्यावश्यकं प्रस्तूयते॥ जगति भक्ताः कविवरा भूयांसो भूयस्सु भूभागेषु जाता जायन्ते जनिष्यन्ते च। ते ते स्व भक्तिभूम्नाभगवन्तं स्तुवन्ति स्वस्वभाषाविशेषैः; न केवलं द्राविड भाषायामेव प्रबन्धा अवतीर्णाः; आन्ध्र-कर्णाट-केरल-घूर्जर-हिन्दी प्रभृतिष्वनेकभाषास्वपि भक्तानां प्रबन्धाः प्रादुर्भूताः श्रूयन्ते प्रक्ष्यन्ते च। ते ते तत्तद्भाषाविदां विदुषां रसिकानां भोग्या आदरणीयाश्च भवन्त्येव। तेषां प्रबन्धानां वेदव्यपदेशः किं नु भवितुमर्हति? नैव भवितुमर्हति। एवमेतेऽपि द्राविडप्रबन्धा भक्तप्रवरप्रोक्ता इति आदरणीया भवन्तु कामम्; तावता किमेतेषां वेदत्वमुपनिषत्त्वं वा संघटेत? द्राविडाम्नायः, द्रविडवेदः, द्रमिडोपनिषत्-इत्यादिव्यपदेशान् कथममी प्रबन्धा अर्हन्ति? इत्येवमेवं केचन मितमतयश्चोद्यान्युत्थापयेयुः; उत्थापयन्ति च। अन्ये केचित्—वैष्णवभक्ता इव शैवभक्ता अपि स्वाभिमतदेवतास्तुतिपरान् द्राविडप्रबन्धान् प्रणीतवन्तस्सन्ति; तेषां वेदत्वं भवेच्चेत् अमीषामपि वैष्णवप्रबन्धानां वेदत्वं स्यान्नाम; आभिमानिकं खल्वेतत्—इत्याक्रोशन्ति।

अत्र ब्रूमः। एवंविधचोद्यानामुत्थापकाः श्रीवैष्णवसंप्रदायावलम्बिन एव वा? इतरमतस्था वा? इति प्रथमतः पृच्छामः। श्रीवैष्णवसम्प्रदायावलम्बिनश्चेत्; तान्प्रति एतावदेव वक्तुमिच्छामः—श्रीमन्नाथमुनि-भगवद्यामुनमुनि-भगवद्रामानुज-श्रीकूरनाथ-भट्टारकादयोऽस्मत्पूर्वाचार्याः परम वैदिकाग्रेसरा एतेषु दिव्यप्रबन्धेषु

वेदत्व-उपनिषत्त्व-ब्रह्मसंहितात्वप्रतिपत्ति मुद्वहन्तः एतदर्थप्रवचनैकपरायणा आसन्निति निस्संशय मवगमात् तद्वंशजानां युष्माकं वृथा कुचोद्योत्थापनं स्वरूप हानिकरमिति । श्रीवैष्णवेतरे आक्षेपकाश्चेत् तान्प्रति ब्रूमः; आळ्वारपद्वाच्या भक्ताग्रेसरा न तावदितरभक्तनिर्विशेषाः; पौराणिकैर्महर्षिभिरपि संसूचितप्रभाव विशेषाः खल्वमी । तथा हि; श्रीमद्भागवते एकादशस्कन्धे पञ्चमाध्याये—"कृतादिषु नरा राजन्! कलाविच्छन्ति संभवम् । कलौ खलु भविष्यन्ति नारायणपरायणाः ॥ क्वचित्क्वचिन्महाराज! द्रामिडेषु च भूरिशः । ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी । कावेरी च महापुण्या प्रतीची च महानदी । ये पिबन्ति जलं तासां मनुजा मनुजेश्वर! तेषां नारायणे भक्तिर्भूयसी निरुपद्रवा ॥" इत्यमी श्लोका विराजमाना भृशमवधेयाः । श्रीसरोमुनि प्रभृतयस्सर्वेऽप्यस्मदीया दिव्यसूरिवरा नदीतीरेष्वेव प्रादुरभूवन्; तास्सर्वा अपि नद्योऽत्र प्रस्तुताः । ताम्रपर्णी तटे श्रीशठकोपसूरिर्मधुरकविश्चावातरताम्; विष्णुचित्तसूरिः गोदादेवी च कृतमालातीरे । सरोमुनि भूतमुनि महदाह्वयमुने भक्तिसारमुनयः पयस्विनी [क्षीरनदी] तीरे । भक्ताङ्घ्रिरेणु-मुनिवाहन-परकालयोगिनः कावेरीतीरे । श्रीकुलशेखरसूरिः प्रतीच्या नद्यास्तीरे । सूरिवराणा ममीषां नारायणभक्तिगरिष्ठत्वस्य चोपवर्णितत्वात् आल्वारव्यतिरिक्ताना मितरेषां भक्तानामिह स्मरणप्रसक्तिरेव नास्ति । "क्रूरे कलियुगे प्राप्ते नास्तिकैः कलुषीकृते । विष्णोरंशांशसंभूतो वेदवेदार्थतत्त्ववित् । स्तोत्रं वेदमयं कर्तुं द्राविडयाऽपि च भाषया । जनिष्यति सतां श्रेष्ठो लोकानां हितकाम्यया ॥" इत्यादीन्यपि आर्षवचनानि पूर्वाचार्यै रुदाहृतानि सन्ति । एतादृश वैभवविशेष विभासुराणां सूरिवराणां विषये विप्रतिपत्तिरनुचितेति संप्रति संक्षेपः । ब्राह्मणोत्तमैः वेदवेदान्तविदग्रेसरैः पूर्वाचार्यैः व्याख्याताश्चामी दिव्यप्रबन्धाः । तदनुसारेणैव वयं गैर्वाण्या वाण्या विवर्तं विवरणं च विरचयामः ॥

---

इति श्रीकाञ्ची प्रतिवादिभयङ्कर अण्णङ्गराचार्यः ।

## सर्वदिव्यप्रबन्धसाधारणमुखपद्यानि

### — भगवता श्रीरङ्गनाथेनानुगृहीतं श्रीवरवरमुनीन्द्रस्तुतिपद्यम् —

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् ।
यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥

(व्या.) आचार्यसार्वभौमस्य श्रीवरवरमुनीन्द्रस्य आचार्यः श्रीशैलेशगुरुः, स एव तिरुमलैयाळ्वारिति, तिरुवाय्मोळिप्पिळ्ळै इति च व्यपदिष्टः तस्य दयापात्रं रम्यजामातृमुनिः ज्ञानभक्तिविरक्तिप्रमुखगुणगणसागरश्च । यतीन्द्रे भगवति रामानुजे प्रावण्यातिशयेन हेतुना यतीन्द्रप्रवण इति प्रथितश्च । एतादृशं रम्यजामातृ मुनीन्द्रं वन्दे ॥

### — श्रीकूरेशगुरुवरानुगृहीतं गुरुपरम्परास्तुतिपद्यम् —

लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम् । अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥

वाक्यगुरुपरम्परा * श्रीधराय नमः * इति समाप्यते; श्लोकगुरुपरम्परा च * इन्दिरासहचरं नारायणं संश्रये * इति समाप्यते। अतश्च आचार्यपरम्परायां लक्ष्मीनाथ एव उपक्रमपदे निविशत इति लक्ष्मीनाथसमारम्भा गुरुपरम्परा। श्रीमन्नाथमुनिः भागवद्यामुनमुनिश्च अस्यां मध्ये तिष्ठतः। अस्मदाचार्यपदेन तेषांतेषाम् आचार्यो विवक्षितः; स एव हि अस्यामवसाने विराजते। एवम् आदिमध्यान्तगुर्वनुसन्धानेन सर्वे गुरवः संकीर्तितप्राया वेदितव्याः॥ ... ... *

— श्रीकूरेशगुरुवरानुगृहीतं भगवद्रामानुजस्तुतिपद्यम् —

यो नित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतस्तदितराणि तृणाय मेने।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धोः रामानुजस्य चरणौ शरणं प्रपद्ये॥

भगवान् रामानुजः भगवच्चरणारविन्दमेव अनर्घं सुवर्णं प्रतिपद्यमानः तत्रैव व्यामुह्यन् तदितरवस्तुजातं तृणवदमन्यत। "तस्मिन् रामानुजार्ये गुरुरिति च पदं भाति नान्यत्र"। स एक एव परमकारुणिकश्च। तस्य चरणावेव शरणं नः॥ ... ... *

— भगवद्यामुनमुनीन्द्रैरनुगृहीतं श्रीशठकोपमुनीन्द्रस्तुतिपद्यम् —

माता पिता युवतयस्तनया विभूतिः सर्वं यदेव नियमेन मदन्वयानाम्।
आद्यस्य नः कुलपतेर्वकुलाभिरामं श्रीमत्तदंघ्रियुगलं प्रणमामि मूर्ध्ना॥

मदन्वयानामितिपदं प्राधान्येन श्रीमन्नाथमुनिमभिप्रेत्य प्रयुक्तम्; स एव योगदशायां साक्षात्कृताद्वकुलाभरणमुनीन्द्रात् द्राविडाम्नायमशेषम् उपदेशमुखत उपलभ्य तस्मिन्नेव सकलविधबन्धुप्रतिपत्तिमवहत्। स एव च प्रपन्नजनकूटस्थः; तदेवोच्यते "आद्यस्य नः कुलपतेः" इत्यनेन। * प्रत्युः श्रियः प्रसादेन प्राप्तसार्वज्ञ्यसम्पदम्। प्रपन्नजनकूटस्थं प्रपद्ये श्रीपराङ्कुशम्॥ * इति पद्यरत्नं चात्रानुसन्धेयम्। वकुलाभिराममिति श्रीपादविशेषणम् - तुलसीविभूषित भगवत्पादव्यावर्तनाय प्रयुक्तम्। वकुलाभरण-वकुलभूषणादि दिव्यनामविभासुरस्य श्रीशठकोपमुनीन्द्रस्यैव हि पादयुगलं वकुलमालाभिरामम्। तत्प्रणमति भगवान् यामुनमुनिः॥

— श्रीपराशरभट्टार्यानुगृहीतं सकलदिव्यसूरि स्तुतिपद्यम् —

भूतं सरश्च महदाह्वय भट्टनाथ श्रीभक्तिसार कुलशेखर योगिवाहान्।
भक्तांघ्रिरेणु परकाल यतीन्द्रमिश्रान् श्रीमत्पराङ्कुशमुनिं प्रणतोऽस्मि नित्यम्॥

सरोयोगी, भूतयोगी, महदाह्वययोगी, भक्तिसारयोगी, श्रीशठकोपमुनीन्द्रः, कुलशेखरसूरिः, भट्टनाथमुनिः, भक्तांघ्रिरेणुसूरिः, मुनिवाहनसूरिः, परकालमहायोगी—इति तावदस्ति दिव्यसूरीणामवतारक्रमः; स एष क्रमः श्लोकेऽस्मिन्नादृतो न; * भूतं सरश्चेत्युपक्रम्य क्रमविपर्ययः कुतः कृत इति विमर्शेन भवितव्यम्; श्लोकत्वात् यथासौकर्यं रचना कृतेति केचन मन्येरन्। वश्यवाचामाचार्याणां सूक्तौ नैवं कथनं शोभनम्। "कासारभूतमहदाह्वयभक्तिसारान् श्रीमच्छठारिकुलशेखरभट्टनाथान्। भक्तांघ्रिरेणुमुनिवाह कलिद्विडाख्यान्

रामानुजं च यमिनं प्रणतोऽस्मि नित्यम् ॥" इति अनायासतः क्रमशः श्लोकरचना घटेत ननु । तथाऽपि क्रम-विपर्ययः कुत आदृत इति चेदवधीयताम्; दिव्यसूरिषु प्रधानभूतं पराङ्कुशमुनीन्द्रम् अवयवितया विन्यस्य इतरान् दिव्यसूरीन् मस्तक-नयन-वदन-कण्ठ-बाहु-दोर्मध्यनाभिचरणात्मकावयवतया विन्यस्य निर्वहन्तिस्म प्राञ्चः; तथा हि; "भूतं शिरो हृद महाह्वयमक्षियुग्मं भट्टार्यमास्यमथ भार्गवमस्य कण्ठम् । बाहू वदन्ति कुलशेखरयोगिवाहौ दोर्मध्यनाभिचरणानितरान् शठारेः ॥" "भूतं मस्तकमक्षिणी हृदमहत्सूरी च भट्टेश्वरं वक्त्रं भक्तिधनम् गलं कुलशिरोभूषं मुनिम् गायकम् । दोर्युग्मं हरिदासपद्मज उरो नाभिं कलिध्वंसिनं श्रीपादं मधुरं कविं यतिपतिं चाहुः शठारेर्बुधाः ॥" इति प्राचीनाचार्यप्रणीतपद्यद्वितयं प्रथते । एवंविधनिर्वाहसरणिमादृत्यैव प्रकृत-पद्यरचनेति प्रतिपत्तव्यम् । अत एव यतीन्द्रतोऽप्यनन्तरं श्रीमत्पराङ्कुशमुनेर्निवेशनम् ॥ * *

॥ सर्वदिव्यप्रबन्धसाधारणस्तुतिपद्यानि समाप्तानि ॥



## मङ्गलाशासनप्रबन्धप्रणेतृश्रीभट्टनाथसूरिविषयकाणि स्तुतिपद्यानि ॥

गुरुमुखमनधीत्य प्राह वेदानशेषान् नरपतिपरिक्लृप्तं शुल्कमादातुकामः ।
श्वशुरममरवन्द्यं रङ्गनाथस्य साक्षात् द्विजकुलतिलकं तं विष्णुचित्तं नमामि ॥

पाण्ड्यभूपतेर्विद्वत्परिषदि परतत्त्वनिर्णयार्थमुपस्थितो भट्टनाथसूरिः साक्षाद्भगवतैव प्रदत्तदिव्य-ज्ञानः; न तु मानुषगुरुमुखादधीतवान् । एतादृशोऽयं सूरिः परतत्त्वनिर्णयौपयिकानशेषान् वेदान् प्रोच्य नरपतिपरिकल्पितं शुल्कद्रव्यग्रन्थिं स्वायत्तीचकार । किञ्च, स्वात्मजां गोदादेवीं भगवते श्रीरङ्गनाथाय कलत्र-भावेन प्रदाय तस्य साक्षात् श्वशुरश्च बभूव । अत एव अमरैरपि वन्द्योऽभूत् । जन्मना विद्यया च द्विजकुला-ग्रगण्यश्चासीत् । तमिमं विष्णुचित्तसूरिं नमामि । अत्रोक्तौ चरित्रविशेषौ अदसीयवैभवे (उपरितने) अनुसन्धेयौ ॥

(गाथा.) मिन्नार्तडमदिळ्शूळ् विल्लिपुत्तूरेन्नोरुकाल्, शोन्नार् कळल्कमलम् शूडिनोम्—मुन्नाळ्
किळियरुत्तानेन्नुरैत्तोम् कीळ्मैयिनिल् शेरुम्, वळियरुत्तोम् नेञ्जमे वन्दु.

"प्रकाशमानपृथुलप्राकारपरिवेष्टितं श्रीधन्विनव्यपुरम्" इति सकृदुच्चारयतां पादकमलान्य-वतंसयामः; पुरा नरपतिपरिकल्पितं शुल्कं स्वायत्तीचकारेति च शंसामः । हे हृदय! एवं नाम त्वदानुकूल्य-जनितकार्यतः अधोगतिप्रापकपद्धतिविदेशिका अभूम ॥ ... ... *

पाण्डियन् कोण्डाडप्पट्टर्पिरान् वन्दानेन्नु, ईण्डिय शङ्गमेडुत्तूद—वेण्डिय
वेदङ्गळोदि विरैन्दु किळियरुत्तान्, पादङ्गळ् यामुडैय पत्तु ॥

यथा वल्लभदेवनामा पाण्ड्यराजः प्रशंसेत्, यथा च 'भट्टनाथो महान् समुपस्थित' इति बहवः शंखध्मानं कुर्युः, तथा स्वचिकीर्षितपरतत्त्वनिर्णयोपयुक्तानि वेदवाक्यान्युद्धाट्य क्षिप्रं शुल्कं परिगृहीतवतो विष्णु-चित्तसूरेः पादावेवास्माकं शरणम् ॥ * * * * *

## श्रीभट्टनाथ (श्रीविष्णुचित्त) सूरिवैभवम् ॥

**मिथुने मासि स्वात्यां भुव्यवतीर्णस्य भट्टनाथस्य । सूरेर्वैभवमतुलं संप्रति विज्ञापयामि सारतरम् ॥**

पाण्ड्यमण्डले श्रीधन्विनव्यक्षेत्रे [श्रीविल्लिपुत्तूरु.] वैदिकविप्रवरेण्यसंततौ मिथुनमासि स्वातीनक्षत्रे शुभे कोऽपि महापुरुषः प्रादुरभूद्वटपत्रशायिभगवत्कटाक्षविशेषेण, यः खलु विष्णुचित्तनाम्ना प्रसिद्धिमुपाययौ। यथा तु तुलसी निसर्गत एव विलक्षणसौरभसंभृता चकास्ति, तथा सोऽयमपि महान् स्वभावत एव भगवद्भक्तिभूमभूषित-स्तत्कैङ्कर्यैकसक्तचित्तो ववृधे । एवमेष वर्धमानो मान्यमहोदयः कीदृशेन कैङ्कर्येण भगवान् प्रसीदेदिति मनसि पर्यालोचयन्नवर्तत । तस्मिन् क्षेत्रे कश्चन प्राज्ञः पौराणिकः श्रीविष्णुपुराणप्रवचनेन भूयसस्सज्जनानावर्जयन् विरराज । तदीयगोष्ठ्यामयमपि महान् कदाचिदन्वितस्सन् भगवत्कथाश्रवणकुतूहली निषीदतिस्म । तदात्वे तु स पौराणिकः * प्रसादपरमौ नाथौ मम गेहमुपागतौ । धन्योऽहमर्चयिष्यामीत्याह माल्योपजीवनः ॥ * इत्येतत्पद्यरत्नं व्याचक्षाणः कंसजिघांसया मधुरां पुरीं समाजग्मुषो नन्दसूनोः मालाकारभवनं स्वयमभ्येत्य कुसुममालिकां याचमानस्य कथां कर्णामृतमयीं कथयामास । तदाकर्णनजहर्षप्रकर्षप्रफुल्लचित्तो नित्यं भगवतः पुष्पमालासमर्पण-मेव तत्प्रसादनिदानं महत्तरं कैङ्कर्यमिति दृढमध्यवस्यन् मनोहरमुद्यानवनमुपकल्प्य तस्मिंश्च नानाविधानि सुरभि-कुसुमानि संवर्ध्य तत्क्षेत्राधिपतये वटपत्रशायिभगवते नित्यमर्पयन्नाननन्द । नक्तंदिवमपि तदुद्यानपोषणमेवास्य नित्यकर्म समभूत् । एवमेवासौ ब्रह्मानन्दमयं सकलमपि समयं गमयन्नास्ते ।

पाण्ड्यकुलजन्मा वल्लभदेवनामा समतीतसीमभूमा भूपतिः कोऽपि दक्षिणमधुरापुर्यामाधिराज्यमातस्थिवान् नगरशोधनाय नित्यं नक्तं निगूढेन वपुषा वीथीषु परिभ्रमन् जातुचित् क्वचन कोणे शयानं कमपि पथिकमुत्थाप्य 'कस्त्वं भोः! कुतस्त्यः कुत्रत्यः' इत्यादि पर्यपृच्छत् । स च प्रत्यभाषत—ब्राह्मणोऽहम्, गङ्गायात्रां परिसमाप्य प्रतिनिवर्तमानः श्रान्तिशान्तये शयितवानत्रेति । तदाकर्ण्य राजा प्रोवाच—'ब्राह्मणः खल्वसि; ब्राह्मणा ननु नीतिज्ञाः; यदि जानाति भवान् ब्रवीतु कामपि नीतिम्' इति । आदिष्टश्चैवमसौ द्विजातिरब्रवीत्—

वर्षार्थमष्टौ प्रयतेत मासान् निशार्थमर्धं दिवसं यतेत ।
वार्धक्यहेतोर्वयसा नवेन परत्रहेतोरिह जन्मना च ॥" इत्येतत्पद्यरत्नम् ।

[वर्षाकालात्मकमासचतुष्टयोपयोज्यवस्तुजातसंभरणार्थमष्टसु मासेषु यत्नं कुर्यात्; रात्रिकालोपयोज्य-वस्तूनि संपादयेदहनि; वार्धकोपयोज्यमर्थजातं यौवने संनाहयेत्; पारलौकिकाय श्रेयसे कृत्स्नेऽपि जन्मन्यस्मिन् प्रयस्येन्नर इति तावदस्य श्लोकस्य तात्पर्यम् ।]

व्युत्पन्नो विवेकी च स चक्रवर्ती श्रुतस्यास्य श्लोकस्यार्थं मुहुर्मनसि चिन्तयन् "ऐहिकभोगेषु नास्ति काचिदस्माकं न्यूनता, पारत्रिकाय श्रेयसे तु नाद्य यावदस्माभिः प्रयतितम्, तेनैव हि प्रयत्नेनावश्यं भवितव्यम्; कथमसौ ? कीदृशो भवितुमर्हति ?" इत्येवंविधां चिन्तामन्तरुदञ्चितामनुक्षणमभिवर्धमानां श्रीपूर्णनाम्नः [शेल्वनम्बि] पुरोधसस्सविधे परेद्यवि न्यवेदयत् । विवेकिनां भगवद्भक्तानामग्रेसरस्स पुरोहितः प्राह—'प्रभुवर ! परे पुंसि भक्तिविवर्धनमेव पारत्रिकाय श्रेयसे प्रकल्पेत भूयसे' इति । तन्निशम्य राजा चतुर्विधपुरुषार्थविश्राणनविचक्षणं

परं तत्त्वं निर्धारयितुं कश्चिदभ्युपाय इत्यन्वयुङ्क्त । स च पुरोधाः प्रोचे—नानादेशीयानधिगतभूरिशास्त्रमर्म-सर्वस्वान् विद्वद्वरिष्ठान् समावाह्य तन्मुखेन निर्धारणीयोऽयमंश इति ।

युज्यत इत्यभिनन्दन्नवनीपतिरथ वित्तमपरिमितमेकस्यां सञ्चिकायामाबद्ध्य विद्याशुल्कतयोपकल्प्य सभामण्डपे क्वचिदुत्तुङ्गस्थाने प्रतिष्ठाप्य सर्वतः प्रथयामास "अत्रागत्य वैदिकप्रमाणवृन्दोपन्यसनपूर्वकं यथायथं परं ब्रह्म निर्धारयतामुत्सङ्गे विद्याशुल्कग्रन्थिरसौ स्वयमुपनंस्यति तावत्" इति । प्रथामिमामवजग्मिवांसः पण्डित-परिवृढा भूयांसो विशेषतो नानादिगन्तत उपेत्य वादकेलिसन्नद्धास्संवीवभूवुः ।

तदात्वे श्रीधन्विनव्यनगरक्षेत्राधिनाथो वटपत्रशायी भगवान् श्रीविष्णुचित्तसूरिमुखतो वेदान्तसिद्धं परं तत्त्वं प्रख्याप्य जगतीमुज्जीवयेयमित्युत्कण्ठामुत्कटामुद्वहन् तस्यैव सूरेस्स्वप्ने दृष्टिपथमुपयात इत्थमनुजग्राह— "स्वामिन्! अत्रभवानद्यैव मथुरापुरीमुपगम्य पाण्ड्यभूपतिपरिकल्पितायां पण्डितपरिषदि श्रीमन्नारायणपारम्यमप्रधृष्यं प्रतिष्ठाप्य प्रभुणा तेन परिक्लृप्तं विद्याशुल्कं च स्ववशीकृत्य समुपायातु" इति । स च विष्णुचित्त एवमुत्तर-मुदैरिरत् 'भगवन्! शास्त्रविज्ञानलवलेशविधुरोऽहमौद्यानिकः कथं नाम विद्वद्वरिष्ठैकसुकरं कृत्यं कर्तुं प्रभवेयम्? खनित्रादिसाध्ये प्रत्नलेऽपि कर्मणि नियुक्तोऽहं नियतं तन्निर्वर्तयितुं निपुणस्स्याम्; स्वाधिकारवैदेशिके कर्मणि कथं नु मां नियोजयति श्रीमान्?" इति । भगवांस्तु "नैष विचारो युक्तो भवतः; आज्ञामात्रपरतन्त्रो गन्तुमर्हति भवान्; कार्यनिर्वाहस्तु ममैव भरः" इत्यभिधाय सद्यस्तिरोहितः ।

अथ शयनादुत्थितो विष्णुचित्तो विस्मयविवशो भगवदनुकम्पामधिकृत्य धन्यवादमाम्रेडयन् यथाभग-वदाज्ञमाचरितुमवधार्य प्रस्थितः पाण्ड्यराजपण्डितपरिषदं प्रययौ । उपागतमेनमुद्वीक्ष्य सपुरोहितस्सम्राट् * रूपमेवास्यैतन्महिमानं व्याचष्टे * इत्यनुसंदधानो दिव्यतेजःपुञ्जभूम्ना वैभवविशेषमभ्यूह्य, अभ्युत्थानप्रणामाद्यु-च्चावचोपचारप्रकाशनेन महत्तरं गौरवमाविष्कुर्वन् सभामण्डपमध्ये महति सिंहासने तमिममुपावीविशत् । एवं नाम प्रकटितां बहुमाननामवलोक्य साभ्यसूया अन्ये सर्वेऽपि विद्वद्वरेण्या "अपरिमितशास्त्रवैदुष्यविभूषितानस्मान् अवज्ञापात्रभावं प्रापय्य यथाजातस्य कस्यचिदेवं नाम सभाजनं सर्वथाऽप्यस्थाने" इत्यधिचिक्षिपुः । तान्यधिक्षेप-वचनानि मनागपि कर्णकुहरमप्रवेशयन्तौ पुरोहितप्रभुवरौ सिंहासनोपरि देदीप्यमानदिव्यतेजसं विष्णुचित्तमुद्दिश्य 'स्वामिन्! परमया करुणया परतत्त्वनिर्णयमातनोतु तत्रभवान् प्रमाणोपन्यसनपूर्वकम्' इति सविनयादरं संप्रार्थयेताम् ॥ प्रार्थितश्चैवमेष महात्मा स्वमसंदृष्टस्य सर्वेश्वरस्य कमलापतेः करुणानिर्भरनवग्रहमनुग्रहमेकमेव प्रबल मवलम्बमाकलयन् तत्पादारविन्दयुगलपरिचिन्तनपावनमानसस्सन् करतलामलकीकृतसर्वशास्त्रार्थस्सर्वज्ञसार्वभौमो भवन् श्रुतिस्मृतीतिहासपुराणाद्यशेषप्रमाणवृन्दादामितानि वचनान्युपादाय तदर्थांश्च स्वयमेव आक्षेपसमाधानैस्सह सयुक्तिकं संप्रदर्श्य परमतप्रक्रियाश्च समूलमुन्मूल्य, श्रीवैष्णवदर्शनस्यैव प्रामाणिकतां श्रीमन्नारायणस्यैव परदैवतां तच्छरणागतेरेव परमहिततां च सुविशदमतिचारुतरमप्रधृष्यमुपन्यस्य प्रतिष्ठापयामास, निमज्जयामास च निरवधिकविस्मयसंतोषसागरे निखिलानपि प्रेक्षकजनान्, नमयामास च कृताधिक्षेपविद्वज्जनशिरांस्यपि ॥

अथ वल्लभदेवः प्रभुवरः सपुरोहितो विष्णुचित्तसूरेर्ज्ञानवैभवमवाङ्मनसगोचरमतिमात्रं प्रशस्य तत्पा-दारविन्दपरिसरे साष्टाङ्गं प्रणिपतन् प्रैक्षत च तस्यैव सूरेरुत्सङ्गे स्वयमुपनतं तं विद्याशुल्कग्रन्थिम्, यः खल्वात्मना

स्थूणाशिरसि पुरा स्थापित आसीत्। सूरिवरोऽपि भगवत्कृपातिशयप्रकाशकमनन्यलभ्यमेनं द्रव्यग्रन्थिमात्मसादकरोत्। विद्वांसोऽप्यथ सर्वे विष्णुचित्तपादारविन्दपांसुपवित्रीकृतशिरस्काः शिष्यभावं प्रकाशयन्त उच्चैःस्तुत्वा कृतकृत्या अभूवन्। महामहिमशालिनोऽस्य सूरिवरस्य वीथीषु विजययात्रोत्सवं सुमहता समारोहेण संविधातुकामा महाराजप्रभृतयस्सर्वेऽपि तमिममभ्यर्थ्य हस्तिमस्तकमधिरोप्य,

जयति जयति विद्वान् भट्टनाथो महात्मा जयति जयति मान्यो विष्णुचित्तो महीयान्।
जयति जयति धन्यो दिव्यसूरिर्गरीयान् जयति जयति तत्त्वस्थापनाचार्यवर्यः॥
जयति जयति लक्ष्मीनाथकारुण्यपात्रं जयति जयति विद्वन्मस्तकन्यस्तपादः।
जयति जयति सूरिस्सर्ववित्सार्वभौमो जयति जयति तत्त्वज्ञानिनामग्रगण्यः॥

इत्येवमेवं समन्ततो विजयघोषणा विरचयन्तः प्रावीवृतन्नप्रमेयमहोत्सवम्। ततःप्रभृति भट्टनाथ इति विरुदमस्य जगति विशेषतः पप्रथे। श्रीचिह्नकाहलीशङ्खभेरीनिनदातिशयसनाथं जैत्रयात्रोत्सवमनुपममनुभवति सति भट्टनाथे सूरिप्रवरे, तनूभवस्य महोत्सवं दिदृक्षू मातरपितराविव दिव्यदम्पती श्रीवैकुण्ठदिव्यधाम्नः पतगराजमारुह्य समुपेत्य परमाद्भुतं दर्शनमग्रतो दिदिशतुः। दिव्येन चक्षुषा सानन्दमीक्षमाणो दिव्यसूरिवरेण्यो विष्णुचित्तो मनागप्यवलेपमनुद्वहन् परमभक्तिसीम्नि स्थितो भगवतो ज्ञानशक्त्यादिगुणगणान् विस्मृत्य, सौन्दर्यसौकुमार्यलावण्यादीनेव गुणान् भृशमनुसन्दधानः 'हा हन्त हन्त! अकालकाल्ये दिव्ये धाम्नि परं विराजितुमर्हो भगवान् एवं नाम कालसाम्राज्यास्पदेऽत्र प्रकृतिमण्डले दृष्टिपथमुपयातः! आः! किमप्यवद्यमस्य भवेत्किमु!' इति प्रेमभूम्ना भृशमतिशङ्कमानो विह्वलविक्लवहृदयस्तद्दिव्यमङ्गलविग्रहस्याखिलहेयप्रत्यनीककल्याणैकतानस्यापि नित्यश्रियं नित्यमङ्गलमाशंसमानस्तस्यैव हस्तिनः स्कन्धे निषण्णस्सपदि * पल्लाण्डु पल्लाण्डु * [जय विजयीभव] इत्युपक्रम्य मङ्गलान्याशास्त। भगवांश्च कृतकृत्यः परमसंतुष्टो निजं धाम विजगाहे॥

अथ च भट्टनाथो मुनिवर आत्मीयपादारविन्दप्रणिपतितं पाण्ड्यकुलपतिं नरपतिमतिशिशिरकटाक्षणेनानुगृह्य भागवतगोष्ठीगरिष्ठमाकलय्य निजावसथदिव्यदेशमासाद्य राजपरिषदि समुपलब्धमखिलमपि शुल्कद्रव्यं श्रीवटपत्रशायिभगवन्मन्दिरगोपुरनिर्मापणकैङ्कर्ये विनियुज्य यथापुरं कुसुमोपहरणकैङ्कर्यनिरतोऽध्यात्मशास्त्रप्रवचनेन शिष्यमण्डलीस्समुज्जीवयन् दिगन्तविसृत्वरविपुलविमलयशाः प्रचकाशे॥

अनेनानुगृहीतं दिव्यप्रबन्धद्वितयं सुप्रसिद्धमहिमशालि प्रथते। १. तिरुप्पल्लाण्डुनामा मङ्गलाशासनदिव्यप्रबन्धो द्वादशगाथात्मकः। २. पेरियाळ्वार् तिरुमोळि [श्रीविष्णुचित्तसूक्त] नामा दिव्यप्रबन्ध एकषष्ट्यधिकचतुश्शत (४६१) गाथात्मकः। तदिदं दिव्यप्रबन्धद्वितयं प्राथमिकसहस्रे प्रथमतो न्यवेशि पूर्वाचार्यैः। श्रीकृष्णावतारगुणचेष्टितानुभवोऽत्र निष्प्रतिद्वन्द्वः परमविलक्षणः प्रथते। विष्णुचित्तो भट्टनाथ इति च नामनी बिभ्राणोऽप्यसौ, महादिव्यसूरिः [पेरियाळ्वार्] इत्येव सुप्रसिद्धं व्यपदेशमश्नुते। कारणं चात्रैवमनुगृह्णन्ति श्रीवरवरमुनीन्द्रा उपदेशरत्नमालायाम्—भगवन्मङ्गलाशासनविषये दिव्यसूर्यन्तरापेक्षयाऽपि भृशमतिशयितमभिनिवेशमावहद्दसौ तत एव महानिति विरुदमुपलेभे—इति॥ ... ... ... *

इति श्रीभट्टनाथसूरिवैभवं समाप्तम्॥



॥ श्रीरस्तु ॥

श्रीपराङ्कुशपरकालयतिवरवरवरमुनीन्द्रेभ्यो नमः । अस्मद्गुरुपरम्पराभ्यो नमः ॥

द्राविडाम्नायव्यपदेश भाजन चतुस्सहस्रसंख्याकगाथात्मकदिव्यप्रबन्धेषु

## प्रथमः प्रबन्धः—तिरुप्पल्लाण्डु नामकः

# ॥ मङ्गलाशासन दिव्यप्रबन्धः ॥



## ॥ तिरुप्पल्लाण्डुदिव्यप्रबन्धावतारिका ॥

सोऽयं दिव्यप्रबन्धः श्रीविष्णुचित्तापरनामधेय श्रीभट्टनाथ योगीन्द्रप्रणीते दिव्यप्रबन्धद्वितये प्राथमिकः । यद्यप्यसौ योगीन्द्रो दिव्यसूर्यवतारपरम्परायां सप्तमः, अथाप्यदसीयोऽयं प्रबन्ध एव द्राविडाम्नायरूपसकलदिव्यप्रबन्धेष्वपि प्राथमिकं स्थानं प्राप्नोति । संस्कृतवेदोपक्रमे यथा नियतं प्रणवानुसन्धानम्, तथा द्राविडवेदोपक्रमे एतस्य दिव्यप्रबन्धस्य पारायणं नियतमिति संप्रदायः । मङ्गलाशासनात्मकत्वादेतस्य प्रबन्धस्य ॥

'पल्लाण्डु' इति मङ्गलाशासनपर्यायः । (तिरु) इति श्रीशब्दपर्यायः । तथा च (तिरुप्पल्लाण्डु) इत्यस्य श्रीमङ्गलाशासनप्रबन्ध इत्यर्थस्सिद्धः । श्रीभागवतम्, श्रीभाष्यमित्यादाविव श्रीशब्दोऽत्र माङ्गलिकः, न तु लक्ष्मीवाचकः । शरदश्शतं विजयीभवेति भगवन्तमुद्दिश्य यन्मङ्गलाशासनं कृतं भट्टनाथमुनिवरेण, तत्प्रतिपादको दिव्यप्रबन्ध इति फलितम् । किमर्थं कदा वा मङ्गलाशासनं कृतमित्येतत्तु मुनिवरस्यास्य वैभवे विशदीकृतम् ।

अवाप्तसमस्तकामत्वेन सर्वरक्षकत्वेन च प्रसिद्धस्य भगवतस्सकाशात् स्वस्य मङ्गलप्रार्थनं खलु युक्तम ; तादृशीं पद्धतिं विहाय, मङ्गलनिधेरेव भगवतो मङ्गलाशासनं कथं कृतमिति केचिदाशङ्केरन् । अत्रैवं समादधते पूर्वाचार्याः । भक्तानां सज्जनानां ज्ञानदशा प्रेमदशेति दशाद्वितयं वर्तते । ज्ञानदशायां रक्ष्यरक्षकभावः व्यवस्थितोऽवतिष्ठते । 'सर्वरक्षको भगवान् ; वयं भगवता रक्ष्याः ; तत्सकाशादस्माभिर्मङ्गलानि प्राप्तव्यानि' इत्यनुसन्धानं तन्मूलकप्रार्थनादिकं च ज्ञानदशायां प्रवर्तते । प्रेमदशायां तु विपर्यासेन भवति—रक्ष्यरक्षकभावानुसन्धानं विपर्यस्यति । सर्वेश्वरस्य ज्ञानशक्त्यादिगुणगणान् विस्मृत्य तदीयसौन्दर्यलावण्यसौकुमार्यादिकमसकृदनुसन्धाय द्रवीभवन्मनसां प्रेमपरवशानां भगवति रक्षकत्वाध्यवसायः प्रचुरो भवति । भगवन्तं रक्षितुं प्रयतन्ते ते । अखिलहेयप्रत्यनीककल्याणैकतानेऽपि तस्मिन् भगवति कालदेशादिवैगुण्यवशात् हा हन्त किमप्यवद्यं संभवेत्किमु ! इति शङ्कातङ्काङ्कुरो मनसि भवति प्रीतिरूपापन्नज्ञाननिधीनां महताम् । तयैवातिशङ्कया मङ्गलाशासनप्रवृत्तिरुन्मिषति ॥

दण्डकारण्ये श्रीरामचन्द्रं सेवितवतां महर्षीणां तस्मिन् परमपुरुषत्वप्रतिपत्तिरासीदेवानपाया । तथाऽपि ते प्रेमपारवश्यान्मङ्गलाशासने प्रावर्तन्तेति प्राह प्राचेतसः—* ते तं सोममिवोद्यन्तं दृष्ट्वा वै धर्मचारिणः । मङ्गलानि प्रयुञ्जानाः प्रत्यगृह्णन् दृढव्रताः * इत्यनेन श्लोकरत्नेन ॥

आस्तां तावत्प्राकृतमण्डलवृत्तान्तः । अज्ञानान्यथाज्ञानाद्यवगन्धसहगानायां नित्यविभूत्यां प्रकृष्ट-विज्ञानबलैकधामशेषशेषाशनगरुडप्रमुखा नित्यसूरयोऽपि व्यामुग्धास्सन्तो भगवद्रक्षणदीक्षिता भवन्तीति प्रत्यग्दशा पश्यन्तो विपश्चितो व्याहरन्ति । तथा च श्रीगुणरत्नकोशे भट्टपादाः—*स्नेहात् अस्थानरक्षाव्यसनिभिरभयं शार्ङ्गचक्रासिमुख्यैरित्यादिकमभिदधिरे । एवं च भगवतो मङ्गलाशासनं स्वरूपानुबन्धीति सिद्धम् ॥ एवंविध-मङ्गलाशासनरुचिर्यद्यपि श्रीपराङ्कुशपरकालादीनामन्येषामपि दिव्यसूरीणामस्ति, तथाऽपि श्रीभट्टनाथसूरेरस्यैव सेयमतिशयिनीति सुगममैदम्पर्येण पृथक्प्रबन्धप्रणयनात् । महायोगीति संज्ञाऽप्यस्य एतन्निबन्धनैव हि ॥

अस्मिन् दिव्यप्रबन्धे द्वादश गाथास्सन्ति । आद्यगाथाद्वयेन सपरिवारस्य भगवतो मङ्गलान्याशास्ते स्वयं मुनिवरः । अथ तृतीयचतुर्थपञ्चमगाथाभिः क्रमेण भगवत्प्राप्तिकामुकान् कैवल्यार्थिन ऐश्वर्यार्थिनश्च भगव-न्मङ्गलाशासनार्थमाह्वयति । आहूतानां तेषां त्रिविधानामधिकारिणां वाचा मङ्गलाशासनं निबध्नाति षष्ठसप्तमाष्टम-गाथाभिः क्रमशः । तैस्संमिलितस्य स्वस्य वाचा मङ्गलाशासनं निबध्नाति नवमदशमैकादशगाथाभिः । अथ द्वादशी गाथा फलश्रुतिः —इति विवेकः ॥ ... ... *

॥ इत्यवतारिका समाप्ता ॥

---

# ॥ अथ मङ्गलाशासनदिव्यप्रबन्धप्रारम्भः ॥

## श्रीविष्णुचित्तमुनीन्द्रैरनुगृहीता तिरुप्पल्लाण्डु–मङ्गलाशासनकृतिः ॥

---

(गाथा.) पल्लाण्डु पल्लाण्डु पल्लायिरत्ताण्डु * पलकोडि नूरायिरम्
मल्लाण्ड तिण्डोळ् मणिवण्णा ! * उन् शेवडि शेव्वि तिरुक्काप्पु ॥ १ ॥

[ द्राविडगाथायाः संस्कृतविवर्तरूपा छाया । ]

जय विजयीभव जय विजयीभव, जयजय शरदश्शतशतमयुतम् ।
जयजय मल्लनिहन्तृभुजोज्ज्वल ! मणिवर्ण ! तवांघ्रिरुचिर्जयतात् ॥ १ ॥

## – मूलगाथायाः प्रतिपदार्थविवरणम् –

| | | | |
|---|---|---|---|
| मल्ल आण्ड तिण् तोळ् मणि वण्णा | चाणूरमुष्टिकादिमल्लवधस-मर्थबलिष्ठभुजशालिन् इन्द्र नीलमणिसवर्णहरे ! | पल्लाण्डु पल्लाण्डु पल्लायिर त्ताण्डु पलकोटि नूरु आयिरम् | जयविजयीभव शरदश तम् ; जयविजयीभव शर दस्सहस्रम् ; |
| | | उन् शेवडि शेव्वि तिरु काप्पु | भवदीयपादारविन्दसौन्दर्यं च जयतु सुचिरम्. |

(विशेषविवरणम्।) भयशङ्कया भट्टनाथो मङ्गलाशासने प्रवृत्त इति जानन् भगवान् 'हा हन्त कुत एवमसावस्थाने व्यामुह्यति; अप्रतिमभुजबलशालिनोऽपि शत्रून् अनायासेन निरसितुं क्षमं देहबलमस्माकमस्तीति न जानातीव सूरिरसौ; तादृशं बलं यदि वयमस्मै प्रदर्शयेम, अथासौ प्रशान्तभयो मङ्गलाशासनादुपरमेत्' इति मन्यमानः—पुरा कृष्णावतारे स्वहननार्थं कंसेन प्रेरितान् चाणूरमुष्टिकादिमल्लवर्गान् येन भुजबलेन निजघान, तदेवाधुना प्रादर्शयदस्मै। भयनिवृत्तये प्रदर्शितं तत् हन्त भयविवृद्धये प्रकल्पतेस्म विष्णुचित्तस्य। यदि कोऽपि पुमान् महावीरो महाशूरश्च स्यात् तस्य जननी अवश्यमेव खलु भयविह्वला स्यात्—'वीरः शूरश्च सोऽयं निर्भयं युद्धसंनद्धो भवेद्यदि तर्हि कालदेशादिदौर्गुण्यवशात् किमप्यत्यहितमुदियात्किमु!' इति। तथैवायं सूरिरपि मल्लहननकुशलभुजबलमधिकृत्य भीतभीतः पुनरपि मङ्गलान्याशास्ते। पादारविन्दे उद्दिश्यात्र क्रियमाणं मङ्गलाशासनं कृत्स्नदिव्यमङ्गलविग्रहमङ्गलाशासनपर्यायमुक्तं वेदितव्यम्। स्तनन्धयप्रजानां मातुः स्तन इव भक्तवर्गस्य भगवत्पादारविन्दे परमुद्देश्यताबुद्धिर्नैसर्गिकी ॥ ... ... *

(गाथा.) अडियोमोडुम् निन्नोडुम् पिरिविन्नि आयिरम्पल्लाण्डु *
वडिवाय् निन्वलमार्पिनिल् वाळ्हिन्न मङ्गैयुम् पल्लाण्डु *
वडिवार् शोदि वलत्तुरैयुम् शुडराळियुम् पल्लाण्डु *
पडैपोर् पुक्कु मुळङ्गुम् अप्पाञ्जशन्नियमुम् पल्लाण्डे ॥ २ ॥

[छाया] स्वामिन्! दासजनैस्सह स्थितिरियं जेजेतु ते शाश्वती
वक्षःपीठविभूषिणी विजयतां पद्मा च ते प्रेयसी।
जीयाद्दक्षिणपाणिमण्डनमणिः ज्योतिर्मयश्चक्रराट्
जीयाद्युद्धमहीविसृत्वररवस्ते पाञ्चजन्योऽपि सः ॥ २ ॥

| | | | |
|---|---|---|---|
| अडियोमोडुम् निन्नोडुम् पिरिवु इन्नि आयिरम पल्लाण्डु | (भगवन्!) दासभूतानामस्माकं भवतश्च नित्यसंश्लेषो नित्यमङ्गलमश्नुताम्; | वडिवु आरू शोदि वलत्तु उरैयुम् शुडरू आळियुम् पल्लाण्डु | भवदीयदिव्यमङ्गलविग्रहव्यापिज्योतिःपुञ्जो दक्षिणपाणिस्थितः तेजिष्ठो हेतिराजोऽपि चिरं विजयताम्; |
| वडिवु आय् निन् वलमर्पिनिल् वाळ्किन्न मङ्गैयुम् पल्लाण्डु | भवतोऽप्यतिशयावहा भवत्प्रकारभूता भवदीयवक्षस्स्थलनित्यनिवासिनी श्री महालक्ष्मीश्च नित्यमङ्गलशालिनी भूयात्; | पडै पोर् पुक्कु मुळङ्गुम् अ पाञ्चशन्नियमुम् पल्लाण्डु | सेनासनाथयुद्धरङ्गे प्रविश्य जयघोषणामातन्वानः श्री पाञ्चजन्योऽपि नित्यमङ्गलशाली भूयात् ॥ |

(वि.) भगवत एव समृद्धिमाशंसमान एष सूरिवरः कथं प्रथमपादे स्वस्यापि समृद्धिं कामयत इति चेत्; भगवतो नित्यं मङ्गलाशासनार्थं स्वस्य सद्भावश्चावश्यकः खलु। स्वात्मनोऽभावे मङ्गलाशासनविच्छेदेन

भगवतः किमप्यवद्यमुत्पद्येतेति भीतिरस्य स्वाभाविकी । अतश्चात्र स्वस्थैर्यप्रार्थनमपि भगवन्मङ्गलाशासनशेषभूतमेवेति ध्येयम् । द्वितीयचरणेन श्रीमहालक्ष्म्या मङ्गलाशासनं क्रियते । लोके पुष्पं यथा सौरभेणोत्कृष्यते, यथा च रत्नं प्रभया, तथा सर्वेश्वरोऽपि भगवान् लक्ष्मीसंबन्धवशादेव स्वयं समुत्कर्षं विन्दतीति सांप्रदायिकी प्रथा । अनुजगृहुश्च भट्टपादाः श्रीगुणरत्नकोशे—* तव शार्ङ्गदीशं स्पृशति कमले मङ्गलपदं तवेदं नोपाधेरुपनिपतितं श्रीरसि यतः । प्रसूनं पुष्यन्तीमपि परिमलर्द्धिं जिगदिषुः न चैवन्त्वादेवं स्वदत इति कश्चित्कथयते ॥ * इति, * अपाङ्गा भूयांसो यदुपरि परं ब्रह्म तदभूत् * इति च । इममर्थमिह स्फोरयति [द्वितीयपादस्थम्] लक्ष्मीविशेषणम् ॥

अथ तृतीयचतुर्थचरणाभ्यां सुदर्शनपाञ्चजन्ययोर्मङ्गलाशासनं विरच्यते । आयुधकोटिप्रविष्टयोरपि तयोराभरणकोटावेवानुसन्धानं भक्तप्रवराणां हृदि समुन्मिषति । अत एव, एताभ्यां दिव्याभरणाभ्यां विलसन्त्यास्सुषमाया अनपायो भूयादिति मङ्गलमाशास्यते ॥ ... ... (२)

(गाथा.) वाळाळ्पट्टु निन्रीरुळ्ळीरेल् वन्दु मण्णुम् मणमुम् कोळ्मिन् *
कूळाळ्पट्टु निन्रीर्हळै येङ्गळ् कुळुविनिल् पुहुदलोट्टोम् *
एळाट्कालुम् पळिप्पिलोम् नाङ्गळ् इराक्कदर्वाळ् * इलङ्गै
पाळाळाह प्पडैपोरुदानुक्कु प्पल्लाण्डु कूरुदुमे ॥ ३ ॥

[छाया] यद्युज्जीवनकाङ्क्षिणो भवथ तर्ह्यागम्यतां सादरं
नैवान्नार्थिजनः कदाऽपि भजते गोष्ठ्यां प्रवेशं तु नः ।
अस्माकं निरवद्यता सुविदिता ह्यासप्तसंतानतः
लङ्काध्वंसविधायिनो रघुपतेराशास्महे मङ्गलम् ॥ ३ ॥

| | | | |
|---|---|---|---|
| वाळाळ् पट्टु निन्रीरुळ्ळीरेल् | उज्जीवनहेतुभूते भगवद्दास्ये निष्ठागरिष्ठा यदि भो! वर्तध्वे | नाङ्गळ् एळाट्कालुम् पळिप्पिलोम् | [निशमयत चास्मदीयं विशेषम् ] वयं तावत् सप्तमिस्सन्ततिभि रनवद्यास्स्मः । |
| वन्दु मण्णुम् मणमुम् कोळ्मिन् | तर्हि भवन्तोत्र समागत्य अस्माभिस्सह संमिलिता भूत्वा यथायोग्यं कायिकं कैङ्कर्यं कुरुत ; मानसिकं च अभिमानं वहत ; | इराक्कादर् वाळ् इलङ्गै पाळाळाह पडै पोरुदानुक्कु पल्लाण्डु कूरुदुम् | रक्षोगणावसथभूतां लङ्कां शून्यां कर्तुं (वानर) सेनया युद्धं प्रवर्तितवतो रामभद्रस्य मङ्गलाशासन मेवास्माकं दिनचर्या ॥ |
| कूळ् आळ्पट्टु निन्रीर्हळै एङ्गळ् कुळुविनिल् पुहुदलोट्टोम् | केवलं कुक्षिभरणार्थमन्यशेषभूतान् जनान् अस्मदीयगोष्ठ्यां न वयमङ्गीकरिष्यामः ; | | |

(वि.) दिव्यसूरिरसौ स्वयमेकाकी सन् मङ्गलाशासनं कृत्वा कथं नु तृप्तो भवेत्? * एकः स्वादु न भुञ्जीतेति चानुसन्दधानः भूयसो भगवन्मङ्गलाशासने सहायभूतान् वरीतुमैच्छत्। जगति कतिविधा अधिकारिणस्सन्तीति परामृशतिस्म; ऐश्वर्यार्थिनः, आत्मानुभवरूपकैवल्यार्थिनः, भगवदनुभवार्थिन इति एवंविधा अधिकारिणस्सन्तीति समैक्षत। ऐष्वधिकारिषु ऐश्वर्यकामाः कैवल्यार्थिनश्च यद्यपि प्रयोजनान्तरपरा एव, तथाऽपि क्षुद्रप्रयोजनार्थमपि वा भगवन्तमाश्रयन्ते ते, भगवन्तं स्तुत्वा प्रार्थयन्ते च—इति कोऽपि विशेषस्तेष्वस्ति खलु। अतस्तानपि कथञ्चिदुपदेशेन विनेतुमैच्छदसौ सूरिः। भगवत्प्राप्तिकामानुत्तमाधिकारिण इव तानपि क्षुद्राधिकारिणो मङ्गलाशासनसाहाय्यार्थमाकारयितुमिच्छन्नसौ प्रथमतो भगवच्चरणार्थिनो ज्ञानिन आह्वयति। वस्तुतस्सर्वोत्कर्षशालिनां स्वसजातीयानां तेषामाह्वानमग्रिमं युक्तमेव खलु।

भगवद्विषयव्यतिरिक्तेषु प्रापञ्चिकविषयेषु क्रियमाणा शेषवृत्तिः स्वरूपानुरूपा न भवति। अत एव क्लेशरूपा च भवति। क्लेशं सोढ्वा करणेऽपि अत्यल्पफलप्राप्तये परं सा कल्पते। भगवद्विषयकं कैङ्कर्यं तु स्वरूपानुरूपम् अत एव सुकरम् अविलम्बेन भगवन्मुखोल्लासहेतुभूतं शाश्वतिकफलप्रदं च प्रथत इति तादृशे भगवद्दास्ये निष्णातान् "उज्जीवनहेतुभूतभगवद्दास्यनिष्ठाग्रगरिष्ठ" पदेन व्यपदिशतीति यत् तदिदमतिचारु। एतादृशोऽधिकारिणोऽत्यन्तं दुर्लभा इति सूचयति यद्यालिङ्गनम्। "यदि भो वर्तध्वे" इति खल्वभिहितम्।

भगवदर्चावतारस्थलेषु दिव्यदेशेषु सकलविधकैङ्कर्याचरणस्य स्वरूपप्राप्तत्वेन मुमुक्षून्प्रति "यथायोग्यं कायिककैङ्कर्यं कुरुते"ति कथितम्। परभ्रामकतया बहिः कैङ्कर्यानुष्ठानाभिनयतः किं सेत्स्यति? हार्दाभिमानवहनस्यैवावश्यकत्वेन "मानसिकं चाभिमानं वहते"ति कथितम्।

मुमुक्षूणां समाजे बुभुक्षवोऽपि मिश्रास्सन्तो मोहयन्ति जगदिति प्रत्यक्षलक्ष्यमिदम्; तादृशानुदरंभरिजनानवलोकितवान् विष्णुचित्तसूरिस्तान् प्रतिषेधति "केवलं कुक्षिभरणार्थमन्यशेषभूतान् जनानस्मदीयगोष्ठ्यां न वयमङ्गीकरिष्याम" इति। युष्माकमस्मद्गोष्ठीप्रवेशतो न कोऽपि लाभस्सेत्स्यतीति भावः। नीचसेविनो जना नीचानेवानुधावन्तु; मा स्म पुनरत्रागच्छन्निति तावददसीयोऽभिसन्धिः। ननु परमकारुणिकोऽयं सूरिवरेण्यस्तादृशानपि दुष्टानाहूय शिक्षयित्वा स्वीकृत्य पवित्रीकर्तुं ह्यर्हति; किमर्थं तान् प्रतिषेधतीति चेत्, एतादृशेन गर्हणेन मुमुक्षूणामतिशयितवैभवख्यापनमेव फलति। बुभुक्षूणां सर्वथा धिक्कारो नैवाभिमतस्सूरिवरस्यास्य। तादृशा अपि वराका एतद्दिव्यप्रबन्धानुसन्धानेन पवित्रा भवन्त्विति हि सोऽयमभिसंधत्ते। अन्ततः फलश्रुतिगाथया तद्व्यक्तमेव। अतोऽस्य परमकारुणिकताया न काऽपि क्षतिः। एवंविधगर्हणोक्त्या बुभुक्षवोऽपि व्रीडिता मुमुक्षुभावं भजन्तामित्येतावानभिसन्धिरिह ग्राह्यः।

"अस्मदीयगोष्ठ्यां न वयमङ्गीकरिष्याम" इति कथितवानसौ स्वकीयगोष्ठ्या अभ्यर्हितत्वे हेतुं निरूपयति—गाथाया उत्तरार्धेन। [वयं तावत् सप्तभिस्संततिभिरनवद्याः स्मः] उपायान्तरपरत्वमुपेयान्तरपरत्वमित्यादिरूपाण्यवद्यानि लेशतोऽपि नास्मासु लब्धावकाशानीत्यर्थः। अथ स्वकीयवृत्तिवैलक्षण्यमपि प्रतिपाद्यते—रामभद्रस्य मङ्गलाशासनमेव चास्माकं नित्यचर्येति। रावणवधानन्तरं विजयश्रियमधिकृत्य मङ्गलाशासनमवश्यकर्तव्यमपि तदात्वे न केऽपि चक्रुः। तां न्यूनतां परिहर्तुं वयमिदानीं मङ्गलान्याशास्महे तदेवापदानमधिकृत्य।

अत एवंविधवृत्तिवैलक्षण्यशालिनामस्माकमभ्यर्हितायां गोष्ठ्यामनीदृशा उदरंभरयो न प्रवेष्टुमर्हन्ति । ये तावदुज्जि-जीविषव: ते काममागत्य सानन्दं प्रविशन्तु—इत्युक्तं भवति ॥ ... ... (३)

(गाथा.) एडुनिलत्तिलिडुवदन्मुन्नम् वन्दु एङ्गळ् कुळाम् पुहुन्दु *
कूडुमनमुडैयीर्हळ् वरम्बोळिवन्दोल्लैक्कूडुमिनो *
नाडुनगरमुम् नन्गरिय नमो नारायणाय वेन्नु *
पाडुमनमुडैप्पत्तरुळ्ळीर् वन्दु पल्लाण्डु कूरुमिने ॥ ४ ॥

[छाया] कैवल्याह्वयमुक्तिदेशगमनात्प्रागस्मदीयैस्सभं
संश्लेष्टुं यदि काङ्क्षथ स्वनियमं संत्यज्य भोस्त्वर्यताम् ।
श्रीनारायणमन्त्रराजमवनौ सर्वत्र गातुं रुचिः
यद्यास्ते भवतां, समेत्य भगवद्भद्रावलीं गायत ॥ ४ ॥

| | | | |
|---|---|---|---|
| एङ्गळ् कुळाम् पुहुन्दु कूडुमनम् उडैयीर्हळ् | (कैवल्यमोक्षप्रेप्सया क्रियमाणोपासना भो जनाः !) परिपूर्ण भगवदनुभवकामानामस्माकं गोष्ठीं प्रविश्य यद्युज्जिजीविषथ ; | ओळ्ळै कूडुमिनो ; | सरभसमागत्य समाजमस्मदीयं प्रविशत; |
| | | नाडुम् नगरमुम् नन्गु अरिय | (अथ च) प्राज्ञपामरविभागविरहेण सर्वेऽपि यथा युष्माकमुत्कर्षमवगच्छेयुस्तथा |
| एडु निलत्तिल् इडुवदन् मुन्नम् वन्दु | हेयतम कैवल्य स्थान प्राप्तितः प्रागेव | नमो नारायणायवेन्नु पाडु मनमुडै पत्तरुळ्ळीर् | श्रीमदष्टाक्षरमहामन्त्रसंकीर्तनप्रवणभक्तगोष्ठीनिविष्टा भूत्वा |
| वरम्बु ओळि वन्दु | आत्मानुभवमात्रकामनारूपाम् आत्मीयां दुर्व्यवस्थामपाकृत्य | वन्दु पल्लाण्डु कूरुमिन् | समेत्य भगवन्मङ्गलाशासनमनुतिष्ठत ॥ |

(वि.) अथास्यां गाथायां प्रकृतिवियुक्तात्मानुभवकामुकानां कैवल्यार्थिनां भगवन्मङ्गलाशासनार्थमाह्वानं निबध्यते । अधस्तनगाथायामुदरंभरयो यथा धिक्कृतास्तथैवैतेषामपि केवलानां धिक्कारो यद्यप्यावश्यकः, तथाऽपि कैवल्यरूपस्वप्रयोजनसिद्धयेऽप्यमी भगवन्तमेव खलु भजन्ते इति संतोषभूम्ना समाह्वयतीमान् क्रमश उपदेशैस्संशोधयितुकामस्सूरिवरोऽसौ ।

मूले क्षुद्रस्थानप्रापणात्पूर्वमागच्छतेत्येव वर्तते, न तु कैवल्यवाचकशब्दप्रयोगोऽस्ति यद्यपि, तथाऽपि प्रकरणबलात् कैवल्यविवक्षयैव "क्षुद्रस्थान" पदप्रयोगः कृतोऽस्तीति सुगमम् । * भोगा इमे विधिशिवादिपदं च किं च स्वात्मानुभूतिरिति या किल मुक्तिरुक्ता । सर्वं तदूपजलजोपममहं जुगेय हस्त्यद्रिनाथ ! तव दास्यमहारसज्ञः * [वरदराजस्तवे ८०] इति श्रीकूरनाथगुरुवरोक्तरीत्या स्वात्मानुभूतिरूपमोक्षप्राप्तौ जातायाम् अथ पुनरावृत्तिविहीनात्तस्मात् स्थानान्निर्गमनं सर्वथा दुश्शकमेव खलु । निरतिशयभगवदनुभवप्रच्युतिर्यावदात्मभाविनी

खलु भवित्री । अतस्तादृशदुर्गतिप्राप्तेः प्रागेव सत्वरमागच्छतेत्याह्वानमिदं युक्तरूपमावश्यकं च । विफलो हि गते जले सेतुबन्धोद्यमः ।

"आत्मानुभवमात्रमस्माकं पर्याप्तम्; भगवदनुभव आस्तां नाम दूरे" इति या खलु दुर्व्यवस्था निबद्धाऽमीभिः, सा प्रथमतो हातव्येति कथ्यते "आत्मीयां दुर्व्यवस्थामपाकृत्ये" त्यनेन । "ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्" [गीतायाम्] इत्युक्तरीत्या कैवल्यनिष्ठाः स्वाभीष्टसिद्धये प्रणवमात्रोच्चारणनिरता भवन्ति; इतःपरं तु स्वाधिकारानुरूप्येण कृत्स्नस्यापि श्रीमदष्टाक्षरमहामन्त्रस्योद्घोषणममीषामावश्यकमासीत्; अत एवोच्यते "श्रीमदष्टाक्षरमहामन्त्रसंकीर्तनप्रवणभक्तगोष्ठीनिविष्टा भूत्वे"ति । एवंविधविलक्षणवाचिकव्यवहारेणैव प्राज्ञाः परे च ज्ञास्यन्त्यमीषाममिनवमतिशयमिति सुष्ठूक्तम् ॥ ... ... (४)

(गाथा.) अण्डक्कुलत्तुक्कदिपतियाहि अशुररिराक्कदरै *
इण्डैक्कुलत्तै येडुत्तुक्कळैन्द इरुडीकेशन्तनक्कु *
तोण्डक्कुलत्तिलुळ्ळीर् वन्दडितोळुदु आयिरनामम् शोल्लि *
पण्डैक्कुलत्तैत्तविर्न्दु पल्लाण्डु पल्लायिरत्ताण्डेन्मिने ॥ ५॥

[छाया] अण्डौघाधिपतिं नमाम इति वा दैतेयरक्षोगण-
प्रध्वंसैकपटुं नमाम इति वा संकीर्तयन्तोऽत्र भोः ।
अन्नार्थार्थिजनाः! सहस्रमपि तन्नामानि संकीर्त्य त-
त्पादाब्जे प्रणिपत्य गायत शुभं प्रच्याव्य पूर्वं कुलम् ॥ ५ ॥

| | |
|---|---|
| अण्डक्कुलत्तुक्कु अदिपति आहिय इरुडीकेशन् तनक्कु तोण्डक्कुलत्तिल्ळ्ळीर् | "परस्सहस्राणामण्डराशीनामधिपतये हृषीकेशाय नमः" इति सततं जपित्वा अपूर्वैश्वर्यकामनां प्रकाशयन्तो भोभो उपासकाः! |
| अशुरर् इराक्कदरै इण्डैकुलत्तै एडुत्तु कळैन्द इरुडीकेशन् तनक्कु तोण्डक्कुलत्तिल् उळ्ळीर् | "असुरराक्षसदुर्वर्गनिहननिपुणाय हृषीकेशाय नमः इति सततं जपित्वा भ्रष्टैश्वर्यकामनां प्रकाशयन्तो भोभो उपासकाः |
| पण्डै कुलत्तै तविर्न्दु वन्दु अडि तोळुदु | यूयं भगवदनुभववैमुख्यरूपां पुरातनीं स्थितिमपहायअस्माभिस्सह मिलित्वा भगवत्पादारविन्दे प्रणम्य |
| आयिर नामम् शोल्लि | सहस्रं दिव्यनामानि संकीर्त्य |
| पल्लाण्डु पल्लाण्डु एन्मिन् | सदा मङ्गलाशासनप्रवणा भवत ॥ |

(वि.) अस्यां गाथायामैश्वर्यार्थिनामाह्वानं निबध्यते, ऐश्वर्यार्थिनो हि द्विविधा भवन्ति—भ्रष्टैश्वर्यकामा अपूर्वैश्वर्यकामा इति । * चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन ! । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च

भरतर्षभ !" इत्यस्मिन् गीताश्लोके आर्तपदेनाभिहितो भ्रष्टैश्वर्यकामः, अर्थार्थिपदेनाभिहितः अपूर्वैश्वर्यकामः। तथा च गीताभाष्यम्—"आर्तः—प्रतिष्ठाहीनः भ्रष्टैश्वर्यः पुनस्तत्प्राप्तिकामः। अर्थार्थी—अप्राप्तैश्वर्यतया ऐश्वर्यकामः। तयोर्मुखभेदमात्रम्। ऐश्वर्यविषयतया ऐक्यादेक एवाधिकारः" इति। एवं नाम द्विविधानामप्यैश्वर्यार्थिनामत्राह्वानं स्पष्टमुपलभ्यते। कथमिति चेत्; 'अण्डाधिपतये नमः' इत्येव सततमनुसन्धातारः. 'असुरराक्षसशत्रवे नमः' इत्येव सततमनुसन्धातारश्च गाथायामस्यामाहूयन्त इति मूले शब्दसंनिवेशत एव सुगमं भवति। ऐश्वर्यस्य चरमावधिभूतमण्डाधिपत्यं ये कामयन्ते ते स्वकीयतादृशकामनां व्यञ्जयितुम् 'अण्डाधिपतये नमः, अण्डाधिपतये नमः' इत्येव नक्तंदिवमनुध्यायन्ति। अण्डाधिपतिर्भगवान् स्वसाम्यापत्तिमनुगृह्णातु मयीति तत्तात्पर्यम्। प्रागेव स्थितमैश्वर्यं दानवयातुधानादिभिरपहृतं पुनरपि ये लिप्सन्ते ते स्वकीयतादृशकामनां व्यञ्जयितुम् 'असुरराक्षसशत्रवे नमः, असुरराक्षसशत्रवे नमः' इति दिवारात्रमावर्तयन्ति। असुरराक्षसनिहननपूर्वकमस्मदीयं प्राक्तनमैश्वर्यमुपलम्भयतु भगवानिति तत्तात्पर्यम्। तथा च सुस्पष्टमभूत् अपूर्वैश्वर्यकामा भ्रष्टैश्वर्यकामाश्च गाथायामस्यामाहूयन्त इति।

एतानाहूय सूरिरसावुपदिशति—हा हन्त भवन्तः स्वयंप्रयोजनतया नाम्नां सहस्रमनुसन्धातुमर्हन्ति; तदेव हि परमानन्दकन्दम्; तादृशमनुसन्धानमपहाय 'अण्डाधिपतिः, असुरराक्षसशत्रुः' इति नामद्वयमात्रकीर्तनं क्षुद्रप्रयोजनकामनयैव खलु भवति वः। नैतद्युज्यते। इतःपरमनन्यप्रयोजना भूत्वा सहस्रमपि नामानि संकीर्त्य गोष्ठ्यामस्मदीयायामन्वयमवाप्य मङ्गलाशासनप्रवणा भवतेति ॥ (५)

(गाथा.) एन्दै तन्दैतन्दै तन्दै तम्मूत्तप्पन् एळ्पडिकाल् तॊडङ्गि *
वन्दु वळिवळियाट्चेय्हिन्ऱोम् * तिरुवोणत्तिरुविळविल्
अन्दियम्पोदिलरियुरुवाहि अरियैयळित्तवनै *
पन्दनैतीरप्पल्लाण्डु पल्लायिरत्ताण्डॆन्ऱु पाडुदुमे ॥ ६ ॥

[छाया] मत्तातोऽथ पितामहोऽस्य जनकस्तत्ताततत्तातत-
त्ताता इत्यधिसप्तपर्वनियताः कैङ्कर्यसंपद्धराः।
श्रोणायां दिवसावसानसमये भूत्वा नृसिंहात्मना
शत्रुं क्षिप्तवते ह्यवग्रहतये भद्रावलीं ब्रूमहे ॥ ६ ॥

| | | | |
|---|---|---|---|
| एन्दै तन्दै तन्दै तन्दै तम मूत्तप्पनेळ्ळु पडि काल्ल तॊडङ्गि वन्दु वळिवळि-आळ्ळॆय्हिन्ऱोम् | (अनन्य प्रयोजना वयम्) अस्मत्ताततत्ताततत्तातत - त्पितामहपारम्पर्येण यथाक्रमं यथाकालं कैङ्कर्याण्यनुतिष्ठामो भगवतः; | अरि उरु आहि | नृसिंहरूपमास्थाय |
| तिरुवोणत्तिरुविळविल्ल | दिव्ये श्रोणानक्षत्रे | अरियै अळित्तवनै | भक्तवैरिणं हिरण्यकशिपुम् ध्वस्तवते भगवते |
| अन्दियम् पोदिल्ल | सायंसन्ध्यायाम् | पन्दनै तीर | तादात्विकदृष्टिदोषाद्यवद्य - परिहृतये |
| | | पल्लाण्डु पल्लायिरत्ताण्डु एन्नु पाडुदुम् | पुनःपुन मङ्गलान्या – शास्महे ॥ |

(वि.) अनन्यप्रयोजना वयम् अस्मत्तातत्तातततातततत्पितामहपारम्पर्येण यथाक्रमं कैङ्कर्याण्यनुतिष्ठामो भगवतः; दिव्ये श्रोणानक्षत्रे सायंसन्ध्यायां नृसिंहरूपमास्थाय भक्तवैरिणं हिरण्यकशिपुं ध्वस्तवते भगवते तादात्विकदृष्टिदोषाद्यवद्यपरिहाराय मङ्गलान्याशास्महे। इति गाथार्थः।

अधस्तात् (३, ४,५) गाथात्रयेणाहूतानां मुमुक्षूणां केवलानामैश्वर्यार्थिनां च श्रीविष्णुचित्तसूरिगोष्ठीसमन्वयः क्रमश इतो गाथात्रयेण तत्तद्वाचा निबध्यते। अस्यां गाथायां मुमुक्षूणामागमनं स्वाधिकारकीर्तनं च तेषां गिरा निबद्धम्। एतेषामाह्वानकाले [तृतीयगाथायाम्] "वयं तावत् सप्तभिस्संततिभिरनवद्यास्स्मः" इति खल्वाह विष्णुचित्तसूरिः। एतादृशोऽतिशयः अस्माकमप्यनपाय इति ते मुमुक्षव आचक्षाणास्समागत्य प्रविशन्ति। भो विष्णुचित्तसूरे! भवतो यादृशो महिमा यादृशी वृत्तिश्चास्ति तादृशो महिमा तादृशी वृत्तिश्चास्माकमप्यस्ति; अतो वयं भवदीयगोष्ठीसमन्वययोग्या एव स्मः; अस्मानङ्गीकरोतु कृपया तत्रभवानित्युक्तं भवति। स्वात्मनाऽऽहूताः केचन मुमुक्षवस्समागच्छन्तीति, त एवं कथयन्तीति च रच्यमानमिदं निबन्धनं विलक्षणोऽनुभवप्रकारः। भक्तवरास्तावदुच्चावचैः प्रकारैः स्वकीयं कालं क्षिपन्ति। तेषु कालक्षेपप्रकारेष्वयमन्यतमः। स्वकीयानाशाप्रवाहानेवं प्रकाशयत्यसौ सूरिवर इति ध्येयम्।

भक्तस्य दानवशिशोः परिपालनाय भद्रां नृसिंहकुहनामधिजग्मुषो भगवतस्तदात्वे मङ्गलाशासनं न केनापि कृतमिति न्यूनतापरिहाराय वयमिदानीं तस्यैव मङ्गलमाशास्मह इत्याचक्षतेऽमी। श्रीनृसिंहो भगवान् स्वातीनक्षत्रे प्रादुर्भूत इति खल्वैतिहासिकाः पौराणिकाश्च कथयन्ति; अत्र तु श्रोणानक्षत्रे तत्प्रादुर्भावकथनं कथं नु युज्यत इति शङ्का भवितुमर्हति। अत्रैवं परिहरन्ति महान्तः; * श्रोणा नक्षत्रं विष्णुर्देवता * इति भगवती श्रुतिराम्नासीत्। श्रीरामस्य श्रीकृष्णस्य श्रीनृसिंहस्य वा प्रादुर्भावनक्षत्रं यत्किमपि वा भवतु; तस्मिन् श्रोणानक्षत्रांशभावानुसन्धानमवर्जनीयमिति ॥ .... .... .... (६)

(गाथा.) तीयिप्पोलिहिन्न शेञ्जुडरालि तिहल् तिरुच्चक्करत्तिन् *
कोयिपोरियाले योत्तुण्डुनिन्रु कुडिकुडियाट्चेय्हिन्रोंम् *
मायप्पोरुपडैवाणनै आयिरन्दोळुम् पोळिकुरुदि
पाय * शुळत्तियवाळिवल्लानुक्कु पल्लाण्डुकूरुदुमे ॥ ७ ॥

[छाया] अत्यर्कानलदीप्रदीप्तिमहितश्रीचक्रलक्ष्माङ्किताः
संतानक्रमशो वयं भगवतः कैङ्कर्यमादध्महे।
मायासङ्गरदक्षबाणभुजसाहस्रं स्रवच्छोणितं
कर्तुं हेतिपतिं नियोजितवते ह्याशास्महे मङ्गलम् ॥ ७ ॥

| | |
|---|---|
| तीयिल् पोलिहिन्र शेम् शुडर् आळि तिहळ् तिरु चक्करत्तिन् कोयिल् पोरि-याले ओत्तुण्डु निन्रु कुडि-कुडि आळ्शेयूहिन्रोम् | चन्द्रसूर्याद्यशेष तेजःपदार्थापेक्षयाऽपि जाज्वल्यमानस्य रक्तज्वालावलीविभूषितस्य वृत्ताकारस्य च श्रीसुदर्शनस्याङ्कनेन चिह्नितभुजा वयम् अनादिसंतत्या भगवत्परिचर्यामारचयामः, |
| मायप्पोरु पडै वाणनै आयिरम् तोळुम् पोळि कुरुदि पाय | (किञ्च) कृत्रिमयुद्धविशारदसेनासनाथस्य बाणासुरस्य भुजसहस्रादपि यथा रक्तस्रावो भवेत्तथा |
| शुळत्तिय आळि वल्लानुक्कु | स्वकीयं सुदर्शन दिव्यायुधम् परिभ्राम्य प्रयुक्तवते भगवते |
| पल्लाण्डु कूरुदुम् | मङ्गलान्याशास्महे ॥ |

(वि.) अधस्ताच्चतुर्थगाथायां कैवल्यार्थिन आहूताः खलु । ते सानुरागं समागत्य स्वान्वयं विज्ञापयन्तीति तेषां वाचा सेयं गाथा निबध्यते। एतेषामाह्वानकाले "प्राङ्नपामरविभागविरहेण सर्वेऽपि यथा युष्माकमुत्कर्षमवगच्छेयुस्तथा समागच्छत" इति खल्वभिहितं श्रीविष्णुचित्तसूरिणा । सैषा च वागमीभिस्सम्यगेव परिपाल्यते स्म । श्रीवैष्णवानामसाधारणलक्षणत्वेन प्रथितं यच्चक्राङ्कनम्, तद्धारणे सति सर्वेऽप्यस्मदीयमुत्कर्षं सम्यगेव जानीयुरिति प्रतिपद्यमाना अथ चक्राङ्कितभुजा भूत्वा समागच्छन्ति; इममतिशयं स्ववाचा च कथयन्ति। चक्राङ्कनकथनं शङ्खाङ्कनस्याप्युपलक्षणं बोध्यम् । श्रीसुदर्शनस्य विक्रमो यस्मिन्नपदाने विजजृम्भे तदपदानमधिकृत्य मङ्गलाशासनं युक्तमिति मन्यमानास्तदप्यारचयन्ति ।

बाणासुरभङ्गकथा चैवम्;—बलिचक्रवर्तिनस्संततौ जातो बाणासुरः कदाचिन्महादेवस्य नटराजस्य नटनमवलोक्य हृष्टः स्वकीयहस्तद्वयेनापि तदनुरूपतया मृदङ्गमार्जनापाकल्यति स्म । ततस्सन्तोषविवशान्तरङ्गः पार्वतीपतिस्तस्य सहस्रबाहुतामनुजग्राह । अग्निमयप्राकारपरिवेष्टितनगरशालितां प्राज्यपराक्रमसंपदं विपुलमैश्वर्यं च वितीर्य स्वयं च स्वकीयपरिवारसमन्वितस्सन् दुर्गद्वारे परिरक्षकपदवीमधितिष्ठन्नवर्तत । अस्य च दानवस्य दुहिता उषानाम्नी कदाचिन्निशीथे केनचिदतिसुन्दरेण पुरुषेण सह स्वस्य संघटितं स्वाप्नं संश्लेषं स्वप्राणसख्यै निवेद्य, श्रीकृष्णस्य पौत्रः प्रद्युम्नस्य पुत्रोऽनिरुद्ध एव स पुमानिति तया सख्या सदुपायज्ञया कथितं विज्ञाय महताऽपि वा प्रयासेन सोऽत्रानेतव्य इति तामेव प्रार्थयत । सा चैवं बलवदभ्यर्थिता स्वाभ्यस्तयोगविद्यामहिम्ना द्वारकापुरीमधिगत्य तत्र स्थितमनिरुद्धं बलादानीय न्यग्रीविशदुपाया अवरोधे । सा च तेन सह रममाणाऽवर्तत , तमिममुदन्तमवगच्छन् बाणासुरः कोपकषायिताक्षोऽनिरुद्धं नागास्त्रबद्धमचकलत् । एतादृश्यामत्रत्यायां स्थित्याम्; द्वारकायामनिरुद्धमपश्यन्तश्चिरमन्विष्याप्यलभमाना यादवा वैयाकुलीविवशहृदया नारदेन महर्षिणा वृत्ततत्त्वं विज्ञाय भगवन्तं कृष्णं प्रार्थयन्ते स्म । वासुदेवश्च सद्यो गरुडारूढः प्रस्थाय बाणासुरराजधानीं शोणितपुरीमधिगच्छन् तदात्वे योद्धुमभिद्रुतान् परमशिवस्य प्रमथगणान् निहत्य * नन्दिन्यानन्दशून्ये गलति गणपतौ व्याकुले बाहुलेये चण्डे चाकित्यकुण्ठे प्रमथपरिषदि प्राप्तवत्यां प्रमाथम् । उच्छिन्नाजौ बलिष्ठे बलिजभुजवनं यो ददावादिभिक्षोः भिक्षां तत्प्राणरूपां स भवदकुशलं कृष्णहेतिः क्षिणोतु ॥ * इति श्रीसुदर्शनशतकोक्तरीत्या रुद्रपरिवारदेवतास्सर्वा अपि कान्दिशीकतां प्रापय्य, देवनान्तरभजनप्रवणानामिदमेव हस्तगतं फलमिति प्रथयितुकाम-

इव सुदर्शनेन बाणस्य भुजानुच्छिद्य, अथ प्रणतस्य रुद्रस्य प्रार्थनया त्रिचतुरबाहुमात्रावशेषमविनष्टप्राणं च तं विधाय विजयश्रिया व्यराजतेति ॥ .... .... .... (७)

(गाथा.) नेय्यिडै नल्लदोर् शोरुम् नियदमुमत्ताणिच्चेवहमुम् *
कैयडैक्कायुम् कलुत्तुक्कुप्पूणोडु कादुक्कुक्कुण्डलमुम् *
मेय्यिड नल्लदोर् शान्दमुम् तन्दु एन्नै वेळ्ळुयिराक्कवल्ल
पैयुडै नाहप्पहैक्कोडियानुक्कु प्पल्लाण्डु कूरुवने ॥ ८ ॥

[छाया] स्वाद्वन्नं घृतमेदुरं च नियतं कैङ्कर्यनिष्ठां तथा
ताम्बूलक्रमुकाभिवृद्धिमथ मे ग्रैवेयकं कुण्डलम् ।
पाटीरं रुचिरं प्रदाय कृपया शुद्धात्मकं मामिह
क्षिप्रं क्लृप्तवतश्शुभानि कथयै सर्पारिकेतोर्हरेः ॥ ८ ॥

| | |
|---|---|
| नेय्यिडै नल्लदोरूशोरुम् | आज्यसमृद्धं परमभोग्यं विलक्षणमोदनम् |
| नियदमुम् अत्ताणिच्चेवहमुम् | निरन्तरसेवावृत्तिम् |
| कै अडैक्कायुम् | ताम्बूलसम्पदम् |
| कलुत्तुक पूणोडु कादुक्कु कुण्डलमुम् | ग्रैवेयकमकरकुण्डलादिभूषणसम्पत्तिम् |
| मेय् इड नल्लदोर् शान्दमुम् तन्दु | गात्रालङ्कारार्हम् अतिमात्रश्लाघ्यं चन्दनं च मदपेक्षानुगुणतया मह्यं प्रदाय |
| एन्नै वेळ्ळुयिरू आक्कवल्ल | नित्यसंसारिणं दुर्गतं मां शुद्धसात्त्विकं कृतवते |
| पैं उडै नाहप्पहै कोडियानुक्कु | फणिराजतल्पाय फणिवैरिकेतवे च भगवते |
| पल्लाण्डु कूरुवन् | मङ्गलान्याशासे ॥ |

(वि.) अधस्तात्पञ्चम्यां गाथायामैश्वर्यार्थिनः खल्वाहूताः । ते भगवत्सकाशे कांश्चन संपद्विशेषान् लब्ध्वाऽथ शिक्षितमनसो भगवन्मङ्गलाशासनैकप्रवणास्समागता भवन्तीति निबध्यते गाथयाऽनया ।

लोके पुंसामपेक्षिताः पदार्थास्त्रिविधाः धारक-पोषक-भोग्यनाम्ना । अन्नं धारकम् । दधिघृतदुग्धादिकं पोषकम् । चन्दनपुष्पताम्बूलादिकं भोग्यम् । एवंविधाः पदार्था यदि केनचित्पुंसा लभ्यन्ते तर्हि तेन परमतृप्तेन भवितव्यम् ।अपरिमिताण्डाधिपत्यकांक्षणं तु वृथा प्रयासमात्रम् । भगवद्विभूतेस्स्वकीयत्वापादनपातकं च ततः । तथा च स्वरूपज्ञानविरहेण यद्यप्यस्माभिरण्डाधिपत्यमभिकाङ्क्षितं भगवत्सकाशे, तथाऽपि स परमः पुमान् स्वकीयपरमकारुणिकत्वभूम्ना अस्मत्समुज्जीवनैकसंभृतोत्कण्ठस्सन् औचित्यानुसारेणास्माकं यावदपेक्षितं तावदेव धारकपोषकभोग्यवस्तुजातं वितीर्य 'इतःपरमपि वा भूयासुरमी सद्बुद्धिशालिनः' इति मधुरललित-

कटाक्षवीक्षापातमस्माखारचय्य, 'ऐश्वर्यं त्याज्यम्, भगवत्कैङ्कर्यमेव परमः पुरुषार्थः' इति द्रढीयांसमध्यवसायमुत्पाद्य शुद्धस्वरूपानस्मानकार्षीत्, तादृशाय भगवते मङ्गलान्याशास्महे वयम्—इति ऐश्वर्यार्थिनः कथयन्तीति तेषां वाचा निबध्यतेस्म गाथैषा।

ओदनदानं ताम्बूलदानं भूषणचन्दनदानं च भगवता कृतमिति तावदत्राभिधीयते। ओदनस्य धारकत्वात्, ताम्बूलस्य पोषकत्वात्, भूषणचन्दनादेर्भोग्यत्वाच्च धारकपोषकभोग्यवस्तुप्रदानमुक्तं भवति। ननु मध्ये "अत्ताणिच्चेवकमुम्" इति कैङ्कर्यनिष्ठाप्रदानमपि यदुक्तमिह तत्कथं घटते? ऐश्वर्यार्थिनः खलु गाथा सेयम्; स तु धारकपोषकभोग्यवस्तुमात्रापेक्षी खलु; कैङ्कर्यापेक्षाविरहितोऽयं कथमेवं कथयतीति चेत्; सत्यम्, अनन्यप्रयोजनाधिकारिण एव कैङ्कर्यकामना स्यात्; प्रयोजनान्तरपरस्यैश्वर्यार्थिनः कैङ्कर्यकामना नासीदेव; तथाऽपि भगवत्कृपया शिक्षितमनस्कस्य अनन्यप्रयोजनाधिकारित्वेनाधुना समागतस्य च पुंसः किल गाथा सेयम्; अस्यामेवं कथनमुपपद्यते। "मदपेक्षितं जीवनमेव केवलं न प्रददौ भगवान्; अपि तु मदनपेक्षितां कैङ्कर्यनिष्ठामपि प्रदाय मामुज्जीवयामास हन्त" इति हि सानन्दमभिधीयते॥ .... .... (८)

(गाथा.) उडुत्तुक्कळैन्द निन् पीदकवाडै युडुत्त कलत्तदुण्डु *
तोडुत्ततुळाय्मलर् शूडिक्कळैन्दन शूडुमित्तोण्डर्हळोम् *
विडुत्ततिशैक्करुमन्तिरुत्ति त्तिरुवोणत्तिरुविळविल् *
पडुत्तपैन्नाहणैप्पळ्ळिकोण्डानुक्कु पल्लाण्डु कूरुदुमे ॥ ९ ॥

[छाया] धृत्वोत्सृष्टमनर्घपीतवसनं ते बिभ्रतश्च, त्वया
भुक्त्वोत्सृष्टमथोपभुज्य, तुलसीं शिष्टां दधाना वयम्।
दासा दिक्षु यथानियोगमुचितं निर्वर्त्य कृत्यान्यथ
श्रोणायां फणितल्पगस्य भवतो भद्रावलीं ब्रूमहे ॥ ९ ॥

| | | | |
|---|---|---|---|
| उडुत्तु कळैन्द निन् पीदहवाडै उडुत्तु | भवता परिहितम् अथ विसृष्टं च पीताम्बरं वयं परिदध्महे; | विडुत्त दिशै करुमम् तिरुत्ति | यस्यां दिशि यत्कार्यं भवदर्थं कर्तव्यं स्यात्तत्र तदपि यथायथं निष्पादयितुं सज्जास्स्मः; |
| कलत्तदु उण्डु | त्वदीयभुक्तोज्झितशेषभोजिनश्च स्मः; | पडुत्त पै नाहणै पळ्ळिकोण्डानुक्कु | (एतादृशा वयम्) फणिपतिशयनीयशायिने भवते |
| तोडुत्त तुळाय् मलर् शूडि कळैन्दन शूडुम् इत्तोण्डर्हळोम् | त्वदवतंसितविसृष्टतुलसीस्रग्धारणनिरताश्च किङ्करास्स्मः; | तिरुवोण तिरुविळविल् | (विशिष्य) दिव्यश्रोणानक्षत्रमहोत्सवे |
| | | पल्लाण्डु कूरुदुम् | मङ्गलान्याशास्महे॥ |

(वि.) तृतीयगाथायामाहूता अथ षष्ठगाथायां स्ववृत्तिप्रकाशनपूर्वकमागत्य सङ्गता अनन्यप्रयोजनाधिकारिणो भट्टनाथमुनीन्द्रसमेतास्सन्तो भगवन्मङ्गलाशासनमारचयन्तीति अनया प्रक्रियया निबध्यते गाथैषा।

भगवन्, वयं स्वार्थम् अन्नवस्त्रपुष्पादिकं क्रीत्वा नानुभवामः। किन्तु भवदुपभुक्तशिष्टमेव सर्वं तदिदं स्वीकुर्मः। न केवलमेतावदेव। अन्यच्च शृणु; * कार्ये कर्मणि निर्दिष्टे यो बहून्यपि साधयेत्। पूर्वकार्याविरोधेन स कार्यं कर्तुमर्हति * इत्युक्तरीत्या मारुतिनिर्विशेषं दिक्षु सर्वासु संपाद्यानि च कार्याणि भवदर्थं सुष्ठु संपादयेम। नैतावताऽपि तृप्यामः; भोगिभोगशयनीयशायिनो भवतो निस्समाभ्यधिकसौन्दर्यविभवेन क्रीता वयं तादृशसौन्दर्यभूम्ने नित्यश्रियं नित्यमङ्गलमाशास्महेच॥ .... .... .... ९॥

(गाथा.) एन्नाळेम्बेरुमान् उन्तनक्कडियोमेन्रेळुत्तुप्पट्ट
वन्नाळे * अडियोङ्गळडिक्कुडिल् वीडुपेत्तुयन्ददुकाण् *
शेन्नाळ्तोत्ति तिरुमदुरैयुळ् शिलैकुनित्तु*ऐन्दलैय
पैन्नाहत्तलैप्पायन्दवने उन्नैप्पल्लाण्डु कूरुदुमे॥ १०॥

[छाया] स्वामिन्नच्युत! किङ्करा वयमिति न्यस्ताक्षरा यत्क्षणे
जातास्स्मस्तव, सद्य एव समगात्संजीवनं सद्म नः।
प्रादुर्भूय शुभे दिनेऽधिमथुरं निर्भूल्य चापाध्वरं
नृत्तं कालियमस्तके कृतवतस्ते ब्रूमहे मङ्गलम्॥ १०॥

| | |
|---|---|
| एम्बेरुमान्! | अस्मत्स्वामिन्! |
| उन्तनक्कु अडियोम् एन्नु एळुत्तुप्पट्ट एन्नाळ् अन्नाळे | वयं तव दासभूता इति यस्मिन्दिने निष्पन्नम्, तस्मादेव दिनात्प्रभृति |
| अडियोङ्गळ् अडि कुडिल् वीडु पेत्तु उयन्ददु काण् | अस्माकमनुबन्धि सर्वमपि वस्तुजातं दुरितबन्धविमुक्तिमवाप्य समुज्जीवति स्म; |
| शेम् नाळ् तोत्ति | दिव्ये नक्षत्रे भुव्यवतीर्ण हरे! |
| तिरु मदुरैयुळ् शिलै कुनित्तु | उत्तरमथुरापुर्यां (कंसस्यायुधशालां प्रविश्य, तत्र पूजायां स्थितं तदीयं) चापं शिथिलीकृतवन् भगवन् |
| ऐन्दलैय पै नागम् तलै पायन्दवने! | पञ्चशीर्षकालियनागमस्तके कलितताण्डव! |
| उन्नै पल्लाण्डु कूरुदुम् | भवन्मङ्गलाशासनैकनिरता वयम्॥ |

(वि.) चतुर्थगाथायामाहूता अथ सप्तमगाथायामागत्य सङ्गताः कैवल्यार्थिनो भगवन्तं वीक्ष्य मङ्गलमाशासत इति निबध्यते गाथेयम्॥

भगवन्! वयमात्मानुभूतिरूपपुरुषार्थप्राप्तिसाधनतया भवद्भजने पुरा निरता अभूम। पुनरावृत्तिविरहितां कैवल्यमोक्षमवाप्य यथा वयं न नश्येम तथा सतीं मतिमुत्पादयितुमर्हं दिव्यकटाक्षं कृतवान् भवान्। अतश्च वयमधुना सुशिक्षिता भूत्वा भवन्मङ्गलाशासनप्रवणा अभूमेति सानन्दमभिदधति ते।

अस्यां गाथायां प्रथमद्वितीयचरणयोरयं भावः ;—स्वापेक्षितकैवल्यप्राप्तिसाधनतया प्रणवानुसन्धानं यदाऽस्माभिः कृतम् , तदा तद्बलेनैव याद‍ृच्छिकमुज्जीवनमस्माकं समघटत ; तच्चोज्जीवनं न केवलमात्ममात्रविश्रान्तम , अपि तु संबन्धिसंबन्धिपर्यन्तमपि तत् प्रवहति स्मेति । वस्तुत एताद‍ृशो हि भगवदनुग्रहभूमा ।

तृतीयचतुर्थचरणयोर्भगवतो नन्दनन्दनस्य दिव्यचरितद्वितयमनुसन्धीयते । मथुरायामवतीर्णो भगवान् वासुदेवः कंसभीत इव गोकुलं प्रविश्य तत्र निलीनोऽवतस्थे । तदात्वे नारदश्चावितैतद्वृत्तान्तः कंस एनं हन्तुमुच्चावचानुपायानकार्षीत् । * स दुर्दमानासुरसत्त्वभेदान् नेता समाहूय नृशंसचेताः । प्रस्थापयामास परैरधृष्यं नन्दास्पदं नाथविहारगुप्तम् ॥ * इति (यादवाभ्युदये) प्रोक्तरीत्या ये ये प्रस्थापिता असुरापशदास्ते ते सर्वेऽपि क्षणादेव भस्मसात्कृता अभूवन्नित्यवजगिवान् कंसः अथ तं नन्दनन्दनं धनुर्यागच्छलेन स्वकीयमावसथं प्रत्याकारयामास भक्ताक्रूरद्वारा । अथ गोकुलाद्बलरामेण सह मथुरामागतो नन्दसूनुस्तत्रायुधशालायां कंसधनुराराधनोत्सवः प्रचलतीत्यवगत्य सरभसं तत्र प्रविश्य साटोपं धनुस्तच्छिथिलयामासेति धनुर्भङ्गकथा वेदितव्या । कालियमर्दनं तु गोकुलवासकाले कलितं सुप्रसिद्धम् ॥ .... .... .... १० ॥

(गाथा.) अल्वळक्कोन्रुमिल्ला अणिकोट्टियर्कोन् * अविमानतुङ्गन्  
शेल्वनैप्पोल तिरुमाले नानुमुनक्कुप्पळवडियेन् *  
नल्वहैयाल् नमोनारायणावेन्रु नामम्पल परवि *  
पल्वहैयालुम् पवित्तिरने उन्नैप्पल्लाण्डु कूरुवने ॥ ११ ॥

[छाया] दुर्नीतिरतिदूरगस्स हि यथा गोष्ठीशसंपत्प्रभुः  
तद्वन्माधव! सोऽहमप्यतिचिरादेवास्मि ते किङ्करः ।  
श्रीनारायण! ते नमोऽस्त्वित‍ि गृणन् भूयांसि नामानि ते  
क्रन्दन् सम्यगहो पवित्र! भगवन् शंसामि ते मङ्गलम् ॥ ११ ॥

| | |
|---|---|
| तिरुमाले! | श्रियःपते! |
| अल्वळक्कु ओन्रुम् इल्ला अणि कोट्टियर् कोन् अभिमानतुङ्गन् शेल्वनै पोल नानुम उनक्कु पळ अडियेन् | अनीतिगन्धविरहितो गोष्ठीपुरनिवासरसिकसाधुजनाग्रगण्यः श्रीवैष्णवाभिमानतुङ्गः 'शेल्वनम्बि' नामा महानुभावो यथा, तथैवाहमपि तव चिरन्तनो दासोऽस्मि ; |
| पल् वहैयालुम् पवित्तिरने! | सर्वथाऽपि परमपावनभगवन्! |
| नल् वहैयाल् नमो नारायणा एन्रु नामम् पल परवि | उज्जीवनोपयोगितया श्रीमदष्टाक्षरमहामन्त्रानुसन्धानमाचर्य्य भवदीयानि बहूनि दिव्यनामानि संकीर्त्य च |
| उन्नै पल्लाण्डु कूरुवन् | भवते मङ्गलान्याशासे. |

(वि.) अधस्तात्पञ्चमगाथायामाहूता अथाष्टमगाथायां स्वशिक्षितत्वप्रकाशनपूर्वकमागत्य संगताश्च ये ऐश्वर्यार्थिनस्ते भगवन्तमवेक्ष्य मङ्गलाशासनं कुर्वन्तीति निबध्यते गाथैषा ।

देहात्मभ्रमः, स्वतन्त्रात्मभ्रमः, अन्यशेषत्वभ्रमः, स्वरक्षणे स्वाम्मिमुख्यौचित्यभ्रमः, बान्धवाभासलोलत्वम्, विषयचापलमित्यादिकमनीतिशब्दाभिलप्यम् । एवंविधास्वनीतिषु लवलेशोऽपि नासीत् पाण्ड्यमण्डलाधिपतिवल्लभदेवराजपुरोहिते 'शेल्वनम्बि' नाम्नि परमभागवते । स यथा भवद्दासाग्रणीरासीत्तथा वयमपीति विद्धीति कथयन्त्यैश्वर्यार्थिगणः । एतावता कालेन प्रयोजनान्तरपराः स्थिता एते इदानीमेव भगवत्प्रवणा भूत्वा चिरन्तनदासभूतं व्यक्तिविशेषं स्वनिदर्शनतया निर्देष्टुं कथमर्हन्तीति शङ्का जायेत । औपाधिकाहङ्कारममकारप्रणाशे सति सर्वेषामप्यात्मनां स्वतस्सिद्धमेव दास्यं स्वयं व्यक्तं भवतीति युज्यत एवं कथनम् । चिरात्पङ्कदिग्धं रत्नं यदि प्रक्षालितपङ्कं भवति, तर्हि तस्मिन् न खलु नवीना काऽपि प्रभा जायते; प्रमुषितायाः स्थितायाः पुरातनप्रभाया एव हि समुन्मेषः । तथैवात्रापीति ध्येयम् ।

शेल्वनम्बिनाम्नो महानुभावस्य पुरोधसस्समुद्बोधनबलादेव पाण्ड्यराजस्य परतत्त्वनिर्णयार्थप्रवृत्तिर्जाता, तत एव च भट्टनाथमुनीन्द्रस्यास्य भगवत्कटाक्षविशेषभाजनभावस्संजात इति स्मर्तव्यमिह । (मुनीन्द्रस्यास्य चरिते विशदमिदम् ।) शेल्वनम्बि—संपत्पूर्ण इत्यर्थः । श्रीवैष्णवाभिमानतुङ्ग इति तद्विशेषणं तदसाधारणवैभवव्यञ्जकम् । भगवद्भागवताराधनैकवैयग्रीविवश इति भावः ।

तृतीयचरणे "उज्जीवनोपयोगितया श्रीमदष्टाक्षरमहामन्त्रानुसन्धानमारचय्य" इति कथनेन, पूर्वकाले जीवनोपयोगितया केवलं भगवन्नामाद्यनुसन्धानं कृतम्, इदानीं तु न तथा इति व्यञ्जितं भवति । स्वकीयहृदयगतामशुद्धिं विनिवार्य परमशुद्धिं समुदपादयद्भगवानिति कृतज्ञतानुसन्धानेन "सर्वथाऽपि परमपावन!" इति संबोध्यते ॥ .... .... .... (११.)

(गाथा.) पल्लाण्डेन्रु पविचिरनैप्परमेट्टियै * शार्ङ्गमेन्नुम्
विल्लाण्डान्तन्नै विल्लिपुत्तूर्विट्टुशित्तन् विरुम्बियशोल् *
नल्लाण्डेन्रु नविन्रुरैप्पार् नमोनारायणायवेन्रु *
पल्लाण्डुम् परमात्मनै शूऴ्न्दिरुन्देत्तुवर् पल्लाण्डे ॥ १२ ॥

[छाया] भद्राशासनवाग्भरेण परमस्थानेश्वरं पावनं
शार्ङ्गेशं प्रति धन्विनव्यनगरश्रीविष्णुचित्तोदितम् ।
सत्कालोऽयमिति प्रफुल्लमनसश्शंसन्ति ये ते हरिं
श्रीनारायणमन्त्रतः परिगता नित्यं स्तुयुर्मङ्गलैः ॥ १२ ॥

| | |
|---|---|
| पवित्तिरनै परमेट्टियै शार्ङ्ग-मेन्नुम् विल् आण्डान् तन्नै | पवित्र परमपदनिलयं शार्ङ्गाख्यधनुर्भरणदक्षिणं च भगवन्तमुद्दिश्य |
| विल्लिपुत्तूर् विट्टुशित्तन् पल्लाण्डेन्नु विरुम्बिय शोल् | श्रीधन्विनव्यपुरावतीर्णेन श्रीविष्णुचित्तसूरिणा विज्ञापितमिमं प्रेममयं मङ्गलाशासनप्रबन्धम् |
| नल् आण्डु एन्नु नविन्नु उरैप्पार् | 'समीचीनः कालः संघटितोऽस्माकम्' इति हर्षप्रकर्षेण संकीर्तयन्तो भक्ताः |
| परमात्मनै शूऴ्न्दिरुन्दु | परमात्मानं श्रीमन्नारायणं चतसृष्वपि दिक्षु सेवमानास्सन्तः |
| नमो नारायणाय एन्नु | श्रीमदष्टाक्षरमहामन्त्रानुसन्धानपूर्वकम् |
| पल्लाण्डुम् पल्लाण्डु एत्तुवर् | यावदात्मभावि मङ्गलाशासनपरा भवेयुः ॥ |

(वि.) फलश्रुतिगाथा सेयम्। अधस्तात्तृतीयगाथायाम् "अन्नार्थिनो युष्मान् नास्मदीयगोष्ठीप्रविष्टान् सहेमहि" इति कथितवताऽनेन सूरिवरेण 'हन्त! केचिन्निराकृता' इति मनसि तापमासुदेषा तादृशानामप्यधिकारिणां यया कयाचन विधया समुज्जीवनं चिकीर्षता सोऽयं दिव्यप्रबन्धः प्रणीत इव। तिरस्कृतपूर्वास्तेऽपि काममेतद्दिव्यप्रबन्धानुसन्धानेन सफलजन्मानः समुत्तीर्णसंसारसागरा भूयासुरिति मुनिवरोऽयमभिसंधत्ते ॥ (१२)

श्रीभट्टनाथयोगीन्द्रचरणावेव शरणम् ॥ श्रीरामानुजश्रीमद्वरवरमुनीन्द्राभ्यां नमो नमः ॥

इति श्रीकाञ्चीप्रतिवादिभयङ्कर अण्णङ्गराचार्यविलिखितं
मङ्गलाशासनदिव्यप्रबन्धसंस्कृतविवरणं समाप्तम् ॥

यत्कृतान्मङ्गलाशासनादन्वहं मङ्गलानि श्रियो वल्लभो विन्दति।
तस्य गोदागुरोर्मङ्गलाशासनं कुर्वते स्यान्महायोगिने मङ्गलम् ॥

॥ श्रीरस्तु ॥

श्रीहस्तिशैलशिखरोज्ज्वलपारिजाताय नमः ॥

श्रीमच्छठवैरि यतिराज वरवरमुनीन्द्रेभ्यो नमः ॥

द्राविडाम्नायदिव्यप्रबन्धाभिधायाम् चतुस्सहस्रिकायाम् प्रथमसहस्रे - पेरियाऴ्वार्तिरुमोऴिनामा

# ॥ श्रीभट्टनाथसूक्तदिव्यप्रबन्धः - द्वितीयः ॥

श्रीभट्टनाथापरनामधेय श्रीविष्णुचित्तसूरिप्रणीतः

श्रीकाञ्ची प्रतिवादिभयङ्कर अण्णङ्गराचार्यविरचितया संस्कृतटीकया समेतः ।

## अवतारिका ।

श्रियः पत्युः परमकारुणिकस्य परमपुरुषस्य दिव्यशुभगुणामृतसागरान्तर्निमग्नेषु अनुभवरसिकाग्रगण्येषु आऴ्वारपदवाच्येषु दिव्यसूरिषु सप्तमेन श्रीभट्टनाथमुनिवरापरनामधेयेन श्रीविष्णुचित्तयोगिवरेण प्रणीते दिव्यप्रबन्धद्वितये तिरुप्पल्लाण्डुदिव्यप्रबन्ध नामा प्रथमो मङ्गलाशासनप्रबन्धो व्याख्यातः । अथ * पेरियाऴ्वार्तिरुमोऴि नाम्ना प्रसिद्धो द्वैतीयीको दिव्यप्रबन्धो व्याख्यायते ॥ सोऽयं प्रबन्धो दशकचतुष्टयाधिक-शतकचतुष्टयालंकृतः । आदितः षष्ट्युत्तरद्विशतगाथापर्यन्तं श्रीकृष्णावतारदिव्यचेष्टितानुभवोऽतिविपुलतया क्रियते । अथच नानाविधा भगवदनुभवास्संपद्यन्ते । श्रीकृष्णावतारचेष्टितानुभवे सोऽयमेक एव दिव्यसूरिरप्रतिमभाग्यभागी प्रथितः । तदात्वे नन्दनन्दनात्मकविभवावतारावसरे यशोदा गोप्यश्च भगवन्तं कृष्णकिशोरं यथा ह्यन्वभूवन्, तथा ततोऽप्यतिशयितप्रक्रियया च सोऽयमेक एव सूरिवरस्तत्तद्भावभावनया अत्यद्भुतमनुबभूव । श्रीकृष्णकिशोरबालचेष्टितवर्णनमयीषु अदसीयदिव्यगाथासु अर्थानुभवापेक्षयाऽपि कर्णश्राव्यशब्दसंदर्भानुभव एव सुशोभनः । ये हि द्राविडदेशेषु द्राविडभाषाभाषिणो जज्ञिरे तद्भाषामर्मविदः:, ते भाग्यभूम्ना शब्दरसमनुभवितुं प्रभवन्ति । अन्येषां भगवद्गुणानुभवकुतूहलिनाम् अर्थानुभवभाग्यमव्याहतं भूयादित्युत्कण्ठया वयं द्राविडगाथार्थसारं संस्कृतवाण्या (अथ आन्ध्रवाण्या, अथच हिन्दीभाषया) विवृणुमः । .... .... *

दिव्यप्रबन्धेऽस्मिन् प्रतिशतकं दशकपरिच्छेदा दश ; प्रथमशतके तु नवैव दशकपरिच्छेदास्सन्ति । कुत इति चेदुच्यते । (दशकमिह सूक्तशब्देन व्यवह्रियते ।) समनन्तरद्वितीयसूक्ते विंशतिस्सन्ति गाथाः । एकार्थपरे तस्मिन्परिच्छेदे मध्ये दशकविच्छेदः कर्तुमशक्योऽभूत् । अत एव विंशतिगाथात्मकं तद्द्वितीयसूक्तम् एकदशकत्वेन पर्यगण्यत । तथाच प्रथमशतके नवदशकसद्भावेऽपि शतगाथासद्भावो निरपाय एवेति वेदितव्यम् । अथ तत्र प्रथमं दशकं व्याख्यायते ॥ .... .... *

## प्रथमशतके प्रथमं दशकम् - वण्णमाडङ्गळ् ।

(अव.) श्रीकृष्णो भगवान् व्रजे नन्दगोपस्य दिव्ये भवने यदाऽवतीर्णस्तदा तत्र येये कोलाहलास्समपद्यन्त ते विस्तरेण प्रतिपाद्यन्ते दशकेऽस्मिन् । अवतारकालिका उपलालनविशेषा उपवर्ण्यन्त इति यावत् ॥..*

(गाथा.) वण्णमाडङ्गळ् शूळ् तिरुक्कोट्टियूर् * कण्णन्केशवन् नम्बि पिरन्दिनिल् *
एण्णेय् शुण्णम् एदिरेदिर्तूविड * कण्णन्मुत्तम् कलन्दळरायित्ते ॥ १ ॥

वण्णम् माडङ्गळ् शूळ् तिरुक्कोट्टियूर् कण्णन् नम्बि केशवन् पिरन्दिनिल् एण्णेय् शुण्णम् एदेरेदिर् तूविड, कण्णन् मुत्तम् कलन्दु अळरु आयित्तु.

रमणीयसौधावलीपरिवृतस्य तिरुक्कोट्टियूरुनाम्नः श्रीगोष्ठीपुरस्याधिनाथो भगवान् समस्तकल्याणगुणगणभरितः केशवः कृष्णो यदा गोकुलेऽवततार तदा गोपाः (परमहर्षप्रकर्षेण) तैलचूर्णादिकं परस्परमवाकिरन्; तेन तद्गृहाङ्गणं कृत्स्नमपि पङ्किलं बभूव ॥ १ ॥

**(विशेषविवरणम्.)** * एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः। नागपर्यङ्कमुत्सृज्य ह्यागतो मधुरां पुरीमित्युक्तरीत्या भगवान् क्षीराब्धितो मथुरामागत्य ततो व्रजमुपागादिति वस्तुतत्त्वे स्थिते, श्रीगोष्ठीपुराभिधानदिव्यदेशनिलयो भगवान् व्रजेऽवततारेति कथनमिह कथं युज्यत इति चेदुच्यते; दिव्यसूरीणामर्चावतारेषु विशिष्य प्रावण्यं सुप्रसिद्धम्; श्रीरामकृष्णादिमूर्तिभेदैरवतीर्णो भगवानेव श्रीरङ्गवेङ्कटाद्रिहस्त्यद्रिप्रभृतिषु दिव्यदेशेषु विराजते इति कदाचित्कथयेयुरमी; श्रीरङ्गादिदिव्यदेशेषु विराजमानो भगवानेव रामकृष्णादिमूर्त्याऽवततारेत्यपि कदाचिदभिदधीरन्। नात्र शास्त्रार्थविपर्ययशङ्कावकाशः। धर्मिण एकत्वेन द्वेधाऽपि सुवचत्वात्। प्रकृते श्रीगोष्ठीपुराभिधानदिव्यदेशविशेषे विराजमानो भगवानेव पुरा व्रजे नन्दनन्दनभावेनावतीर्ण इति कथनं प्रस्तुतदिव्यदेशे दिव्यसूरिवरस्यास्य गाढरूढमभिनिवेशं व्यनक्ति। अस्य सूरेश्चरित्रे * शेल्वनम्बिनामा यो महान् महोपकारकत्वेन प्रथितः स गोष्ठीपुरप्रवण इति सुप्रसिद्धमेतत्। तस्मिन्महानुभावे प्रेमभूम्ना सोऽयमपि सूरिवरस्तस्मिन्नेव गोष्ठीपुरे प्रवणो भूत्वा तदेव प्रावण्यं प्रख्यापयति प्रबन्धोपक्रमे - इति वेदितव्यम् ॥ .... .... (१)

(गाथा.) ओडुवार्विळुवा रुहन्दालिप्पार् * नाडुवार्नम्बिरान् एङ्गुत्तानेन्बार् *
पाडुवार्हळुम् पल्परै कोट्टि निन्नु * आडुवार्हळुम् आयित्तायप्पाडिये ॥ २ ॥

ओडुवार् विळुवार् उहन्दु आलिप्पार् नम् पिरान् एङ्गुत्तान् एन्बार् नाडुवार् पाडुवार्हळुम् पल् परै कोट्ट निन्नु आडुवार्हळुम् आयित्तु आय्पाडि.

"अस्मदीये गोकुले भगवानुपागत" इत्यसकृदनुसन्धानजनितेन हर्षप्रकर्षेण गोपालास्संभ्रान्ता इतस्ततो धावन्ति; धावनकाले संभ्रमातिशयेन पङ्के स्खलितचरणाः पतन्ति; प्रेमवशादुच्चैराक्रोशन्ति; जातशिशुः कुत्रास्ते? क्व वर्तते? इति परस्परं पृच्छन्ति, गत्वेऽन्वयन्ति च; नानाविधवाद्यनादे जृम्भमाणे सति तदनुरूपतया नृत्यन्ति च; एवंनाम विविधैः कोलाहलैस्संकुलमभूदहह गोकुलम् ॥ २ ॥

(गाथा.) पेणिच्चीरुडै पिळ्ळै पिरन्दिनिल् * काणत्ताम्पुहुवार् पुक्कुप्पोदुवार् *
आणोप्पा रिवन्नेरिल्लै काण * तिरु वोणत्ता नुलहाळुमेन्बार्हळे ॥ ३ ॥

शीरुडै पिळ्ळै पेणि पिरन्दिनिल् काण
पुहुवार् ताम् पुक्कु पोदुवार्
आणोप्पार् इवन् नेरिल्लैकाण् तिरु
ओणत्तान् उलहु आळुम् एन्बार्हळ्.

(अवतरणसमनन्तरमेव * उपसंहर विश्वात्मन् रूपमेतच्चतुर्भुजम्। जानातु माऽवतारं ते कंसोऽयं दितिजन्मजः * इति पित्रोः प्रार्थनाया स्सद्यस्सफलीकरणेन) शुभगुणाढ्य इति प्रसिद्धिमुपेयिवान् दैवशिशुर्यदा स्वात्मानं निगुह्य गोकुलेऽवततार, तदा तमेनं द्रष्टुमुत्सुका बहवो जना अन्तः प्रविशन्ति; दृष्ट्वा च बहवो बहिर्निस्सरन्ति; सामुद्रिकविदो बहवस्तु "नास्त्येतत्समानः कोऽपि पुमान्, श्रोणानक्षत्रदैवतस्य विष्णो-रशेषमपि जगतीतलमसावेक एव परिपालयितुं प्रभविष्णुः" इति कथयन्ति च ॥ [अन्तर्गच्छद्भिः बहिर्निर्गच्छद्भिः प्रशंसद्भिश्च जनै-स्संकुलमभूद्गोकुलमिति यावत्] ॥ ३ ॥

(गाथा.) उरियै मुत्तत्तु उरुट्टि निन्राडुवार् * नरुनेय्पाल् तयिर् नन्राहत्तूवुवार् *
शेरि मेन्कून्दल् अविळ चिळैत्तु * एङ्गुम् अरिवळिन्दनर् आय्प्पाडियायरे ॥ ४ ॥

उरियै मुत्तत्तु उरुट्टि निन्नुआडुवार्, नरु
नेय् पाल् तयिर् नन्नाह तूवुवार्,
शेरि मेन् कून्दल् अविळ तिळैत्तु
आय्प्पाडि आयर् एङ्गुम् अरिवु
अळिन्दनर्

(कृष्णजननजनित हर्षप्रकर्षपारवश्येन, नानाविध गव्यभरभरि-तानि) शिक्यानि द्रव्यगौरवानवलोकनेन विलुठ्य बहिरानीय भूतलेष्ववकीर्य ससंभ्रमनृत्तं कुर्वन्ति बहवः; शिशोः श्रेयांसि भूयांसि भूयासुरिति धिया घृतक्षीरदध्यादिदानेषु निष्णाता भवन्ति बहवः; कचभरशैथिल्यं यथा भवति तथा नाम नृत्यन्ति बहवः; एवं नाम व्रजभाजो बल्लवास्सर्वेऽपि बभूवुरतितरां विकृताः ॥ ४ ॥

(गाथा.) कोण्ड तालुरि कोलक्कोडु मळु * तण्डिनर् परियोलै च्चयनत्तर् *
विण्डमुल्लै अरुम्बन्न पल्लिनर् * अण्डर्मिण्डि पुहुन्दु नेय्याडिनार् ॥ ५ ॥

कोण्ड ताल् उरि कोलम् कोडु मळु
तण्डिनर् परि ओलै शयनत्तर्
अण्डर् विण्ड मुल्लै अरुम्बुअन्न
पल्लिनर् मिण्डि पुहुन्दुनेय् आडिनार्

जात्यनुरूपतया शिक्यहस्ताः छुरिकाद्यायुधपाणयः लगुडसनाथाः तालच्छदमयतल्पविशिष्टाश्च गोपालकाः स्वस्वदन्तच्छविप्रकाशकहास-युक्तास्सन्तस्संघीभूय घृतनृत्तं चक्रुः ॥ [घृतनृत्तं नाम—घृताभ्यञ्जनपूर्वकं मिथस्संश्लेषणेन क्रियमाणम् आनन्दातिशयशरीवाहरूपं ताण्डवम् ।] ॥ ५ ॥

(गाथा.) कैयुम् कालुम् निमिर्त्तु कडारनीर् * पैयवाट्टि पशुम् शिरु मञ्जळाल् *
ऐय नावळित्ताळुक्कु अङ्गान्दिड * वैयमेळुम् कण्डाळ् पिळ्ळै वायुळे ॥ ६ ॥

कैयुम् कालुम् निमिर्त्तु कडारम् नीर्
पैय आट्टि पशुम् शिरु मञ्जळाल्
ऐय ना वळित्ताळुक्कु अङ्गान्दिड,
पिळ्ळै वायुळ् वैयम् एळुम् कण्डाळ्

(श्रीकृष्णशिशुं स्नपयन्ती जननी यशोदा) तस्य पाणी पादौ च सुदीर्घं प्रसार्य कृत्वा कटाहसंभृतसलिलेन सुभगतरमभिषिच्य हरिद्राखण्डेन जिह्वानिर्लेहनं कर्तुमुपचक्रमे । तदात्वे कृष्णशिशुरास्यं व्याददे । व्यात्ते तस्मिन् वदने सा वत ददर्श सप्त च भुवनानि ॥

* दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् * (गीता) इति दिव्यचक्षुःप्रदानपूर्वकं पार्थाय यथा निजं वैश्वरूप्यं प्रादर्शयत्तथैवाधुना मात्रेऽपि संदर्शयामासेति वेदितव्यम् ॥ .... .... (६)

(गाथा.) वायुळ् वैयहम् कण्ड मलनल्लार् * आयर्पुत्तिरनल्लन् अरुन्देय्वम् *
पाय शीरुडै पण्बुडै प्पालहन् * मायनेन्रु महिळ्न्दनर्मादरे ॥ ७ ॥

| | |
|---|---|
| वायुळ् वैयहम् कण्ड नल्ल मडवार् 'आयर् पुत्तिरन् अल्लन् अरुम् दैवम् पाय शीरुडै पण्बु उडै बालकन् मायन्एन्नु मादर् महिळ्न्दनर् | कृष्णशिशोरास्ये भुवनानि दृष्टवत्यो गोप्यः "अयं न सामान्यगोपालबालकः; अपितु परमं दैवतम्; विपुल विमलयशा एष बालकस्सत्यमत्याश्चर्यशक्तियुक्तो भगवानेव" इति मिथः कथयन्त्यो हर्षप्रकर्षमन्वभूवम् ॥ |

(वि.) अधस्तनगाथायाम् एकैव जननी कृष्णशिशोरास्ये सप्तलोकीं संददर्शेति कथितम्। अस्यां गाथायाम् अन्या अपि भूयस्यो गोप्यस्तथा ददृशुरिति प्रतिपाद्यते। परममद्भुतम् दृष्टवती यशोदा प्रमोदातिशयेन स्वसखीवृन्दमाहूय 'हन्त पश्यत मम शिशोरानने सप्त भुवनानि' इति कथयामास। अथ तत्र बह्व्यो गोप्यस्समागत्य तदद्भुतमवैक्षन्त; भगवान् परमकृपया ताभ्योऽपि प्रादर्शयम्—इति प्रतिपत्तव्यम्॥ (७)

(गाथा.) पत्तु नाळुम् कडन्द इरण्डानाळ् * एत्तिशैयुम् शयमरम् कोडित्तु *
मत्त मामलै ताङ्गिय मैन्दनै * उत्तानम् शेय्दु उहन्दनरायरे ॥ ८ ॥

| | |
|---|---|
| पत्तु नाळुम् कडन्द इरण्डानाळ् एत्तिशैयुम् जयमरम् कोडित्तु मत्त मामलै ताङ्गिय मैन्दनै आयर् उत्तानम् शेय्दु उहन्दनर्. | अथ दशदिनात्ययादूर्ध्वं नामकरणदिवसे समुपस्थिते सर्वत्रापि माङ्गलिकतोरणस्तम्भप्रतिष्ठापनेन दिव्यालङ्कारमारचय्य, गोवर्धनोद्धरणकुशलमेनं शिशुं गोपालाः स्वस्वपाणितलेषु प्रतिगृह्य भृशमुपलाल्य प्रहृष्यन्तिस्म ॥ |

(वि.) इह परस्ताद्भाविगोवर्धनोद्धरणं कथमधुना कथ्यत इति माभूदाशङ्का; प्रबन्धप्रणेता दिव्यसूरिः पाश्चात्य एव खलु; तस्य गिरा कथनं हि नानुपपन्नम्॥ .... .... (८)

(गाथा.) किडक्किल् तोट्टिल् किळिय वुदैत्तिडुम् * एडुत्तुकोळ्ळिल् मरुङ्गै यिरुत्तिडुम् *
ओडुक्किप्पुल्हिल् उदरत्ते पाय्न्दिडुम् * मिडुक्किलामैयाल् नान्मेलिन्देन्नङ्गाय् ॥ ९ ॥

[ गोपालैः कृता उपलालनविशेषा अधस्तादभ्यधायिषत। अथ दिव्यसूरिरेष यशोदातादात्म्यमापद्यमानस्सन् तद्गिरा कथयति कृष्णशिशोश्चेष्टितभूमानम्। तदात्वे यशोदा सन्निहितं स्त्रैणमुद्दिश्य यदभिहितवती तदिह तद्भावभावनया कथ्यत इति यावत्। ]

नङ्गाय्! किडक्किल् तोट्टिल् किळिय उदैत्तिडुम्, एडुत्तुकोळ्ळिल् मरुङ्गै इरुत्तिडुम्, ओडुक्कि पुल्हिल् उद-रत्ते पाय्न्दिडुम्, मिडुक्कु इल्ला-मैयाल् नान् मेलिन्देन्.

भोस्सख्यो वल्लव्यः! डोलातल्पमधिशायितश्चेदेष शिशुः पादाघातैश्शिथिलयति डोलाम्। पादसौकुमार्यानुसन्धानेन यद्यहमेनं शिशुं डोलातल्पादुत्थाप्य निजकटितटे निवेशयेयम्, तदाऽसौ कटितटादपि प्रच्युतिं कामयमानो दुस्सहबाधामातनुते। यथाऽयं व्यापारक्षमो न भवेत्तथा तमेनं गाढमुरसा संश्लिष्येयं यदि, तदाऽपि पादघातेन जठरं पीडयत्येषः। एवंविधान्यदसीयानि चेष्टितानि मनागपि सोढुमशक्ताऽहमतीव दूये—इति यशोदातादात्म्येन सूरिराह।

(वि.) गाथायामस्यां चरमचरणस्य अन्यथाऽप्यर्थो योग्यः प्रतिपत्तुम् = एतादृशानि चेष्टितान्यकृत्वा स्थातुं शक्तो न भवत्यसाविति हेतुना साऽहं दूये—इति। .... .... (९)

(गाथा.) शेन्नेलार्वयल् शूळ् तिरुक्कोट्टियूर् * मन्नु नारणन् नम्बि पिरन्दमै *
मिन्नु नूल्विट्टुशित्तन् विरित्त * इप्पन्नुपाडल्वल्लार्क्कु इल्लै पावमे॥ १०॥

[एतद्दशकानुसन्धानफलकीर्तनगाथैषा।]

शेन्नेल् आर् वयल् शूळ् तिरु कोट्टियूर् मन्नु नारणन् नम्बि पिरन्दमै मिन्नु नूल् विष्णुचित्तन् विरित्त इ पन्नु पाडल् वल्लार्क्कु पावम् इल्लै.

धान्यसमृद्धिभासुरकेदारततिपरिवृतश्रीगोष्ठीपुराधिनाथो भगवान्नारायणो व्रजेऽवततारेति तादात्विकवैभवादिवर्णनेन सह कीर्तयामास द्विजकुलतिलको विष्णुचित्त इमा दिव्यगाथाः। विशेषविदां रस्यान्येतानि पद्यानि ये साभिप्रायमनुसन्दधते ते सर्वपातकविनिर्मुक्ता भवितारः॥१०॥

गाथानुक्रमणिका:—वण्ण मोडु पेणि उरि कोण्ड कै वायू पत्तु
किडक्किल् शेन्नेलू शीद॥

एतद्दशकसारांशमेकेन श्लोकेन कथयामः:—

श्रीमन्नारायणे प्राक् परमकरुणया नन्दगोपस्य गेहं
संप्राप्ते कृष्णमूर्त्या निरवधिकमुदा तत्र गोपालवृन्दैः।
सोत्साहैः कल्पितानां विविधबहुलनृत्तादिकोलाहलानां
व्याख्यानेनातिहृष्टो मुनिरधिवसताद्विष्णुचित्तो मनो मे॥

श्रीमथुरायां वसुदेवदेवकीभ्यामधिष्ठिते कारागारेऽवतीर्य अथ स्वकीयनिर्हेतुककृपया व्रजे नन्दगोपदिव्यभवन मधिजग्मिवान् श्रीमन्नारायणस्तत्र श्रीकृष्णमूर्त्या विरराज; तदात्वे तत्र वाचामगोचरोत्साहसंभृतैर्गोपालवृन्दैरनवधिकानन्दभरेण विविधबहुलनर्तनादिकाः कोलाहलाः कल्पिता अभूवन्। तेषामिह प्रथमदशके विपुलवर्णनेन हर्षप्रकर्षमेदुरान्तःकरणो विष्णुचित्तसूरिरभूत्—इति॥ .... .... *

इति द्राविडाम्नायदिव्यप्रबन्ध प्रथमसहस्रे श्रीभट्टनाथसूक्ते प्रथमं दशकं समाप्तम्॥
श्रीविष्णुचित्तदिव्यसूरिदिव्यचरणावेव शरणम्॥

॥ श्रीः ॥

श्रीभट्टनाथसूक्ते - प्रथमशतके द्वितीयदशकम्

# शीदक्कडल् ।

॥ श्रीकृष्णशिशोः पादादिकेशान्तसौन्दर्यानुभवः ॥

अवतारिका :—श्रीमत्यां मथुरापुर्यां श्रीवसुदेवभवने निशीथेऽवतीर्णः कृष्णकिशोरस्तदात्व एव * अकृतसेतुमनाकलितप्लवां जननसिन्धुदडप्लवमुद्वहन् । रविसुतामतिलंघ्य रमापतिं सपदि घोषसमीपमुपानयत् * [यादवाभ्युदये ३-४४] इत्युक्तरीत्या वसुदेवेन व्रजे नन्दगोपसदनमनायि खलु । अथ तत्र संपन्ना उपलालन विशेषा अग्रस्तनदशके उपावर्ण्यन्त । तदनु तस्य कृष्णशिशोः पादादिकेशान्तसुषमां यशोदा स्वयमनुभूय, तत्रत्या अन्याश्च ललना आहूय "मम सुतस्य दिव्यावयवसौन्दर्यलावण्यादिकं भोभो वनिताः! यूयमागत्य पश्यत" इति यदुक्तवती तदिदं तद्भावभावनया स्वयमनुभूय विंशतिगाथात्मना द्वितीयसूक्तेन प्रख्यापयति विष्णुचित्त-सूरिवरः ॥ .... .... .... .... .... *

(गाथा.) शीदक्कडलुळ्ळमुदन्न देवकि * कोदैक्कुळलाळ् अशोदैक्कु प्पोत्तन्द *
पेदैक्कुळवि पिडित्तु च्चुवैत्तुण्णुम् * पादक्कमलङ्गळ् काणीरे पवळवायीर्वन्दु काणीरे ॥

शीतक्कडलुळ् उळ्ळमुदु अन्न देवकि कोदै कुळलाळ् अशोदैक्कु पोत्तन्द पेदै कुळवि पिडित्तु शुवैत्तु उण्णुम् पादक्कमलङ्गळ् वन्दु काणीरे पवळ-वायीर् वन्दु काणीरे.

अतिशिशिरपयोनिधेराभ्यन्तरममृतमिति वक्तुं योग्या या श्रीमहालक्ष्मीरजनि, तत्साधर्म्यशालिन्या वसुदेवपत्न्या देवक्या पुष्प-मालालंकृतचिकुरप्रकारायै यशोदानाम्न्यै मह्यं प्रेषितो मुग्धशिशुः कृष्णनामा; सच स्वकीयहस्तेन स्वकीयपादकमले परिगृह्य स्ववक्त्रारविन्दे विनिवेश्य स्वयमास्वादयति। तादृशे दिव्यभव्यपादकमले सख्यः पश्यत । प्रवालोपमदिव्याधरशालिन्यः! समागत्य पश्यत ॥

(विशेषविवरणम् ।) पयोनिधे रमृतद्वयं पुरा समजनि । बाह्यमान्तरं चेति । दारिद्र्योपहतैर्याच-कैरमरैः स्वीकृतं यत् तद् बाह्यममृतम् । महोदधिमथनकुशलेन स्वेनैव यदमृतं स्वीकृतमिन्दिराभिधानम्, तदेव ह्याभ्यन्तरममृतम् । अत्र मूलगाथायां "पयोनिधिसंजात-आभ्यन्तरामृतसदृश्या देवक्या" इति यदुक्तं तस्यार्थः—'लक्ष्मीसदृश्या देवक्या' इति । देवक्या लक्ष्मीसादृश्यं केन प्रकारेणेति चेत् परोपकारैकप्रावण्येन तदिति वेदितव्यम् । अस्मिन्नेव दशके उपरि सप्तदश्यामपि गाथायाम् "इन्दिरासदृशी देवकी" इत्यभिहितमिह स्मर्तव्यम् ॥ अथ पुष्पमालालंकृतचिकुरप्रकरशालित्वकथनं यदस्ति यशोदायाम्, तत् तस्या अचिन्तितपुत्रलाभ-संजातसंतोषातिशयसूचने पर्यवस्यति । जगति संतोषभूम्नैव हि स्रजं बिभ्रति सुभ्रुवः ॥ अथ च "स्वकीयहस्तेन

स्वकीयपादकमले परिगृह्य" ....इत्यत्र * करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम् * इत्यादि श्लोकरत्नमनुसन्धेयम् । * वटदलमधिशय्य रङ्गधामन् शयित इवार्णवतर्णकः पदाब्जम् । अधिमुखमुदरे जगन्ति मातुं निदधिथ वैष्णवभोग्यलिप्सया वा * [श्रीरङ्गराजस्तवे उत्तरशतके—५४.] इति श्रीभट्टपाददिव्यसूक्तिदिव्यार्थरसानुभवेन भवितव्यमिह ॥ .... .... .... (१)

(गाथा.) मुत्तुम्मणियुम् वयिरमुम् नन्पोन्नुम् * तत्तिप्पदित्तु तलैप्पेय्दाप्पोल् * एङ्गुम्
पत्तुविरलुम् मणिवण्णन्पादङ्गळ् * ओत्तिट्टिरुन्दवा काणीरे ओण्णुदलीर्वन्दु काणीरे ॥

मणिवण्णन् पादङ्गळ् मुत्तुम् मणियुम् वयिरमुम् नन् पोन्नुम् तत्ति पदित्तु तलैप्पेयूदाप्पोल् एङ्गुम् पत्तुविरलुम् ओत्तिट्टिरुन्द आ काणीरे, ओळ्नुदलीर् वन्दु काणीरे.

नीलमणिनिभस्य कृष्णकिशोरस्य दिव्यचरणद्वंद्वे मौक्तिकमाणिक्यवज्रसुवर्णादिकं प्रत्युप्तमिवेति वर्णयितुं योग्यं दिव्याङ्गुलीदशकमत्यन्तमनोहरम् अनुरूपशोभं च विभासते । तदिदमवेक्षध्वं सख्यः! शोभनललाटशालिन्यः! समागत्य पश्यत ॥

गाथायामस्यां प्रथमपादे कतिपयरत्नकथनं नवरत्नोपलक्षणं बोध्यम् । गोमेतक नील विद्रुम पुष्पराग मरतक माणिक्य मौक्तिक वैडूर्य वज्रनामानि हि नव रत्नानि । तेषां सर्वेषामपि रत्नानामत्र कथितप्रायत्वं बोध्यम् । लोके वनिताः स्वस्वशिशूनां पादाङ्गुलिषु कराङ्गुलिषु च लाक्षारसाद्यनुलेपनेन शोभातिशयं प्रजनयन्तीति प्रत्यक्षमेतत् । तथा यशोदाऽपि कृष्णशिशुपादाङ्गुलीषु नवरत्नवर्णसदृशवर्णानुलेपनेन शोभातिशयमुत्पाद्य वीक्ष्य स्वयं हर्षप्रकर्षविवशा सती कथयामासेनदिति वेदितव्यम् ॥ .... .... (२)

(गाथा.) पणैत्तोळ्ळिळवायूच्चि पाल्पायुन्द कोङ्गै * अणैत्तार वुण्डु किडन्द विप्पिळ्ळै *
इणैक्कालिल् वेळ्ळि त्तळै निन्निलङ्गुम् * कणैक्कालिरुन्दवा काणीरे कारिकैयीर्वन्दु काणीरे ॥ ३ ॥

पणै तोळ् इळ आय्च्चि पाल् पायुन्द कोङ्गै अणैत्तु आर उण्डु किडन्द इ पिळ्ळै इणै कालिल् वेळ्ळि तळै निन्नु इलङ्गुम् कणै काल् इरुन्दआ काणीरे कारिहैयीर् वन्दु काणीरे.

वंशदण्डसमानभुजसुषमाशालिन्या यशोदानाम्न्या मम पयस्स्न्युक्षणसमुदञ्चितं पयोधरं परिगृह्य स्तन्यमापीय सहर्षं शयानस्यास्य कृष्णशिशोः पादयोः रजतमयदिव्यनूपुरशोभिजङ्घासौन्दर्यं सख्यः! पश्यत, भोस्सुन्दर्यस्समागत्य पश्यत ॥

यशोदा स्वयमेव स्वकीयभुजसुषमावर्णनमपि करोतीति यदिह निबद्धम्, तत् श्रीविष्णुचित्तसूरिकविताविशेषमात्रमिति वेदितव्यम् । वस्तुतो यशोदैव न खलु कथयति पद्यमिदम् । तद्भावभावनया विष्णुचित्तसूरिरेव हि वदति । अतो न किञ्चिदनुपपन्नम् । उपरितनगाथासु कृष्णेन बाल्यकौमारयौवनादिषु कृतानां चेष्टितानामपि प्रकरणेऽस्मिन्नुपवर्णनं यदवलोक्यते तत्रापि समाहितिरेषा द्रष्टव्या । यशोदाया वाचा कृष्णशिशोर्दिव्यावयव सौन्दर्यकीर्तनावसरे नवनीतचौर्य—पूतनावध—शकटभङ्ग—गोवर्धनोद्धरणप्रमुखचेष्टितकारित्वकथनं

न खलु संभवितुमर्हति; दृश्यते हि बहुशस्तत्कथनम्; पाश्चात्यो विष्णुचित्तसूरिरसौ स्वयं स्ववाचा तदभिधातुं प्रभवतीति सर्वं समञ्जसम् ॥ .... .... .... ... (३)

(गाथा.) उळन्दाळ् नरुनेय्योरो तडावुण्ण * इळन्दाळेरिविनाल् ईत्तळिल्मत्तिन् *
पळन्ताम्बालोच्च भयताल् तवळ्न्दान् * मुळन्दाळिरुन्दवा काणीरे मुहिळ्मुलैयीर्वन्दु काणीरे ॥४॥

उळन्दाळ् नरु नेय् ओरो तडा उण्ण इळन्दाळ् एरिविनाल् ईतु एळिल् मत्तिन् पळम् ताम्बाल् ओच्च भयत्ताल् तवळ्न्दान् मुळन्दाळ् इरुन्द आ काणीरे मुहिळ् मुलैयीर् वन्दु काणीरे.

महता प्रयासेन गव्यनिवहं संभृतवत्या मया (यशोदया) सुरक्षितनिक्षिप्तं भाण्डभरितं सुरभि घृतं पीत्वा अत एव मम खेदमुत्पाद्य, मन्थदण्डदाम्ना प्रहर्तुमुद्युक्तांम् मामवेक्ष्य भिया प्रचलितस्य कृष्णस्य जानुनी सुभगे पश्यत सख्यः! भो सुन्दरपयोधरशालिन्यः! समागत्य पश्यत ॥

कृष्णेन क्रियमाणं गव्याशनमधिकृत्य यशोदायाः खेदः किमर्थमिति चेत्, अनवरतमपरिमिताशनं क्रियमाणम् अजीर्णा व्याधिसंपादकं भविष्णु इति धिया खेदो जनन्याः संभवी खलु। अधुना डोलामधिशयानः प्रचलितुमप्यत्यन्तमशक्तः गव्यसद्भावमप्यजानन् कृष्णशिशुरस्यां गाथायां कथमेवं गव्यस्तेयनिमित्त दण्डभागित्वेन कथित इति शङ्का माभूत्; अनुभवरसिकः पाश्चात्यश्च विष्णुचित्तसूरिरित्थमभिधातुमर्हतीति प्रोक्तचरमेतत् ॥ ४ ॥

(गा.) पिरङ्गिय पेयूचि मुलै शुवैत्तुण्डिट्टु * उरङ्गुवान्पोले किडन्दविप्पिळ्ळै *
मरङ्गोळिरणियन् मार्वं मुन्कीण्डान् * कुरङ्गुकळै वन्दु काणीरे कुविमुलैयीर्वन्दु काणीरे ॥ ५ ॥

मुन् मरम्कोळ् हिरण्यन् मार्वम् कीण्डान् पिरङ्गिय पेयूचि मुलै शुवैत्तु उण्डिट्टु उरङ्गुवान् पोले किडन्द इप्पिळ्ळै कुरङ्गुहळै वन्दु काणीरे कुवि मुलैयीर वन्दु काणीरे.

पुरा मात्सर्यभरितहिरण्यकशिपुवक्षस्स्थलविभेदनविशारदस्य अधुना क्रौर्यप्राचुर्यशालिन्याः पूतनायाः स्तन्यमास्वाद्य शयनाभिनयं कुर्वतश्चास्य कृष्णस्य दिव्यावूरू पश्यत सख्यः! भो अभिरामकुचकुड्मलशालिन्यस्समागत्य पश्यत ॥

नृसिंहावतारं कृतवतैव भगवता संप्रति कृष्णेन जज्ञे—इति धर्म्यैक्यप्रकाशनरूपं तत्त्वमप्यर्थादत्र विवृतं भवति। पूतनावधवृत्तान्तश्चैवम्=(यादवाभ्युदयतः श्लोकद्वयमिह प्रदर्श्यते;) * कदाचिदन्तर्हितपूतनात्मा कंसप्रयुक्ता किल काऽपि माया। निद्रापराधीनजने निशीथे व्रजं यशोदाकृतिराविवेश॥ स्तन्येन कृष्णः सह पूतनायाः प्राणान्पपौ लुप्तपुनर्भवायाः। यदद्भुतं भावयतां जनानां स्तनंधयत्वं न पुनर्बभूव ॥ * इति ॥ कंसः स्वहननाय कृष्णो व्रजे गुप्तो वर्तत इति विदित्वा तद्व्यापादनाय कामपि मायां प्रजिघाय। पूतनानाम्नी सा अर्धरात्रे व्रजमागत्य यशोदावेषधारिणी विशदपयोधरा डोलामधिशयानमच्युतशिशुं स्तन्यं पाययन्ती अथ विदितमायोदन्तेन तेन स्तन्यपानच्छलेनैव समाकृष्टप्राणा विलिल्ये—इति कथाऽत्र वेदितव्या ॥ .... .... (५)

(गा.) मत्तकळिर्रु वसुदेवर्तम्मुडै * शित्तम्पिरियाद देवकितन्वयित्तिल् *
अत्तत्तिन्पत्तानाळ् तोन्नियवच्चुदन् * मुत्तमिरुन्दवा काणीरे मुहिळ्नहैयीर्वन्दु काणीरे ॥६॥

मत्तम् कळिरु वसुदेवर् तम्मुडै चित्तम् पिरियाद देवकि तन् वयित्तिल् हस्तत्तिन् पत्ताम् नाळ् तोन्निय अच्युतन् मुत्तम् इरुन्द आ काणीरे मुहिळ् मुलैयीर् वन्दु काणीरे.

मत्तगजनिर्वहणधुरन्धरत्वयोग्यताशालिनो वसुदेवस्य प्राणप्रेयस्या देवक्या जठरे हस्तनक्षत्राद्दशमे नक्षत्रेऽवतीर्णस्य अच्युतस्य दिव्यं गुह्यस्थानं पश्यत । मन्दस्मिताञ्चितवदना भो वनितास्समागत्य पश्यत ॥

गाथयाऽनया कृष्णशिशोः पुंलिङ्गं प्रदर्श्यते । भगवतो दिव्यावयवेषु हेयाहेयविभागमन्तरेण सर्वमप्यङ्गमुपादेयमेव हि भक्तानाम् । अस्मिन्नेव दिव्यप्रबन्धे अस्मिन्नेव शतके उपरि (७-१०) * पेरुनीर्तिरैयेळु गङ्गैयिलुम् पेरियतोर्तीर्त्तपलन्तरुनीर् शिरुच्चण्णम् तुळळश्शोर तळर्नडै नडवानो * इत्यनया सूक्त्या कृष्णशिशुलिङ्गच्युततोयबिन्दौ जाह्नवीतीर्थतोऽप्यभ्यर्हितत्वमभिधीयत इत्येतदपि भक्तिभाजामिहानुसन्धानयोग्यम् ।

हस्तनक्षत्राद्दशममृक्षं श्रोणानक्षत्रं भवति । रोहिणीनक्षत्रे जातस्य कृष्णस्य श्रोणानक्षत्रजातत्वकथनमिदं कथं युज्यत इति नाशङ्कनीयम्; * श्रोणा नक्षत्रं विष्णुर्देवता * इति हि श्रुतिः । विभवावतारेषु भगवान् यस्मिन्कस्मिन्नपि वा नक्षत्रे जायतां नाम; तस्मिन् शुभे मे भगवदसाधारणनक्षत्रभूतश्रोणानक्षत्रांशभावो भवेदवश्यमिति सूरिवराणामभिसन्धिः । अत एव तिरुप्पल्लाण्डु [मङ्गलाशासन] दिव्य प्रबन्धे षष्ठगाथायाम् नरकेसरिणोऽपि भगवतः श्रोणानक्षत्रसंजातत्वमेव संकीर्तितमिति स्मर्तव्यम् । अस्मिन्नपि दिव्यप्रबन्धे असकृदुपरि वक्ष्यते—"हे कृष्ण! अद्य त्वज्जन्मनारासदं श्रोणानक्षत्रम्" इति। अन्यदपीह बोध्यम्। रोहिणीनक्षत्राद्धस्तनक्षत्रं यथा दशमं भवति, तथा हस्तनक्षत्राद्रोहिणीनक्षत्रं दशमं भवितुमर्हम् अधोगणनायाम्। एवं च रोहिणीजातत्वमप्यत्र सूचितमेव भवतीति ॥

.... .... .... .... (६)

(गाथा.) इरुङ्कैमदकळिरु ईर्क्किन्नवनै * परुङ्जिप्परित्तु कोण्डोडुम्परमनृतन् *
नेरुङ्गु पवळमुम् नेर्नाणुम् मुत्तुम् * मरुङ्गुमिरुन्दवा काणीरे वाणुदलीर्वन्दु काणीरे ॥ ७ ॥

इरुम् कै मदकळिरु ईर्क्किन्नवनै परुङ्जि परित्तु कोण्डु ओडुम् परमन्तन् नेरुङ्गु पवळमुम् नेर् नाणुम् मुत्तुम् मरुङ्गुम् इरुन्द आ काणीरे वाळ्नुदलीर् वन्दु काणीरे.

बृहत्तरशुण्डादण्डाढ्यकुवलयापीडाख्यमदहस्तिनिर्वाहकं (गजपालकम्) निहत्य तस्य दन्तिनो दन्तं समूलमुन्मूल्य गृहीत्वा (कंसस काशं प्रति) प्रधावनं कर्तुं प्रभवतः परमपुरुषस्य विद्रुममालिकया मौक्तिकमेखल्या च विभूषितं कटितटं पश्यत सख्यः! भो विलक्षणललाटशालिन्यो ललनास्समागत्य पश्यत ॥ ७ ॥

उपरितनगाथादृष्ट्या अस्या गाथाया अन्यथाऽप्यर्थवर्णनं सुकरम्। गाथायामस्यां पूर्वार्धे कुवलयापीडामिध कंसकरिभञ्जनवृत्तान्तो नानुसन्धीयते । अपि तु व्रजे कृष्णस्य बाल्यचेष्टितविशेषः कश्चिदनुसंधीयते—इति । व्रजे वीथ्यां विहरत्सु गोपालबालकेषु बालकमेकं गजत्वेन व्यपदिश्य कश्चिदन्यो बालकस्तमाकर्षन् व्रजति ।

कृष्णस्तु तदाकर्षणं स्वयं चिकीर्षुस्सन् तं बालकं प्रह्वत्य समुत्सार्य स्वयमेव समाकर्षन् व्रजति—इति कश्चन बालक्रीडाविशेषः। सोऽयमत्रानुसंधीयत इति सुवचम्।

कुवलयापीडभञ्जनकथा त्वेवम्;—कंसो व्रजे वर्धमानं कृष्णकिशोरं जिघांसुरासुरप्रकृतीननेकानसकृत्तत्र प्रेषयन्नपि वितथमनोरथ एव भवन् अन्ततः कृष्णबलभद्रौ व्रजान्मथुरामनाय्य व्यापादयितुमिच्छन् स्वकर्तृकधनुर्यागप्रेक्षणापदेशेन तावक्रूरद्वारा स्वनगरमागमयतिस्म; तदात्वे तदीयं हर्म्यमुद्दिश्य समागच्छन्तं नन्दसूनुमभिहन्तुं कृतसंकेतः कुवलयापीडनामकः कंसहस्ती तत्पालकेन चोदितः किमपि दुश्चेष्टितं कर्तुमुपचक्रमे। तदा शौर्यवीर्यपराक्रमनिधिर्वासुदेवो जम्बालाच्छैवालमाकर्षन्निव तस्य दन्तिनो दन्तावनायासेन समाकृष्य तत एव तम् आधोरणं च व्यापाद्य क्षणेन विजयश्रियमाश्लिष्यतिस्मेति॥ .... .... .... (७)

(गाथा.) वन्द मदलै कुळाच्चै वलिशेय्दु * तन्दक्कळिरुपोल् ताने विळैयाडुम् *
नन्दन्मदलैक्कु नन्रुमळहिय * उन्दियिरुन्दवा काणीरे ओळियिळैयीर्वन्दु काणीरे॥ ८॥

| | |
|---|---|
| वन्द मदलै कुळाच्चै वलि शेयूदु दन्तक्कळिरु पोल् ताने विळैयाडुम् नन्दन् मदलैक्कु नन्रुम् अळहिय उन्दि इरुन्द आ काणीरे ओळि इळैयीर् वन्दु काणीरे. | स्वात्मना सह क्रीडितुमुपागतानां वल्लवबालकानां निवहे स्वात्मनश्शक्तिविशेषं प्रदर्श्य स्वयमेव प्राधान्यं प्राप्य सद्योऽङ्कुरितदन्तदन्तावलवच्चारुतरं क्रीडतो नन्दनन्दनस्यातिरमणीयनाभिसन्निवेशं पश्यत सख्यः! दिव्यभव्यभूषणशालिन्यः पश्यत ललनाः! ॥ ८॥ |

(गाथा.) अदिरुक्कडल् निरवण्णनै * आय्चि मदुरमुलैयूट्टि वञ्जित्तु वैत्तु *
पदरप्पडामे पळन्ताम्बालार्त्त * उदरमिरुन्दुवा काणीरे ओळिवळैयीर्वन्दु काणीरे॥ ९॥

| | |
|---|---|
| आयूच्चि मधुर मुलै ऊट्टि अदिरुम् कडल् निरवण्णनै वञ्चित्तु वैत्तु पदरप्पडामे पळम् ताम्बाल् आर्त्त उदरम् इरुन्द आ आणीरे ओळि वळैयीर् वन्दु काणीरे. | यशोदया मया स्वकीयं मधुरं स्तन्यं पाययित्वा संवर्धितस्य अर्णवतर्णकोपमेयस्य कृष्णस्य गव्यस्तेयापराधदण्डनरूपं विप्रलम्भेन दाम्ना निबद्धमुदरं पश्यत सख्यः! भास्वत्करवलयशालिन्यो ललनाः! पश्यत। ९॥ |

(गाथा.) पेरुमा वुरलिल् पिणिप्पुण्डिरुन्दु * अञ्जिरुमा मरुदमिरुत्त विप्पिळ्ळै *
कुरुमा मणिप्पूणू कुलावि त्तिहळुम् * तिरुमार्विरुन्दवा काणीरे शेयिळैयीर्वन्दु काणीरे॥

| | |
|---|---|
| पेरु मा उरलिल् पिणिप्पुण्डु इरुन्दु अङ्गु इरु मा मरुदम् इरुत्त इप्पिळ्ळै गुरु मा मणि पूणू कुलावि तिहळुम् तिरुमार्वु इरुन्दवा काणीरे शेइळैयीर् वन्दु काणीरे. | गव्यस्तेयापराधनिमित्तेन बृहत्तरोलूखलबन्धानुभवदशायामेव यमलार्जुनभञ्जनाभिव्यञ्जितशक्तिविशेषस्यास्य गोपबालस्य अनर्घकौस्तुभरत्नोद्भासि वक्षस्स्थलं पश्यत सख्यः, चारुभूषणभूषिताङ्ग्यः पश्यत सख्यः॥ १०॥ |

यमलार्जुनभङ्गकथा चैषा,—पुरा नारदशापेन कुबेरपुत्रौ नलकूबरमणिग्रीवौ व्रजे अर्जुनानोकहद्वंद्व-भावमापन्नौ शापमोक्षकालप्रतीक्षावास्ताम्; यदा नन्दसूनुरुद्धखलमप्याकर्षन् सन् सरभसं यमलार्जुनयोर्मध्ये जगाम, तदा ह्युद्धखलेन तेन तिरश्चीनेन संमर्दितौ तौ वृक्षौ प्रशिथिलितमूलौ प्रपेततुः; अथ यक्षराजपुत्रौ च निर्मुक्त-शापौ निजरूपमवाप्तवन्तौ भगवन्तं स्तुत्वा निरगमनामिति ॥ .... .... (१०)

(गाथा.) नाळ्कळोर्नालैन्दु तिङ्गळ्ळविले * ताळै निमिर्त्तु शकटत्तै चाडिप्पोय् *
वाळ्कोळ्वळै येयित्तारुयि वँव्विनान् * तोळ्कळिरुन्दवा काणीरे शुरिकुळलीर्वन्दु काणीरे ॥

| | |
|---|---|
| नाळ्कळ् ओर् नालैन्दु तिङ्गळ् अळविले ताळै निमिर्त्तु शकटत्तै शाडि पोय् वाळ्कोळ् वळै एयिरु आरुयिर् वव्विनान् तोळ्हळ् इरुन्दआ काणीरे शुरि कुळलीर् वन्दु काणीरे. | पञ्चषमासात्ययाभ्यन्तर एव [अत्यल्पवयस्येव] चरणमुन्नमय्य आसुरं शकटं ध्वस्तवतः घोरकुटिलदन्तपङ्क्तिशालिन्याः पूतनायाः प्राणानपहृतवतश्च कृष्णस्य भुजसौन्दर्यं पश्यत सख्यः, कुटिलालक-शोभिन्यस्सख्यः पश्यत ॥ ११ ॥ |

शकटासुरभञ्जनकथा चैवम्—व्रजे कदाचिद्यशोदा कृष्णं स्वगृहद्वारे शकटस्याधस्ताच्छाययित्वा यमुनां गता; अथ कृष्णजिघांसया कंसप्रेरितेष्वन्यतमः कृष्णाश्रयभूतं शकटमाविश्य निपत्य चोपरि हन्तुमयतत; तदात्वे कृष्णो भगवान् सर्वरक्षणदक्षिणेन स्वचरणेनैव स्वस्यापि रक्षां संपिपादयिषुः स्तन्यार्थं प्ररुदन्निव चरणमुन्नमय्य तदभिघातेन सासुरं शकटं शिथिलीचकारेति ॥ .... .... .... (११)

(गाथा.) मैत्तडङ्कण्णियशोदै वळर्किन्र * शेयूत्तलै नीलनिरत्तु चिरुप्पिळ्ळै *
नेयूत्तलै नेमियुम् शङ्गुम् निलाविय * कैत्तलङ्गळ् वन्दुकाणीरे कनङ्कुळैयीर्वन्दु काणीरे ॥

| | |
|---|---|
| मै तडम् कण्णि अशोदै वळर्क्किन्र शेयूत्तलै नील निरत्तु शिरु पिळ्ळै नेयूत्तलैं नेमियुम् शङ्गुम् निलाविय कै तलङ्गळ् वन्दु काणीरे कनम् कुळैयीर् वन्दु काणीरे. | अञ्जनालंकृतविपुलविलोचनशालिन्या यशोदया मया संवर्ध्य-मानस्य समुत्तुङ्गक्षेत्रसमुत्पन्ननीलोत्पलसवर्णस्य च बालकृष्णस्यास्य सुतीक्ष्णसुदर्शनपाञ्चजन्याञ्चिते पाणितले पश्यत सख्यः। हिरण्यकुण्ड-लाढ्यकर्णशालिन्यो ललनास्समागत्य पश्यत ॥ १२ ॥ |

अत्र यशोदाया असितेक्षणात्वकथनं कृष्णस्य नीलवर्णविग्रहवत्त्वकथनं चावधेयम्। असितेक्षणा यशोदा नक्तंदिवं साभिनिवेशं दर्शंदर्शं सादरं पुष्णाति खलु कृष्णशिशुम्; अत एव सोऽयं यशोदानयनगतनीलि-मानमपि स्वात्मन्यावाह्य अतिशयितनीलच्छविविग्रहो विभातीति हृदयमिव। [सुदर्शनपाञ्चजन्याञ्चिते पाणितले पश्यत] इति कथनेन—मध्येमध्ये कदाचित्कृष्णो निजवक्त्रे सतलोकीमिव हस्ते सुदर्शनपाञ्चजन्यावपि साक्षात्कार-यति समुत्सुकजनान् इति विज्ञायते। अथवा, रेखात्मकशंखचक्राङ्कितत्वं वा पाणितलयोरिह विवक्षितम्। तथाच यादवाभ्युदये (४—३१) * सुजातरेखात्मकशंखचक्रं ताम्रोदरं तस्य करारविन्दम्। विलोकयन्त्याः फलविक्र-यिण्या विक्रेतुमात्मानमभूद्विमर्शः * इतीदं श्लोकरत्नमत्र स्मरणमर्हति ॥ .... .... (१२)

(गाथा.) वण्डमर्पूङ्गुळ्ळ आयूच्चि महनाह * कोण्डु वळर्किन्न कोवलर्कुट्टर्क्कु *
अण्डमुम् नाडुमडङ्ग विळुङ्गिय * कण्डमिरुन्दवा काणीरे कारिहैयीर्वन्दु काणीरे ॥ १३ ॥

वण्डु अमर् पूम् कुळल आय्च्चि महनाह कोण्डु वळर्किन्न कोवलर् कुट्टर्क्कु अण्डमुम् नाडुम् अडङ्ग विळुङ्गिय कण्डम् इरुन्द आ काणीरे कारिहैयीर् वन्दु काणीरे.

षट्पदझंकारखुगन्धदिव्यकुसुमालंकृतचिकुरबन्धया यशोदया मया पुत्रत्वेन स्वीकृत्य संवर्ध्यमानस्य नन्दनन्दनस्यास्य कृत्स्नचराचरकबलीकरणकुशलकण्ठसौन्दर्यं पश्यत सख्यः, भो भो स्सुन्दर्य स्समागत्य पश्यत ॥ १३ ॥

(गाथा.) एन्तोण्डैवायूच्चिङ्गम् वावेन्रेडुत्तुकोण्डु * अन्दोण्डैवायमुदादरित्तु * आयूच्चियर्
तन्तोण्डैवायाल् तरुक्किप्परुहुम् * इचेन्तोण्डैवायवन्दु काणीरे शेयिळैयीर्वन्दु काणीरे ॥ १४ ॥

तोण्डै वाय् एन् शिङ्गम् ! वा एन्नु एडुत्तुक्कोण्डु अमू तोण्डै वायमुदु आदरित्तु आयूच्चियर् तम् तोण्डै वायाल् तरुक्कि परुहुम् इ शेम् तोण्डै वायू वन्दु काणीरे शेयिळैयीर् वन्दु काणीरे.

" हे बिम्बफलोपमेयदिव्याधरसुभगसिंहशाब ! अस्मत्सविधमायाहि समायाहि " इति सादर मूर्च्छुपीभिरधरामृतपानरसिकाभिर्गोपीभिस्सोत्कण्ठं निपीयमानामृतं कृष्णस्य बिम्बाधरमिमं पश्यत सख्यः । दिव्यभूषणालंकृतललना भो स्समागत्य पश्यत ॥ १४ ॥

" अस्मदीयसिंहशिशो ! आस्माकीन कलभ ! " इत्येवमेवं हि प्रेमविवशानां वनितानां वचनव्यक्तिः ; तास्ता वल्लव्यः स्वस्वप्रेमानुरूपतया कृष्णम् एवमेवं संबोध्य कटितटे सादरभरं समादाय तदधरसुधां निपीय प्रहृष्यन्तीति स्वभावोक्तिः ॥ .... .... .... .... (१४)

(गाथा.) नोक्कियशोदै नुणुक्किय मञ्जळाल् * नाक्कुवळित्तु नीराट्टुमिन्नम्बिक्कु *
वाक्कुम् नयनमुम् वायुम् मुरुवलुम् * मूक्कुमिरुन्दवा काणीरे मोयूकुळलीर्वन्दु काणीरे ॥

अशोदै नोक्कि नुणुक्किय मञ्जळाल् नाक्कु वळित्तु नीराट्टुम् इन्नम्बिक्कु वाक्कुम् नयनमुम् वायुम् मुरुवलुम् मुक्कुम् इरुन्द आ काणीरे मोय् कुळलीर् वन्दु काणीरे.

यशोदया मया दिव्यमङ्गलविग्रहसौकुमार्यानुरूपं संमर्दितां हरिद्रामुपादाय जिह्वानिर्लेहनपूर्वकं क्रियमाणाभिषेकस्यास्य सकलशुभगुणपूर्णस्य कृष्णस्य वक्त्रनयनाधरमन्दस्मितनासिकादिसौभाग्यं पश्यत सख्यः, रमणीयचिकुरबन्धास्सख्यस्समागत्य पश्यत ॥ १५ ॥

(गाथा.) विण्कोळमरर्हळ् वेदनै तीर * मुन्मण्कोळ्वशुदेवर्तम्महनायू वन्दु *
तिण्कोळशुरै तेय वळर्हिन्रान् * कण्कळिरुन्दवा काणीरे कनवळैयीर्वन्दु काणीरे ॥ १६ ॥

मुन् पिण् कोळ्ळ अमरर्हळ्ळ वेदनै तीर वसुदेवर् तम् महनाय् वन्दु तिणू- कोळ्ळ असुररै तेय वळर्हिन्नान् कण्गळ्ळ इरुन्द आ काणीर् कन- वळैयीर् वन्दु काणीरे.

दिविषदां दुःखशान्तये भुवि वसुदेवात्मजत्वेनावतीर्य बलिष्ठान् दैत्यान्नित्यं विनाश्य वर्धमानस्य मधुसूदनस्य दृशोस्सौन्दर्यं पश्यत सख्यः, कनकवलयाभिरामहस्तास्सख्यस्समागत्य पश्यत ॥ १६ ॥

यद्यप्यधस्तनगाथायां नयनसौन्दर्यप्रदर्शनमपि निबद्धम्, तथाऽपि तदनेकावयवसमुदायसन्दर्शनमध्यपतितमिति, विशिष्य कथने रुच्या गाथायामस्यां नयनसौन्दर्यमात्रनिर्देशः ॥ .... (१६)

(गाथा.) परुवम् निरम्बामे पारेल्लामुय्य * तिरुविन्वडिवोक्कुम् देवकि पेत्त *
उरुवु करिय ओळिमणिवण्णन् * पुरुवमिरुन्दवा काणीरे पूण्मुलैयीर्वन्दु काणीरे ॥ १७ ॥

परुवम् निरम्बामे पार् एल्लाम् उय्य तिरुविन् वडिवु ओक्कुम् देवकि पेत्त उरुवु करिय ओळि मणि वण्णन् पुरुवम् इरुन्द आ काणीर् पूण् मुलैयीर् वन्दु काणीरे.

वयसः परिपाकात्प्रागेव यथा निखिलमपि जगतीतलमधिगतोज्जीवनं स्यात्तथा नाम लक्ष्मीसमानदिव्यविग्रहया देवक्या प्रसूतस्य नीलमणिविडम्बिवपुषो वासुदेवस्य भ्रूसौभाग्यं पश्यत सख्यः, हारालंकृतवक्षसो भो ! वनितास्समागत्य पश्यत ॥ १७ ॥

साधुपरित्राणदुष्कृद्विनाशनादिरूपं भुवनरक्षणं भगवान् रामचन्द्रो वयःपरिपाकसमनन्तरमेव चक्रे, कृष्णस्तु शैशवतः प्रभृत्येव [भुवि चरणनिधानयोग्यतोदयात्प्रागेव] वितेने तदिति प्रथमपादतः स्फोर्यते ॥ (१७)

(गाथा.) मण्णुम्मलैयुम् कडलुमुलहेळुम् * उण्णुन्तिरत्तु महिळ्न्दुण्णुम्पिळ्ळैक्कु *
वण्णमेळिल्कोळ्ळ महरक्कुळैयित्रै * तिण्णमिरुन्दवाकाणीरे शेयिळैयीर्वन्दुकाणीरे ॥ १८ ॥

मण्णुम् मलैयुम कडलुम् उलहु एळुम् उण्णुम्तिरत्तु महिळ्न्दु उण्णुम् पिळ्ळैक्कु एळिल् वण्णम् कोळ्ळ मकरकुळै इवै तिण्णम् इरुन्द आ काणीर् शे इळैयीर् वन्दु काणीरे.

संवर्तसमये भूभूधरसागरादिसमन्वेतां सप्तलोकीमपि सकुतूहलं निगीर्य समधिगतसंतोषस्यास्य मुकुन्दस्य सद्वर्णाश्चितमकरकुण्डलवैलक्षण्यं पश्यत सख्यः, रुचिरभूषणलसना भोस्समागत्य पश्यत ॥ १८ ॥

(गाथा.) मुत्तिलुम् तूदैयुम् मन्कैमेल्पूवैयुम् * शित्तिलिळैत्तु तिरितरुवोर्हळै *
पत्तिप्परित्तुक्कोण्डोडुम् परमन्तन् * नेत्तियिरुन्दवा काणीरे नेरिळैयीर्वन्दु काणीरे ॥ १९ ॥

मुत्तिलुम् तूदैयुम् मुन्कैमेळ पूवैयुम् शित्तिल इळैत्तु तिरितरुवोर्हळै पत्ति परित्तुक्कोण्डु ओडुम् परमन्तन् नेत्ति इरुन्द आ काणीर् नेरिळैयीर् वन्दु काणीरे.

(सैकतसद्मनिर्माणात्मकलीलाविक्षेपनिरतानां बालिकानां लीलोपकरणभूतानि) लघुशूर्प-लघुभाण्ड-करशकुन्तादीनि वस्तूनि स्वैरमपहृत्य धावतो धूर्ताग्रेसरस्य दामोदरस्यास्य निटिलरामणीयकम् पश्यत सख्यः, चारुभूषणोज्ज्वलविग्रहास्सख्यस्समागत्य पश्यत ॥ १९ ॥

वीथीषु तैस्तैर्गृहनिर्माणार्थं संभृतेषु इष्टकासिकतादिषु अर्भका निबद्य कृत्रिमगृहनिर्माणात्मकखेलननिरतां भवन्तीति तदिदं सर्वत्रापि सर्वानुभवसाक्षिकम्। व्रजेऽप्येवंविधं क्रीडितं सम्पद्यते। तदा कृष्णस्तत्र गत्वा स्वपराक्रमभूमवलेन तासां लीलोपकरणवस्तुजातं हठादपहृत्य पादाघातेन लीलां च भञ्जयित्वा सरभसं धावन् लीलाविशेषमनुभवतीति दिव्यप्रबन्धेषु तत्र तत्र प्रस्तूयते। तदेवात्राप्यभ्यधायि। तथा धावनकाले स्वेदाम्बुकणिकाचितत्वमेव ललाटस्य रामणीयकमिह विवक्षितम्॥ .... .... ... (१९)

(गाथा.) अळहिय पैम्पोन्निन् कोल्ऌ अङ्कैकोण्डु * कळलूहळ् शदङ्गै कलन्देङ्गुमार्प्प *

मळकन्निनङ्गळ् मरित्तु त्तिरिवान् * कुळलूहळिरुन्दवा काणीरे कुविमुलैयीर्वन्दु काणीरे॥

| | |
|---|---|
| अळहिय पैम्पोन्निन् कोल्ऌ अम् कै कोण्डु<br>कळलूहळ् शदङ्गै कलन्दु एङ्गुम्<br>आर्प्प मळ कन्नु इनङ्गळ् मरित्तु<br>तिरिवान् कुळलूहळ् इरुन्द आ<br>काणीर् कुवि मुलैयीर् वन्दु काणीरे. | रमणीयां हिरण्मयीं गोयष्टिं करतलेन प्रगृह्य चरणाभरणध्वनिसनाथं वत्ससंचारणेन पर्यटनशीलस्य कृष्णस्य कुन्तलभरान् पश्यत सख्यः, चारुपयोधररुचिरा वनिता भो स्समागत्य पश्यत॥ २०॥ |

[इति पादादिकेशान्त दिव्यावयवसौन्दर्यसंप्रदर्शनं समाप्तम्॥] .... (२०)

(गाथा.) शुरुप्पार्कुळलि यशोदै मुन्शोन्न * तिरुप्पाद केशत्तै तेन्पुदुवैप्पट्टन् *

विरुप्पालुरैत्त इरुपदोडोन्नुमुरैप्पार्पोय् * वैहुन्दत्तोन्नुवर्तामे॥ २१॥

फलश्रुतिगाथा सेयम्।

| | |
|---|---|
| तिरु पादकेशत्तै शुरुम्बु आर् कुळलि<br>यशोदै मुन् शोन्न, तेन् पुदुवै पट्टन्<br>विरुप्पाल् उरैत्त इरुपदोडु ओन्नुम्<br>उरैप्पार् ताम् पोय् वैकुण्ठत्तु<br>ओन्नुवर्. | कृष्णस्य पादादिकेशान्तदिव्यावयववैलक्षण्यवर्णनव्यग्राया भृङ्गझंकारभरितचिकुरप्रकराया यशोदाया भावनामावाहयता श्रीधन्विनव्यनगरावसथ-भट्टनाथमुनीन्द्रेण सामिनिवेशमुदीरिता इमा एकविंशतिम् गाथाः कीर्तयन्ति ये ते प्राकृतमण्डलमिदं परित्यज्य जग्मिवांसो दिव्ये धाम्नि नित्यं रमेरन्॥ २१॥ इति फलकीर्तनेन समापितम्॥ |

विंशतिगाथात्मकस्य सूक्तस्यास्य सारसंग्राहकपद्यमिदम्:—

श्लो॥ देवक्या नन्दसद्म प्रहितमुपगतं कृष्णमाश्चर्यचेष्टं
सर्वाङ्गीणाभिरूप्यप्रचुरमनुपमं वीक्ष्य संमोदमाना।
आहूयाशेषगोपीः स्वसुतपदसरोजादिकेशान्तशोभां
व्याचक्रे सा यशोदा, तदिदमभिदधद्विष्णुचित्तो गतिर्नः॥

इति श्रीभट्टनाथसूक्ते प्रथमशतके द्वितीयं दशकमवसितम्॥

श्रीभट्टनाथसूरिदिव्यचरणौ शरणम्॥

॥ श्रीः ॥

## श्रीभट्टनाथसूक्ते - प्रथमशतके तृतीयदशकम्—माणिक्कम्कट्टि

### ॥ श्रीकृष्णकिशोर · डोलागीतम् ॥

अवतारिका—लोके शिशून् डोलातल्प मधिशाय्य मात्रादयो विविधगीतानि गायन्ति शिशूनां रोदनशान्तये सुखसुप्तये चेति सर्वानुभवसिद्धमेतत्। एवमेव पुरा यशोदाऽपि कृष्णकिशोरं डोलिकातलिममधिशयानं कृत्वा चतुर्मुखपञ्चमुखवासववैश्रवणवरुणप्रमुखदैवतनिवहसमर्पितानि डोलादिव्यभूषणादीनि वस्तून्यभिधाय, "कृष्णकिशोर! मा स्म रोदीः; पश्य त्वद्भृत्यभूतैर्दैवैस्समर्पितानि वस्तूनि; यथासुखं शेष्व; मुञ्च मुञ्च विलपनम्" इत्यभिधाय गायन्ती डोलोत्सवानुभवानन्दममितमविन्दत। श्रीविष्णुचित्तसूरिवरोऽपि तामनुकृत्य तद्गीतानुवादसरण्या दिव्यगाथादशकमनुगृह्य प्रमुमुदे। तदेव दशकमेतत् ॥ .... *

(गाथा.) माणिक्कङ्कट्टि वयिरमिडै कट्टि * आणिप्पोन्नाल् शेय्द वण्णच्चिरुत्तोट्टिल् *
पेणि युनक्कु प्पिरमन्विडुतन्दान् * माणिक्कुरळने तालेलो वैयमळन्दाने तालेलो ॥ १ ॥

माणि कुरळने! माणिक्कम् कट्टि इडै वज्रम् कट्टि आणि पोन्नाल् शेय्द वण्णम् शिरु तोट्टिल् पिरमन् उनक्कु पेणि विडुतन्दान्; तालेलो; वैयम् अळन्दाने! तालेलो.

वामनब्रह्मचारिवेषधारणेन महाबलियज्ञवाटनिकटमुपगत भगवन् वासुदेव! माणिक्यवज्रादिखचिताम् अत्युत्तमसुवर्णनिर्मितां डोलिकां चतुर्मुखस्तवकृते सोत्कण्ठं प्रजिघाय भगवन्। निद्राहि; लोकविक्रान्तचरण! निद्राहि ॥ १ ॥

द्राविडभाषायां, 'तालेलो' इति कथनं साङ्केतिकम्। डोलायां शिशूनां सुखसुप्त्यर्थं गीयमानं गीतं 'तालाट्टु' इति संशब्द्यते ॥ .... .... .... .... (१)

(गाथा.) उडैयार्हनमणियोडु ओण्मादळम्पू * इडै विरविकोत्त एळिल्तेळ्हिनोडु *
विडैयेरु कापालि ईशन्विडुतन्दान् * उडैयायळेलळेल् तालेलो उलहमळन्दाने तालेलो ॥ २ ॥

उडैयाय्! उडै आर् कनमणियोडु ओण् मादळम् पू इडै विरवि कोत्त एळिल् तेळ्हिनोडु विडै एरु कापालि ईशन् विडुतन्दान्; अळेल् अळेल् तालेलो; उलहम् अन्ळन्दाने तालेलो.

स्वामिन्! कटितटार्हकनकाभरणविशेषम्, नानामणिनिकरग्रथितं रमणीयमाभरणविशेषम्, चारुदाडिमकुसुमोपमेयभूषाम्, मणिततिप्रग्रथितमेखलां च वृषभवाहनः कपाली पार्वतीपतिः प्राहिणोत्; भगवन्! विहाय रोदनं निद्राहि; विक्रान्तभुवन भगवन् निद्राहि ॥ २ ॥

(गाथा.) एन्दम्बिरानार् एळिल् तिरुमार्वर्क्कु * शन्दमळहिय तामरैत्ताळर्क्कु *
इन्दिरन्तानुम् एळिलुडै किङ्किणि * तन्दु उवनाय् निन्रान् तालेलो तामरैकण्णने तालेलो ॥

| | |
|---|---|
| तामरै कण्णने! एन् तन्बिरानार् एल्लि तिरुमार्वर्कु शन्दम् अळहिय तामरै ताळर्कु इन्द्रन् तानुम् एल्लि उडै किणिकणि तन्दु उवनाय् निन्नान् तालेलो, तालेलो. | हे पुण्डरीकाक्ष कृष्णकिशोर! अस्मत्स्वामिनः अतिरमणीयवक्षसः परमभोग्यपादारविन्दस्य च तव कृते शचीपति रतिरम्यं किङ्किणीभूषणं समर्प्य नातिदूरे निवसति। (तदिदमुपायनं कटाक्षवीक्षया परिगृह्य) निद्राहिनिद्राहि ॥ ३ ॥ |

(गाथा.) शङ्गिन्वलम्पुरियुम् शेवडि क्किण्किणियुम् * अङ्गै चरिवळैयुम् नाणुमरैत्तोडरुम् *
अङ्गणू विशुम्बिल् अमरर्हळ् पोत्तन्दार् * शेङ्गट्करुमुहिले तालेलो देवकिशिङ्गमे तालेलो ।।४।।

| | |
|---|---|
| शेम् कण् करु मुहिले! शङ्गिल् वलम् पुरियुन् शेवडि किण्किणियुम् अमूर्कै शरि वळैयुम् नाणुम् अरै-तोडरुम् अम् कण् विशुम्बिल् अमरर्हळ् पोत्तान्दार्; देवकीसिंमे! तालेलो तालेलो. | हे नलिनायतलोचन! नीलमेघनिभ कृष्णकिशोर! शङ्खेषु श्लाघ्यं दक्षिणावर्तपाञ्चजन्यं, दिव्यपादभूषां, किङ्किणीमालिकाम्, करवलयम्, मेखलाम्, कटिसूत्रं च तव कृते दिविषदः प्रेष्यामासुः। हे देवकीसिंह! तदिदमखिलं स्वीकृत्य निद्राहि निद्राहि ॥ ४ ॥ |

(गाथा.) एल्लिलातिरुमार्विनर्कु एर्कुमिवैयेन्रु * अळहिय ऐम्पडैयुम् आरमुम् कोण्डु *
वळुविल्कोडैयान् वयिच्चिरवणन् * तोळुदु उवनाय् निन्रान् तालेलो तूमणिवण्णने तालेलो ।।

| | |
|---|---|
| तू मणि वण्णने! एल्लि आर् तिरुमा-र्विर्कु इवै एर्कुम् एन्नु अळहिय ऐम्पडैयुम् हारमुम् कोण्डु वळु इल् कोडैयान् वैश्रवणन् तोळुदु उवनाय् निन्नान्; तालेलो तालेलो. | हे विमलमणिवर्ण कृष्ण! तव सुन्दरवक्षस्स्थलस्य अतितरामिमे अनुरूपे इत्यनुसंधाय चारुतरपञ्चहेतीभूषम्, एकावलीं चादाय वैश्रवण औदार्यनिधिरत्रागत्य प्रणिपत्य नातिदूरे वर्तते। तदिदमवगच्छन् निद्राहि निद्राहि ॥ ५ ॥ |

[अस्यां गाथायां तृतीयपादे "वयिच्चिरावणन्" इत्यपि पाठः प्रथते। 'वैश्रवण' इतीदं संस्कृतपदं द्राविडयां 'वयिच्चिरवणन्' इतिवत् 'वयिच्चिरावणन्' इत्यपि विकारं प्राप्तुमलम्। तादृशविकारस्यात्र नास्त्यावश्यकतेति, पूर्वाचार्यव्याख्यायां चात्र मुद्रणावद्यसंपातो वर्तत इति च महान्त आशेरते। द्राविडलक्षणगोचरविचारविस्तरोऽत्र माभूदिति संक्षेपः।] .... .... .... (५)

(गाथा.) ओदक्कडलिल् ओळिमुत्तिनारमुम् * शादिप्पवळमुम् शन्दचरि वळैयुम् *
मादक्कवेन्रु वरुणन्विडुतन्दान् * शोदिच्चुडर्मुडियाय् तालेलो शुन्दरत्तोळने तालेलो ॥ ६ ॥

| | |
|---|---|
| शोदिच्चुडर् मुडियाय् ओदक्कडलिल् ओळि मुत्तिन् आरमुम् जातिप्रवाल-मुम् शन्दचरि वळैयुम् मा तक्क एन्नु वरुणन् विडुतन्दान्; तालेलो; सुन्दरत्तोळने! तालेलो. | ज्योतिश्चूडालमौले! कृष्ण! जलनिधिसमुद्भवमौक्तिकस्रजम्, सुजातीयविद्रुमस्रजम्, विलक्षणकङ्कणं च तव भृशमनुरूपाण्याभरणान्याकलय्य प्रचेताः प्रजिघाय। तदिदमाकर्णयन् सन् निद्राहि; सुन्दरबाहो निद्राहि ॥ ६ ॥ |

(गाथा.) कानार्नरुन्तुळाय् कैशेय्द कण्णियुम् * वानार्शेल्लुञ्शोलै कर्प्पहत्तिन्वाशिहैयुम् *
तेनार्मलर्मेल् तिरुमङ्गै पोत्तन्दाळ् * कोने यळेलळेल् तालेलो कुडन्दैकिडन्दाने तालेलो ॥७॥

कोने! कान् आर् नरुम् तुळाय् कैशेय्द कण्णियुम् वान् आर् शेल्लुम् शोलै कर्पहत्तिन् वाशिहैयुम् तेन् आर् मलर्मेल् तिरुमङ्गै पोत्तन्दाळ् अळेल् अळेल् तालेलो कुडन्दै किडन्दाने! तालेलो.

स्वामिन् कृष्ण! दिव्यसौरभाढ्यतुलसीदलग्रथितां स्रजम्, दिव्यकल्पककुसुममालिकां च पद्मवनालया भगवती लक्ष्मीः प्राहिणोत् । मास्म रोदीः ; निद्राहि निद्राहि । श्रीकुम्भघोणक्षेत्रशायिन् निद्राहि ॥ ७ ॥

(गाथा.) कच्चोडु पोर्च्चुरिहै काम्बु कनवळै * उच्चि मणिच्चुट्टि ओण्डाणिर् प्पोर्प्पू *
अच्चुदनुक्केन्रु अवनियाळ् पोत्तन्दाळ् * नच्चु मुलैयुण्डाय् तालेलो नारायणा! अळेल् तालेलो॥

नञ्जु मुलै उण्डाय्! कच्चोडु पोन् छुरिकै काम्बु कनवळै उच्चि मणि शुट्टि ओण् ताळ् निरै पोन्पू अच्युतनुक्क एन्रु अवनियाळ् पोत्तन्दाळ्; नारायणा! अळेल् तालेलो तालेलो.

विषदिग्धपूतनास्तनपयःपानपटो! मुकुन्द! उदरबन्धनपट्टिकां स्पृहणीयच्छुरिकां दिव्यं वासः, कनकमय केयूरे, दिव्यमणिमयनिटिलभूषां च भगवती भूदेवी अच्युतस्य तवेति संकल्प्य प्रेषयामास। नारायण निद्राहि मास्म रोदीः ॥ ८ ॥

(गाथा.) मेय्त्तिमिरु नानप्पोडियोडु मञ्जळुम् * शेय्य तडङ्कण्णुक्कु अनञ्जनमुम्शिन्दुरमुम् *
वेय्य कलैप्पाहि कोण्डु उवळाय् निन्राळ् * ऐयावळेलळेल् तालेलो अरङ्गत्तणैयाने तालेलो॥

ऐया! मेय् तिमिरुम् नानप्पोडियोडु मञ्जळुम् शेय्य तडम् कण्णुक्कु अञ्जनमुम् सिन्दुरमुम् वेय्य कलै पाहि कोण्डु उवळाय् निन्राळ्; अळेल् अळेल् तालेलो; अरङ्गत्तु अणैयाने तालेलो.

प्रभो भगवन्! तव दिव्याङ्गभोग्यं पटवासं, हरिद्राचूर्णं, दिव्यनयनाञ्जनं, सिन्दूरं च हरिणवाहनवती दुर्गादेवी [अथवा कलाधिदेवता सरस्वती] समादाय नातिदूरेऽवतिष्ठते । निद्राहि, मास्म रोदीः । श्रीरङ्गशायिन् निद्राहि ॥ ९ ॥

[अस्यां गाथायां तृतीयचरणे 'वेय्यकलैप्पाहि' इत्यस्य द्राविडवाक्यस्य द्वेधाऽप्यर्थस्संभवति—दुर्गादेवी, सरस्वतीति च । अर्थद्वितयमप्याचार्या अनुजगृहुः ॥ ] .... .... (९)

(गाथा:) वञ्जनैयाल्वन्द पेय्च्चि मुलैयुण्ड * अञ्जनवण्णनै आय्च्चि तालाट्टिय *
शेञ्शोल्मरैयवर् शेर्पुदुवै प्पट्टन्शोल् * एञ्जामै वल्लवर्क्कु इडरैयिडदर्नि ॥ १० ॥

वञ्जनैयाल् वन्द पेयूच्चि मुलै उण्ड
अञ्जनम् वण्णनै आयुच्चि तालाट्टिय;
शेम् शोल् मरैयवर् शेर् पुदुवै पट्टन्
शोल् एञ्जामै वल्लवर्कु इडर् इल्लै
तान्.

विप्रलम्भकनेपथ्यच्छन्नायाः पूतनायाः स्तन्यपायिनम् अञ्जनसमप्रभम् अच्युतं प्रति पुरा यशोदया गीतानि डोलागीतानि वैदिकविद्वज्जनमण्डितश्रीधन्विनव्यनगरालङ्कारभूतो भट्टनाथः प्राह द्राविडीभिर्गाथाभिः। ता इमा गाथा असंकोचमभ्यस्यन्तो महान्तस्सर्वदुःखातिगा भवितारः! [इति फलश्रुत्या दशकमिदं समापितम्] ॥ १०॥

— एतद्दशकसारार्थसंग्राहकोऽयं श्लोकः —

डोलायां शाययित्वा मणिनिभवपुषं केशवं सा यशोदा
वेधाश्शम्भुर्मरुत्वा नमरसमुदयो यक्षराजः प्रचेताः।
पद्मा धात्री च दुर्गा (वाणी) तलिममथ च सद्भूषणान्यादरेण
प्राहिण्वन्नित्यगायत्तदिदमभिदधद्विष्णुचित्तोऽवतान्नः ॥

यशोदा श्रीकृष्णकिशोरं डोलामधिशयानमारचय्य निद्रार्थं गीतानि गायतिस्म। तदा चतुर्मुखो डोलिकातलिमं समार्पिपदिति, शम्भुः, वासवः, देवगणः, वैश्रवणः, वरुणः, श्रीदेवी, भूदेवी च नानाविधान्याभरणानि समर्पयन्तिस्मेति, सरस्वती (अथवा दुर्गादेवी) पटवासाञ्जनादिकं समर्पयामासेति च सा यशोदा कथयामास यत्तदिदं कथितवान् विष्णुचित्तसूरिरस्मानभिरक्षतु ॥ .... .... .... *

इति श्रीभट्टनाथसूक्ते—प्रथमशतके—तृतीयं दशकमवसितम् ॥
श्रीभट्टनाथसूरिदिव्यचरणौ शरणम् ॥

---

॥ श्रीरस्तु ॥

## पेरियाळ्वार् तिरुमोळिदिव्यप्रबन्धे १-४. तन्मुहत्तुच्चुट्टि

**अवतारिका**—श्रीभट्टनाथदिव्यसूक्ते प्रथमशतके चतुर्थं दशकमिदं श्रीकृष्णकिशोरस्य चन्द्राह्वानक्रीडानुभवपरं प्रवर्तते। भगवतः कृष्णशिशोः डोलाशयनोचितवयोतिक्रमतः परं पांसुक्रीडोचितं वयः प्रादुर्बभूव। तदात्वे लौकिकबालकानामिव अस्यापि चन्द्रं ग्रहीतुमभिरुचिरजायत। तामवगतवती यशोदा यदकुरुत चन्द्राह्वानम्, अथ तदुपालम्भनं च, तन्निबध्यते दशकेऽस्मिन् तद्भावभावनामासेदुषा श्रीविष्णुचित्तमुनीन्द्रेण ॥ .... *

(गाथा.) तन्मुहत्तुच्चुट्टि तूङ्गतूङ्गत्तवळ्न्दु पोयू * पोन्मुहकिण्किणि यार्प्प पुळुदि यळैहिन्रान् *
एन्महन्कोविन्दन् कूत्तिनै यिळमामदी * निन्मुहम् कण्णुळवाहिल् नीयिङ्गे नोक्किप्पो ॥ १ ॥

इळ मा मदी! एन् महन् गोविन्दन्
तन् मुखत्तु शुट्टि तङ्गतङ्ग तवळ्न्दु
पोयू पोन्मुहकिण्गिणि आर्प्प पुळुदि-
अळैहिन्रान् कूत्तिनै निन् मुखम्
कण् उळ आहिल् नी इङ्गे नोक्कि पो.

हे रमणीयबालचन्द्र! यशोदाया मम तनुजो गोविन्दः, स्वकीयललाटिका यथा मुहुः प्रोच्चलति, यथा च हिरण्मयी किङ्किणीभूषा घणघणात्कारशालिनी भवति, तथा नाम जानुभ्यां रिङ्खणं कृत्वा पांसुक्रीडां वितनोति। त्वज्जिघृक्षामूलकम् हृदयहारि नर्तनं च करोति। तदिदं त्वमत्रागत्य सानन्दमवेक्षस्व यदि ते वक्त्रे चक्षुषी स्याताम् ॥१॥

(गाथा.) एन्शिरुक्कुट्टन् एनक्कोरिन्नुदेम्बिरान् * तन् शिरुक्कैहळाल् काट्टिकाट्टि यळैक्किन्नान् *
अञ्जनवण्णनोडु आडलाड वुरुदियेल् * मञ्जिल्मरैयादे मामदी महिळ्न्दोडि वा ॥ २ ॥

मा मदी! एनकु ओर् इन् अमुदु एम्बिरान् एन् शिरुकुट्टन् तन् शिरु कैहळाल् काट्टि काट्टि अळैक्किन्नान्; अञ्जनवर्णनोडु आडल् आड उरुदि एल् मञ्जिल् मरैयादे महिळ्न्दु ओडि वा.

अयि भो महितहिमकर! मम परमभोग्यदिव्यामृतसधर्मा ममोपकारकश्च मम कृष्णकिशोरः स्वकीयलघुपाणिभ्यामसकृत्त्वामेव निर्दिशति, त्वामेव चाह्वयति। अञ्जनसवर्णेन कुमारेणानेन साकं क्रीडितुं यदि त्वं कामयसे तर्हि सकुतूहलं सरभसमायाहि, मेघेषु मास्म निलीयथाः ॥ २ ॥

(गाथा.) शुत्तुमोळि वट्टम् शूळ्न्दु शोदिपरन्देङ्गुम् * एत्तनै शेय्यिलुम् एन्महन्मुहम् नेरोव्वाय् *
वित्तहन्वेङ्गडवाणन् उन्नैविळिक्किन्र * कैत्तलम् नोवामे अम्बुली कडिदोडि वा ॥ ३ ॥

अम्बुली! शुत्तुम् ओळि वट्टमू शूळ्न्दु एङ्गुम् शोदि परन्दु एत्तनै शेय्यिलुम् एन् महन् मुखम् नेर् ओव्वाय्; वेङ्कटवाणन् वित्तहन् उन्नै विळिक्किन्न कै तलम् नोवामे कडिदु ओडि वा.

अयि भोश्शशाङ्क! (अहमेव जगत्यामद्वितीयस्सुन्दरोऽस्मि इत्यवलिप्यस इव त्वम्।) इतोऽपि निजं तेजःपुञ्जमतितराममिवर्ध्य अन्यदन्यदप्यलङ्करणमात्मन्याधायापि सत्यं नैव ह्यवाप्स्यसि मत्पुत्रमुखसाम्यम्। (तदलं वृथाऽवलेपेन)। श्रीवेङ्कटाद्रिनिलयस्य मत्सुतस्य त्वदाह्वानं यथा परिश्रममात्रफलकं न स्यात्तथा नाम झटिति समायाहि ॥ ३ ॥

(गाथा.) शक्करक्कैयन् तडङ्कण्णाल्मलर विळित्तु * ओक्कलै मेलिरुन्दु उन्नैये शुट्टिक्काट्टुम् काण् *
तक्कदरिदियेल् शन्दिरा शलञ्शेय्यादे * मक्कळ्पेराद मलडनल्लैयेल् वा कण्डाय् ॥ ४ ॥

चन्दिरा! चक्रकैयन् ओक्कलै मेल् इरुन्दु तडम् कण्णाल् मलर विळित्तु उन्नैये शुट्टि काट्टुम् काण्; तक्कदु अरिदि एल् मक्कळ् पेराद मलडन् अल्लै एल् छलम् शेय्यादे वा कण्डाय्.

हे चन्द्र! चक्रपाणिरसौ कृष्णो मम कटीतटे निषण्णस्सन् स्वकीये दिव्यपृथुविलोचने विस्फार्य त्वामेव निर्दिशत्यसकृत्। यदि त्वमुचितवेदी, यदि च अपत्यसुखानुभवदरिद्रो वन्ध्यश्च नासि, तर्हि कौटिल्यं विहाय सत्वरमायाहि ॥ ४ ॥

(गाथा.) अळगिय वायिल् अमुदवूरल् तेळिवुरा * मळलै मुत्ताद इळञ्शोल्लालुन्नै क्कूवुकिन्नान् *
कुळहन् शिरीदरन् कूवक्कूव नी पोदियेल् * पुळैयिलनाहादे निन्शेवि पुहर्मामदी ॥ ५ ॥

पुहर् मा मदी! कुळइन् श्रीधरन् अळहिय वायिल् अमुदवूरल् तेळिवु उरा मळलै मुत्ताद इळम् शोल्लाल् उन्नै कूवुहिन्नान्; कूव कूव नी पेदि एल् निन् शेवि पुळै इल आहादे.

हे तेजस्विन्निशाकर! सुशीलो मम तनूजन्मा श्रीधरः स्वकीयवदनारविन्दविनिस्सृतदिव्यामृतधारानिर्विशेषाणि अस्फुटाक्षराणि मुग्धविजल्पितानि मन्दंमन्दं निर्गमयन्नाह्वयति त्वाम्। एवमसकृदाहूयमानोऽपि त्वमिहानागच्छन् दूरत एव ह्यपसरसि; हन्त! किं ते श्रवसी रन्ध्रविहीने? [बधिरोऽसीति वितर्कये] ॥ ५ ॥

(गाथा.) तण्डोडु शक्करम् शार्ङ्गमेन्दुम् तडकैयन् * कण्डुयिल्र् कोळ्ळक्करुदि कोट्टावि कोळ्हिन्नान् *
उण्ड मुलैप्पालरा कण्डायुरङ्गाविडिल्र् * विण्डनिल्मन्निय मामदी विरैन्दोडिवा ॥ ६ ॥

विण् तनिल्र् मन्निय मा मदी ! तण्डोडु चक्कम् शार्ङ्गम् एन्दुम् तड कैयन् कण्तुयिल्र् कोळ्ळ करुदि कोट्टावि कोळ्हिन्नान्; उरङ्गाविडिल्र् उण्ड मुलै पाल्र् अरा कण्डाय्; विरैन्दु ओडि वा.

अयि भो व्योमविभूषणीभूत रमणीय सुधांशो ! कौमोदकीसुदर्शनशाङ्गालङ्कृतपाणिर्मम कुमारो निद्राभिमुखस्सन् जृम्भारम्भे प्रवृत्तः। यद्यसौ न निद्राति तर्हि पीतं स्तन्यं नैव हि जीर्येत्। (त्वद्ग्रहणविषयकमनोरथपूर्तिमन्तरा तु नायं निद्रामनुभवेत्।) तदायाहि मनोरथमस्य पूरयितुमञ्जसा ॥ ६ ॥

(गाथा.) वालकनेन्नु परिभवम् शेय्येल्र् * पण्डोरुनालालिनिलै वळर्न्द शिरुक्कनवनिवन् *
मेलेळप्पायून्दु पिडित्तुक्कोळ्ळुम् वेहुळुमेल्र् * मालै मदियादे मामदी महिळ्न्दोडिवा ॥ ७ ॥

मा मदी ! वालकन् एन्रु परिभवम् शेय्येल्र्; पण्डु ओरुनाळ् आलिन् इलै वळर्न्द शिरुक्कनवन् इवन्; वेहुळुम् एल्र् मेलेळ पायन्दु पिडित्तु कोळ्ळुम्; मालै मदियादे महिळ्न्दु ओडि वा.

अयि मुग्धमृगाङ्क ! बालक एव खल्वसाविति मास्म कार्षीरवज्ञानम्। पुरा वटदलमधिशयितशिशुरसावेवेति विद्धि। त्वदीयमपचारमसहमानोऽयं यदि ते कुप्यति, तर्हि सजवमुत्प्लुत्य त्वां गृह्णीयादपि। तदिमं महापुरुषमनवज्ञाय सकुतूहलमायाहि सत्वरम् ॥ ७ ॥

(गाथा.) शिरियनेन्रेन्निळञ्शिङ्गत्तै इहळेल्कण्डाय् * शिरुमैयिन्वार्त्तैयै मावलियिडै शेन्रु केळ्र् *
शिरुमै प्पिळैकोळ्ळिल्र् नीयुमुन् तेवैक्कुरियै काण् * निरैमदि नेडुमाल्र् विरैन्दुन्नै क्कूवुहिन्रान् ॥

निरै मदि ! एन् इळम् शिङ्गत्तै शिरियन् एन्रु इहळेल्र् कण्डाय्; शिरुमैयिन् वार्त्तैयै महावलियिडै शेन्रु केळ्र्; शिरुमै पिळै कोळ्ळिल्र् नीयुम् उन् तेवैक्कु उरियै काण्; नेडुमाल्र् विरैन्दु उन्नै कूवुहिन्रान्.

अयि भो राकानिशाकर ! इमं मदीयं कृष्णनामानं सिंहशावं बालं मत्वा मास्म कार्षीरनादरम्। अदसीयबाल्यवृत्तान्तं यदि शुश्रूषसे, महाबलिसविधमुपेत्य ततो निशम्य जानीहि। बालोऽयमिति त्वया कृतमवज्ञानं महापचार इति ते यदि स्यादनुशयः, अथ त्वमस्मै किमपि कैङ्कर्यं कर्तुमर्हसि। अस्तु तत्। सर्वेश्वरोऽयं त्वामाह्वयति सरभसमायाहीति। तदविलम्बितमागच्छ ॥ ८ ॥

(गाथा.) ताळियिल्वेण्णेय् तडङ्कैयार विळुङ्गिय * पेळै वयित्तेम्बिरान् कण्डायुन्नैक्कूवुहिन्रान् *
आळिक्कोण्डुन्नै येरियुम् ऐयुरविल्लै काण् * वाळवुरुदियेल्र् मामदी महिळ्न्दोडि वा ॥ ९ ॥

मा मदी ! ताळियिल्र् वेण्णेय् तडम् कै आर विळुङ्गिय पेळै वयिरु एम्बिरान् कण्डाय् उन्नै कूवुहिन्रान्;

अयि सोम ! बृहत्तरभाण्डभरितं नवनीतं यावच्छक्ति परिगृह्य स्वैरमास्वादितवान् पृथुतरजठरपिठरोऽयं मम सूनुर्भगवान् खलु त्वामाह्वयति। (एवमाहूतोऽपि नागच्छसि यदि त्वम्,) अथ ते शिरसो लवनाय

आलि कोण्डु उन्नै एरियुम् ऐयुरवु इल्लै काण् ; वाळ उरुदि एळ्न्दु महिळ्न्दु ओडि वा.

निजं हेतिराजं प्रयुञ्जीत सोऽयम् । नात्र संदेहः । यदि त्वमुजिजीविषसि सकुतूहलमञ्जसा समायाहि ॥ ९ ॥

(गाथा.) मैत्तडङ्कण्णि यशोदै तन्महनुक्कु * इवै योत्तन शोल्लि युरैत्त मात्तम् * ओलि पुत्तूर् वित्तगन्विट्टुशित्तन् विरित्त तमिळिवै * एत्तनैयुम् शोल्ल वल्लवर्किडरिल्लैये ॥ १० ॥

मै तडम् कण्णि यशोदै तन् महनुक्कु ओत्तन शोल्लि उरैत्त मात्तम् इवै ओलि पुत्तूर् वित्तहन् विष्णुचित्तन् विरित्त तमिळ् इवै एत्तनैयुम् शोल्ल वल्लवर्कु इडर् इल्लै.

कज्जलालङ्कृतविपुललोचना यशोदा चन्द्रजिघृक्षातत्परस्य स्वतनयस्य गुणचेष्टितादिकमधिकृत्य सुसमञ्जसं यदवोचत्, तत् प्रचुरप्रकाशश्रीधन्विनव्यनगरालङ्कारभूतो मङ्गलाशासनकुशलो विष्णुचित्तसूरिवरो दिव्यद्राविडगाथाभिः प्राह । ता इमा गाथाः स्वस्वशक्त्यनुसारेण कीर्तयितुं प्रभवतां सर्वाश्च विपदो विनश्येयुः । [ इति फलश्रुत्या समापितमिदं दशकम् ] ॥ १० ॥

एतद्दशकसारार्थसंग्रहकोऽयं श्लोकः

चन्द्राह्वानाख्यबाल्योचितकृतिनिरतं कृष्णमादाय कट्यां
भो चन्द्र ! त्वं किमन्धः किमु ननु बधिरो बालकस्यास्य लीलाम् ।
नो पश्यस्यादरोक्तिं न निशमयसि हा दण्ड्यसे नागतश्चेत्
एह्यत्रेत्याह मातेत्यभिहितवति मे विष्णुचित्ते रतिस्स्यात् ॥

श्रीकृष्णकिशोरस्य डोलाशयनोचितवयोऽतिपातानन्तरम् अङ्गणादिषु विहरणोचितवयसि प्रादुर्भूते तदा पांसुक्रीडादिसक्तोऽयं चन्द्राह्वाने लौकिकबालकवदनुरक्तोऽभूत् । तादृशं तं यशोदा निजकटितटे निदधाना, "हे चन्द्र ! दिव्येन मम सूनुना मुहुर्मुहुराहूतोऽपि त्वं कुतो न संनिधत्से ? किंत्वमन्धः ? आहोस्विद्बधिरः ? अस्य क्रीडावैदग्ध्यमपि न वीक्षसे । सादरमेव खल्वयं त्वामाह्वयति । तथाऽप्यनागतस्त्वं दण्डनार्होऽसि । यदि दण्डभीरुरसि तर्हि सरभसमायाहि" इत्यकथयदिति प्रोचुषि भट्टनाथमुनौ ममास्तु रतिः ॥ .... *

इति श्रीभट्टनाथसूक्ते प्रथमशतके चतुर्थं दशकमवसितम् ॥
श्रीभट्टनाथमुनीन्द्रदिव्यचरणौ शरणम् ॥

---

॥ श्रीरस्तु ॥

## पेरियाव्वार्तिरुमोलिदिव्यप्रबन्धे १—५. उय्यवुलहुपडैत्तु

**अवतारिका**—श्रीभट्टनाथदिव्यसूक्ते प्रथमशतके पञ्चमं दशकमिदं श्रीकृष्णकिशोरस्य नटनविशेषमधिकृत्य यशोदाकृतप्रार्थनारूपं प्रवर्तते । चन्द्राह्वानमव्यस्तनदशके संपन्नम् । शैशवोचितनर्तनेषु * शेङ्गीरैनर्तनमिति द्राविडशास्त्रप्रक्रियया व्यपदिश्यमानं नर्तनविशेषं कृष्णकिशोरे दिदृक्षमाणा यशोदा तं नानाप्रकारैः स्तोत्रैः स्तुत्वा 'हे पुत्ररत्न ! एवं नट, एवं नट' इत्युद्बोधयन्ती हर्षप्रकर्षमविन्दत पुरा ; तद्भावभावनामधिजग्मुषा श्रीविष्णुचित्तमुनीन्द्रेण तन्निबध्यते दशकेऽस्मिन् ॥

(गाथा.) उय्यवुलहु पडैत्तुण्ड मणि वयिरा ऊळितोरूळि पल आलिनिलैयदन्मेळ् *
पैय वुयोगुतुयिल्कोण्ड परम्परने पङ्कयनीणयन चञ्जन मेनियने *
शेय्यवणिन्नहलं शेममेन करुदि शेल्वु पोलि महरक्कादु तिहळ्न्दिलह *
ऐय वेनक्कोरुहालाडुग शेङ्गीरै आयर्गळ् पोरेरे आडुह वाडुहवे ॥ १ ॥

उय्य उलहु पडैत्तु उण्ड मणि वयिरा ! पल ऊळितोरूळि आलिन् इलै अदन्मेळ् पैय योगतुयिल् कोण्ड परम्परने ! पङ्कज नीळ् नयनत्तु अञ्जनमेनियने ! ऐय ! एनक्कु ओरुकाल् शेङ्गीरै आडुह; शेय्यवळ् निन् अहलम् क्षेमम् एन करुदि शेल्वु पोलि मकर कादु तिहळ्न्दु इलह ! आयर्हळ् पोरेरे ! आडुह आडुह.

अचिन्निर्विशेषान् प्रलयसीमनि संसरतश्चेतनान् * विचित्रा देहसंपत्तिरीश्वराय निवेदितुम् । पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुता ॥ * इत्युक्तप्रकारेण स्वचरणकमलयुगलपरिचर्यया समधिगतसमुज्जीवनान् कर्तुं करणकलेवरयुक्तान् कृतवन् भगवन्! अथ च संवर्तसमये भुवनं स्वात्मन्युपसंहृतवन्! प्रतिकल्पं वटदलमधिशय्य निद्रामुद्रामातन्वान हे परमपुरुष! अम्बुजायतलोचन! अञ्जनसवर्ण! स्वामिन्! यशोदया मया प्रार्थ्यमानं शेङ्गीरैसमाख्यं नर्तनविशेषं मह्यं सकृदनुतिष्ठ। तादृशनर्तनेन श्रीमहालक्ष्म्या नित्यनिकेतनभूतं त्वदीयं वक्षस्स्थलं यथा न मनागपि क्लिश्येत, यथा च मकरकुण्डलाश्चितौ ते कर्णौ च शोभातिशयं प्राप्नुयातां तथा नाम नट गोपालर्षभ कृष्ण! ॥ १ ॥

शेङ्गीरैनटनं नाम—माता चान्ये च शिशुहस्तावालम्ब्य नटनविशेषशिक्षणं यत्कारयन्ति तदित्याचक्षते। शिशुः स्वस्य पाणितले जानुनी च धरायां निधाय ललाटमुन्नमय्य नटनविशेषं करोतीति यत्, तदेवैतदित्यप्याहुः ॥

(गाथा.) कोळरियि नुरुवङ्कोण्डवुणनुडलम् कुरुदि कुळम्बियेळ क्कूरुहिराल्कुडैवाय् *
मीळ ववन्महनै मेय्म्मै कोळक्करुदि मेलैयमरर्पदि मिक्कु वेहुण्डुवर *
काळ नन्मेगमवै कल्लोडु काल्पोळिय करुदि वरैक्कुडैया कालिगळ्काप्पवने *
आळवेनक्कोरुकालाडुह शेङ्गीरै आयर्हळ्पोरेरे आडुह वाडुहवे ॥ २ ॥

मीळ अवन् महनै मेय्म्मै कोळ करुदि कोळ् हरियिन् रूपम् कोण्डु अवुणन् उडलम् कुरुदि कुळम्बि एळ कूर् उहिराल् कुडैवाय् ! मेलै अमरर् पति मिक्कु वेहुण्डु वर काळ नल् मेघम् अवै कल्लोडु काल् पोळिय करुदि वरै कुडैया कालिहळ् काप्पवने ! आळ ! एनक्कु ओरुकाल् शेङ्गीरै आडुह; आयर्हळ् पोरेरे ! आडुह आडुह.

सर्वत्रास्ति भगवानित्यूचिवांसं प्रह्लादं सत्यवादिनं कर्तुम् उग्रनृसिंहात्मनाऽवतीर्य हिरण्यकशिपोःशरीरे रुधिरस्रावमपरिमितमुत्पाद्य तीक्ष्णनखविदारिततद्वक्षस्स्थल! दिविषदामधीशे वासवे स्वभुक्तिलोपजनितक्रोधभूम्ना कालमेघप्रेरणया प्रबलवृष्टिविपदमुत्पादितवति सति 'अयमेव गोवर्धनगिरि स्सर्वेषां वो रक्षकः' इति पुरस्तात् स्वेनोक्तं वचस्सार्थयितुं तमेवाद्रिं छत्ररूपेण समुद्धृत्य संरक्षितगोवृन्द! हे परमपुरुष! मदर्थे सकृदनुतिष्ठ शेङ्गीरैनर्तनम्। हे गोपालपोतक! नट नट ॥ २ ॥

(गाथा.) नम्मुडै नायगने नान्मरै यिन्पोरुळे नाविंगुणर्कमल नान्मुहनुक्कोरुकाल् *
तम्मनै यानवने धरणि तलमुळुदुम् तारहैयिनुलहुम् तडवि अदन्पुरमुम् *
विम्म वळर्न्दवने वेळमुमेळ्विडैयुमू विरविय वेलैतनुळ् वेन्ु वरुमवने *
अम्मवेन क्कोरुका लाडुग शेंगीरै आयर्हळ्पोरेरे आडुह बाडुहवे ॥ ३ ॥

नम्मुडै नायकने! नाल् मरैयिन् पोरुळे! नामियुळ् नल् कमलम् नान्मुहनकु ओरुकाल् तम्मनै आनवने! धरणि तलम् मुळुदुम् तारकैयिन् उलहुम् तडवि अदन् पुरमुम् विम्म वळर् न्दवने! वेळमुम् एळ् विडैयुम् विरविय वेलै तनुळ् वेन्रु वरुमवने! अम्म! एनकु ओरुकाल् शेङ्गीरै आडुह; आयर्हळ् पोरेरे! आडुह आडुह.

अस्मत्स्वामिन्! चतुर्वेदपरमतात्पर्यभूत! निजनाभीसरोजसमुद्भूतस्य वेधसो वेदपरहारविपदुदयकाले जननीनिर्विशेषं रक्षां कृतवन्! द्यावापृथिवी समतिक्रम्य उपरिष्टादपि विक्रान्तपादपयोरुह! कुवलयापीडाख्यकंसकरिवरपटोमर्दन! नीलादेवीपरिणयप्रकरणे सप्तानामृषभाणां भञ्जनेन विजयश्रिया शुमालिङ्गित! भगवन्! मत्कृते शेङ्गीरैनर्तनं सकृदाचर। गोपालडिम्भ नट नट। ३ ॥

(गाथा). वानवर्ताममहिळ वन्शकडमुरुळ वञ्जमुलैप्पेयि नञ्जमदुण्डवने *
कानह वल्विळविन् कायुदिर करुदि कन्रदु कोण्डेरियुं करुनिर वेन्कन्ने *
तेनुहनु म्मुरनुम् तिण्डिरल्वेन्नरहन् एन्चवर्ताम्मडिय चेरुवदिर चेल्लुम् *
आनैयेनक्कोरुहालाडुह शेंगीरै आयर्गळ् पोरेरे आडुह वाडुहवे ॥ ४ ॥

वानवर् ताम् महिळ वल् शकटम् उरुळ वञ्जम् मुलै पेयिन् नञ्जमदु उण्डवने! कानहम् वल् विळविन् काय् उदिर करुदि कन्रुअदु कोण्डु एरियुम् करुनिरम् एन् कन्ने! धेनुकनुम् मुरनुम् तिण् तिरल् वेम् नरकन् एन्चवर् ताम् मडिय शेरु अदिर शेल्लुम् आनै! एनकु ओरुकाल् शेङ्गीरै आडुह; आयर्हळ् पोरेरे! आडुह आडुह.

सुरगणानन्दसंदोहकन्दभूत! क्रूरशकटभञ्जनविशारद! विप्रलम्भविदग्धायाः पूतनायाः स्तनलिप्तं गरलममृतनिर्विशेषमुपभुक्तवन्! कानने वत्सासुरप्रयोगतः कपित्थासुरं शकलीकृतवन्! मरतकवर्ण! मे वत्स! धेनुकासुरमुरासुरबलिष्ठनरकासुरादीन् रणाङ्गणे विनाशयितुमतिगम्भीरं गतवन्! कलभसमकृष्ण! मदुपच्छन्दनाय शेङ्गीरैनर्तनं सकृत्कलय। हे गोपालबाल! नटनट ॥ ४ ॥

(गाथा.) मत्तळवुन्तयिरुं वाडुॆळल्नन्मडवार् वैत्तन नेयू कळवाल्वारि विळुङ्गि * ओरुङ्गोत्त विणैमरुद मुन्नियवन्दवरै ऊरु करत्तिनोडु मुन्दिय वेन्तिरलोयू *
मुत्तिनिळमुरुवल्मुत्त वरुवदन्मुन् मुन्नमुह त्तणिया मोयूकुल्लहलैय * ए
न्नत्तवेनक्कोरुहालाडुग शेंगीरै आयर्हळ्पोरेरे आडुह वाडुहवे ॥ ५ ॥

वार् कुळ्ळ् नल्ल मडवार् वैत्तन मतु अळवुम् तयिरुम् नेय् कळवाल वारि विळुङ्गि, ओरुङ्गु ओत्त इणै मरुदम् उन्निय वन्दवै ऊरु करत्तिनोडुम् उन्दिय वेम् तिरलोय्! इळ मुरुवल मुत्तवरुवदन् मुन् आयर्हळ् पोरेरे मुन्न मुखत्तु अणि आर् मोय् कुळल्हळ् अलैय एन् अत्त! एनक्कु ओरुकाल शेङ्गीरै आडुह आडुह आडुह.

अ.यतकेशपाशविलासिनीभिर्वल्लवीभिः मथिमन्थनेन सज्जीकृतं दधि घृतं च चौर्यतोऽपहृत्य सोत्कण्ठमुपभुक्तवन्! यमलार्जुनानोकहावेशिनावसुरौ ऊरुभ्यां बाहुभ्यां च शिथिलीकृतवन्! विलक्षणविक्रम! मम गोपालकृष्ण! मौक्तिकसमानं मुग्धमन्दस्मितमुदञ्चयन् सन् अलकावलीश्च निटिलतटे प्रचलिताः प्रदर्शयन् मामानन्दयन् सकृदनुतिष्ठ शेङ्गीरैनर्तनम्। हे गोपबाल! नट नट। ५॥

(गाथा.) कायमलर्निरवा करुमुहिल्पोलुरुवा कानहमामडुविल् कालियनुच्चियिले *
तूय नडम्पयिलुं शुन्दर वेन्शिरुवा तुङ्ग मदकरियिन्कोम्बु परित्तवने *
आयमरिन्दु पोरुवानेदिर्वन्द मल्लै अन्दरमिन्नि यळित्ताडिय ताळिणैयाय् *
आयवेनकोरुकालाडुह शेंगीरै आयर्हळ्पोरेरे आडुह वाडुहवे॥ ६॥

कायमलर् निरवा करु मुहिल पोल उरुवा! कानहम् मा मडुविल् कालियन् उच्चियिले तूय नटम् पयिलुम् सुन्दर एन् शिरुवा! तुङ्ग मद करियिन् कोम्बु परित्तवने! आयम् अरिन्दु पोरुवान् एदिर् वन्द मल्लै अन्तरम् इन्नि अळित्तु आडिय ताळ् इणैयाय्! आय! एनक्कु ओरुकाल शेङ्गीरै आडुह; आयर्हळ् पोरेरे आडुह आडुह.

अतसीसुमसुकुमार! असितजलदसंकाश! बृन्दावने क्वचन ह्रदे कालियनाम्नः फणिनश्शिरसि विहितविलक्षणनर्तन! सुन्दर! मम कुमार! मदोत्तुङ्गकुवलयापीडवेतण्डदन्तोत्पाटनपटो! युद्धप्रक्रियाकौशलेन समुद्यतान् अभिपेतुषो मल्लान् आत्मनोऽपायगन्धमन्तरेण विध्वस्तान् विधाय अथ मुदा विरचितविलक्षणनर्तनपादद्वन्द्व! गोपाल! मां प्रहर्षयन् सकृत्कलय शेङ्गीरैनर्तनम्। वल्लवपुङ्गव! नट नट॥ ६॥

(गाथा.) तुप्पुडै यायर्हळ्तं शोल्वलुवादोरुकाल् तूय करुङ्कुळल् नल्तोहै मयिलनैय *
नप्पिनै तन्तिरमा नल्विडैयेळविय नल्लतिरलुडैय नादनुमानवने *
तप्पिन पिळ्ळैकळै तन मिगुशोदिपुह तनियोरुतेर्हडवि त्तायोडु कूट्टिय * ए
न्नप्पवेनक्कोरुकालाडुह शेंगीरै आयर्हळ्पोरेरे आडुह वाडुहवे॥ ७॥

ओरुकाल तूय करुम् कुळल नल तोहै मयिल अनैय नप्पिनै तन् तिरमा तुप्पु उडै आयर्हळ् तम शोल वळु

पुरा कदाचिदतिरुचिरचिकुरप्रकराया मयूरीसदृश्या नीलादेव्याः परिणयार्थे स्वसजातीयानां गोपालानां वचनमादृत्य क्रूरतरबलीवर्दसप्तकस्य

वाट्टु नल्ल विडै एळ्ळ अविय नल्ल तिरल्ल उडैय नायनुम् आनवने! तप्पिन पिळ्ळैहळै तन मिट्टु शोदि पुह तनि ओरु तेर् कडवि तायोडु कूट्टिय एन् अप्प! एनक्कु ओरुकाल्ल शेङ्गीरै आडुह आयर्हळ्ळ पोरेरे आडुह आडुह.

मर्दनं कृतवन् विलक्षणबलाढ्य! हे नाथ! प्रसूतिगृह एव विलीनान् दिवं च गतान् वैदिकपुत्रानानेतुं तत्र रथमद्वितीयं प्रचाल्य गत्वा ताना-नीय मात्रा सह संयोज्य परमाद्भुतशक्तिं प्रकाशितवन् अस्मत्स्वामिन्! मां प्रहर्षयितुं सकृत्पदर्शय ते शेङ्गीरैनटनम्! हे निखिलजगन्नियामक! नट नट ॥ ७ ॥.

(गाथा.) उन्नैयु मोक्कलैयिल्कोण्डु तमिल्मरुवि उन्नोडु तङ्गळ्करुत्तायिन शेय्दुवरुम् *
कन्नियरुं महिळ कण्डवर्कण्कुळिर कत्तवर् तेत्तिवर प्पेत्तवेनकरुळि *
मन्नु कुरुङ्गुडियाय् वेळ्ळरैयाय् मदिळ्शूळ्ळ शोलैमलैक्करशे कण्णपुरत्तमुदे *
एन्नवलं कळैवायाडुग शेंगीरै एळ्ळुलहुमुडैयायाडुह वाडुहवे ॥ ८ ॥

मन्नु कुरुङ्गुडियाय्! वेळ्ळरैयाय्! मदिळ्ळ शूळ्ळ शोलै मलैक्कु अरशे! कण्णपुरत्तु अमुदे! एन् अवलम् कळैवाय्! उन्नैयुम् ओक्कलैयिल्ल कोण्डु तम् इल्ल मरुवि उन्नोडु तङ्गळ्ळ करुत्तु आयिन शेय्दु वरुम् कन्नियरुम् महिळ कण्डवर् कण् कुळिर कत्तवर् तेत्तिवर पेत्त एनक्कु अरुळि शेङ्गीरै आडुह; एळ्ळ उलहुम् उडैयाय् आडुह आडुह.

[तिरुक्कुरुङ्गुडिसमाख्य] वैष्णववामनक्षेत्राधिनाथ! [तिरुवेळ्ळरै समाख्य] श्वेताद्रिनिवासरसिक! प्राकारपरिवृत [तिरुमालिरुञ्जोलै-समाख्य] वनगिरिनाथ! [तिरुक्कण्णपुराख्य] श्रीकृष्णपुरवराधीश! परमभोग्य! मदार्तिविनाशन! गोपालकृष्ण! त्वां स्वस्वकटीतटे निधाय स्वस्वसद्मान्यधिगम्य स्वस्वकामनानुरूपमनुभूय पुनरानयन्तीनां वल्लवीनां च परमानन्दसंदोहसंदायकस्सन् अन्येषामपि प्रेक्षकाणां विलोचने प्रहर्ष-प्रफुल्ले वितन्वन् कविवराणां च मुखतः स्तुतिपद्यानि प्रादुर्भावयन् मयि च दयमानमनास्सन् शेङ्गीरैनर्तनं कुरु भगवन्! समस्तलोकसंरक्षणविचक्षण! नटनट ॥ ८ ॥

(गाथा.) पालोडु नेय्तयिरोण् शान्दोडु शेण्बहमुं पङ्गयं नल्ल करुप्पूरमुम् नारिवर *
कोल नरुम्पवळ चेन्दुवर्वायिनिडै कोमळ वेळ्ळिमुळैप्पोल्ल शिलपळ्ळिलह *
नील निरत्तळहा रैम्पडैयिनडुवे निन्कनिवायमुदमित्तु मुरिन्दुविळ *
एलु मरैप्पोरुळे याडुग शेंगीरै एळ्ळुलहुमुडैयायाडुह वाडुहवे ॥ ९ ॥

एलुम् मरै पोरुळे! पालोडु नेय् तयिर् ओण् शान्दोडु चम्पकसुम् पङ्कजम् नल्ल कर्पूरमुम् नारि वर कोल नरुम् पवळम् शेम् तुवर् वायिनिडै कोमळ वेळ्ळि मुळै पोल्ल शिल पल्ल इलङ्;

स्वप्रतिपादनैकतत्परसकलवेदार्थभूत! गोपालकृष्ण! भगवन्! स्वोपभुक्तदुग्धाज्यदध्यादिसौरभं समुज्जृम्भयन् सन्, स्वाङ्गलिप्तसचन्दन-पङ्क-घनसारादिपरिमलं चोपबृंहयन्, स्वावतंसितचाम्पेयसरसीरुहादि-कुसुमसौगन्ध्यं च समुद्घाटयन्, सुचारुविद्रुमाभदिव्याधरसविधे राज-

नील निरत्तु अळहु आर् ऐम्पडै-यिन् नडुवे निन् कनि वाय् अमृतम् इत्तु मुरिन्दु विळ शेङ्गीरै आडुह; एळ् उलहुम् उडैयाय्! आडुह आडुह.

ताङ्कुरसच्छायसद्योजातकतिपयदन्तावलीं च संदर्शयन्, स्वकीयदिव्याङ्ग-नीलच्छविपरभागभावेन प्रकाशमानायां पञ्चायुधीभूषायां दिव्याधरामृत-बिन्दून् मन्दमन्दं विसृजंश्च शेङ्गीरैनर्तनमाचर। अशेषजगदीश! नटनट॥ ९॥

(गाथा.) शेङ्गमलक्कळलिल्शित्तिदळ्पोल्विरलिल् शेर्तिहळालिकळुं किण्किणियुम् * अरैयिल्
तङ्गिय पोन्वडमुम् ताळ नन्मादुळैयिन् पूवोडु पोन्मणियुं मोदिरमुं किरियुम् *
मङ्गलवैम्पडैयुम् तोळ्वळैयुं कुळैयुम् मकरमुं वाळिहळुम् शुट्टियुमोत्तिलह *
एङ्गळ् कुडिक्करशे याडुह शेंगीरै एळुलगुमुडैयायाडुग वाडुगवे ॥ १० ॥

एङ्गळ् कुडिक्कु अरशे! शेम् कमल कळलिल् शित्तिदळ् पोल् विरलिल् शेर् तिहळ् आलिहळुम् किण्कि-णियुम् अरैयिल् तङ्गिय पोन् वडमुम् ताळ नल् मादुळैयिन् पूवोडु पोन् मणियुम् मोदिरमुम किरियुम् मङ्गल ऐम्पडैयुम् तोळ् वळैयुम् कुळैयुम् मकरमुम् वाळिहळुम् शुट्टियुम् ओत्तु इलह शेङ्गीरै आडुह एळ् उलहुम् उडैयाय् आडुह आडुह.

अस्मत्कुलनाथ! दिव्यपादारविन्दे पल्लवाभदिव्याङ्गुलीषु विराज-मानान्यङ्गुलीयकादिभूषणानि, कटितटोल्लासिनी मेखला; हिरण्मयदाडि-मकुसुमसमदिव्याभरणमालिका, स्पृहणीयमणिसरः, पाणितलाङ्गुलीषु विभ्राजमानानि दिव्याङ्गुलीयकानि, प्रवालमालिका, मङ्गलार्थपञ्चायुधी-भूषा, मकरकुण्डलादिविविधकर्णाभरणानि, ललाटिका चेत्यादीनि परम-भोग्यानि ते दिव्यभूषणानि यथा ध्वनिविशेषेण श्रवणानन्दमारचय्य परि-स्फुरेयुस्तथा नाम शेङ्गीरैनर्तनमनुतिष्ठ। अखिलजगन्नाथ! नटनट॥ १०॥

(गाथा.) अन्नमु मीनुरुवु माळरियुं कुरळुम् आमैयुमानवने आयर्हळ् नायगने *
एन्नवलं कळैवायाडुग शेंगीरै एळुलगुमुडैयायाडुह वाडुहवेन्नु *
अन्न नडैमडवाळशोदै युहन्दपरिशु आन पुहळ्पुदुवैप्पट्टनुरैत्त तमिळ् *
इन्निशै मालैहळिप्पत्तुम् वल्लार् उलहिलेण्डिशैयुम् पुहळ्मिकिन्यिमदेय्दुवरे ॥ ११ ॥

अन्नमुम मीन् उरुवुम् आळ् अरियुम् कुरळुम् आमैयुम् आनवने! आयर्हळ् नायकने! एन् अवलम् कळैवाय्! एळ् उलहुम् उडैयाय्! शेङ्गीरै आडुह आडुह आडुह एन्रु अन्न नडै मडवाळ् यशोदै उहन्द परिशु आन पुहळ् पुदुवै पट्टन् उरैत्त तमिळ् इन् इशै मालैहळ् इप्पत्तुम्

हंसमत्स्यनृहरिवामनकमठादिरूपेणावतीर्ण! वल्लवाधिदैवत! मदार्तिनिरासक! अखिलजगत्स्वामिन्! कृष्णडिम्भ! शेङ्गीरैनर्तनं कलय-कलयेति पुरा हंसगत्या यशोदया प्रार्थनारूपं यदुक्तम्, तत् तद्भाव-भावनया यशस्विना श्रीधन्विनव्यनगरालङ्कारभूतेन भट्टनाथमुनिना द्राविडीभिर्गाथाभिरनूदितमभूत्। तदिदं गाथादशकं परममधुरं वाचि

वल्लार् उलहिल् एण् दिशैयुम् पुहऴ् मिक्कु इन्बमदु एय्दुवर्. | विभ्रति ये ते दिगन्तविश्रान्तकीर्तिभराः परमानन्दभाजस्स्युः। [इति फलश्रुत्या समापितमिदं दशकम्।] ॥ ११ ॥

— एतद्दशकसारांशसंग्राहकश्लोकः —

बाल्ये माता तथाऽन्ये किमपि च नटनं कारयन्ते शिशूनां
शेङ्गीरैनर्तनं तत्त्वभिदधति बुधा द्राविडीवर्त्मविज्ञाः।
तत्कृष्णे कारयन्ती नटनट तनयेत्युद्गृणाना यशोदा
नानास्तोत्रोक्तिवृन्दैस्सह मुदमभजत् तद्वदन् सूरिरीड्यः॥

शैशवोचितनर्तनेषु शेङ्गीरैनर्तनमिति द्राविडशास्त्रप्रक्रियया व्यपदिश्यमानं नर्तनविशेषं कृष्णकिशोरे दिदृक्षमाणा यशोदा तमुच्चावचस्तुतिवचनैः स्तुत्वा, ‘हे मम कुलदैवतकुमार! एवं नट, एवं नट’ इत्यभ्यर्थयमाना पुरा प्रमुमुदे। तदिदमनुवदन् श्रीविष्णुचित्तसूरिरस्माकं स्तुतिगोचरः॥ .... .... *

इति श्रीभट्टनाथसूक्ते प्रथमशतके पञ्चमं दशकमवसितम्।
श्रीभट्टनाथसूरिदिव्यचरणौ शरणम्॥

---

॥ श्रीरस्तु ॥

श्री भट्टनाथसूक्ते प्रथमशतके षष्ठं दशकम्

# माणिक्ककिङ्गिणि

**अवतारिका**—अधस्तनदशके शेङ्गीरैनामकनर्तनविशेषप्रार्थनां कृतवत्या यशोदया अथ शप्पाणिखेलनप्रार्थना व्यधायि। द्राविड्यां शप्पाणिखेलनमिति यदभिधीयते तत्सहपाणिखेलनमिति वक्तुं योग्यम्। पाणिना सह पाणिं संयोज्य ध्वनिविशेषं समुत्पाद्य क्रीडन्ति हि बालकाः। तादृशक्रीडाविशेषं दिदृक्षमाणा यशोदा कृष्णं बहुधा स्तुत्वा ‘अयि मत्पुत्ररत्न। त्वं मम च त्वदीयजनकस्य चोत्सङ्गे असकृदागत्य सहपाणिखेलनं कुरु’ इति प्रार्थितवती पुरा। तामेव प्रार्थनामसौ सूरिवरस्तद्भावभावनया कलयतिस्म। तदिदं निबध्यते दशकेऽस्मिन्।

(गाथा.) माणिक्ककिङ्गिणि यार्प्प मरुङ्गिन्मेल् * आणिप्पोन्नाल् शेय्द आय्पोन्नुडैमणि *
पेणि प्पवळवाय् मुत्तिलङ्ग * पण्डु काणिकोण्ड कैहळाल् शप्पाणि करुङ्गुऴल्कुट्टने शप्पाणि॥

करु कुऴल् कुट्टने आणि पोन्नाल् शेय्द आय्पोन् मणि उडै मरुङ्गिन् मेल् माणिक्कम् किङ्गिणि आर्प्प पवळम् वाय्मुत्तु इलङ्ग पण्डु काणि कोण्ड कैहळाल् पेणि शप्पाणि शप्पाणि. | अयि नीलकुन्तलसुन्दरबालक! अत्युत्तमहिरण्यविनिर्मितरमणीयरत्नमेखलालंकृते कटितटे माणिक्यमयकिङ्किणीभूषणध्वनिमुज्जृम्भयन् विद्रुमनिभे वदने मुक्ताफलसंकाशदन्ताङ्कुराणां सुषुमामुद्भासयंश्च सहपाणिखेलनमाकलय पुरा महाबलिसविधे भूमिप्रतिग्रहं कृतवद्भ्यां पाणिभ्याम्॥ १॥

यः पुरा वामनस्त्रिविक्रमश्च सन्नवततार, स एवाधुना कृष्णमूर्तिरभूदिति द्योतनाय 'पुरा महाबलिसविधे' इत्यादिकमभ्यधायि । परकीयकार्यकरणमेव हि त्वत्करयोः कृत्यमिति सूचनं च विवक्षितम् । पुरा यौ कराविन्द्रकार्यं कृतवन्तौ ताभ्यामधुना मदपेक्षितं खेलनरूपं कार्यं कुर्वीथा इत्युक्तं भवति ॥ .... (१)

(गाथा.) पोन्नरै नाणोडु माणिक्किङ्गिणि * तन्नरैयाड तनिच्चुट्टि ताळ्न्दाड *
एन्नरैमेल् निन्निळिन्दु उङ्गळायर्दम् * मन्नरैमेल्कोट्टाय् शप्पाणि मादवने कोट्टाय् शप्पाणि ॥

| | |
|---|---|
| पोन् अरै नाणोडु माणिक्कम् किण्किणि तन् अरै आड तनि शुट्टि ताळ्न्दु आड एन् अरै मेल् निन्रु इळिन्दु उङ्गळ् आयर् तम् मन् अरै मेल् शप्पाणि कोट्टाय् मायवने शप्पाणि कोट्टाय्. | अत्यद्भुतचेष्टितशालिन्! कृष्णकिशोर! हिरण्मय्या रशनया सह माणिक्याञ्चितकिङ्किणीभूषणमपि ध्वनयन् सन् अनुपमां ललाटभूषां च मदुत्सङ्गादवतीर्य गत्वा त्वत्पितुर्नन्दगोपस्योत्सङ्गं सहपाणिखेलनमाकलचालयन् येथाः ॥ २ ॥ |

कृष्णडिम्भस्य सर्वाङ्गसौन्दर्यदिदृक्षया एवमभ्यर्थयते यशोदा । स्वोत्सङ्गे खेलनापेक्षया परोत्सङ्गे खेलनम् अतएव स्पृहणीयमासीत् ॥ .... .... .... .... (२)

(गाथा.) पन्मणिमुत्तिन् पवळम्पदित्तन्न * एन्मणिवण्णनिलङ्गुपोन् तोट्टिन्मेल् *
निन्मणिवाय् मुत्तिलङ्ग निन्नम्मैतन् * अम्मणिमेल् कोट्टाय् शप्पाणि आळियङ्कैयने शप्पाणि ॥

| | |
|---|---|
| एन् मणिवण्णन् पल् मणि मुत्तु इन् पवळम् पदित्त अन्न इलङ्गु पोन् तोट्टिन् मेल् निन् मणि वाय् मुत्तु इलङ्ग निन् अम्मैतन् अम्मणि मेल् शप्पाणि कोट्टाय् आळि अम् कैयने शप्पाणि. | भोचक्रपाणे! मुकुन्द! नीलमणिनिभाङ्ग मम नन्दन! नानाविधैः रत्नैर्मुक्ताफलैर्विद्रुमैश्चालंकृतं कर्णकुण्डलभूषणमुद्भासयन् मन्दस्मितं च समुदञ्चयन् त्वज्जनन्या मम उत्सङ्गं प्राप्य सहपाणिखेलनमाकलयेथाः ॥ ३ ॥ |

पूर्वगाथायां कृतां प्रार्थनामनुसृत्य पितुरुत्सङ्गे कृतखेलनं कृष्णमुद्दिश्य यशोदा पुनः स्वोत्सङ्गे विहर्तुमभ्यर्थयते सेत्यवगन्तव्यम् ॥ .... .... .... .... (३)

(गाथा.) तूनिलामुत्तत्ते पोन्दु विळैयाड * वानिलावम्बुली शन्दिरा वावेन्रु *
नीनिला निन्पुहळानिन्न आयर्तम् * को निलावकोट्टाय् शप्पाणि कुडन्दैक्किडन्दाने शप्पाणि ॥

| | |
|---|---|
| वान् निला अम्बुली चन्दिरा तू निला मुत्तत्ते पोन्दु नी विळैयाड वा एन्रु निला निन् पुहळानिन्र आयर् तम् को निलाव शप्पाणि कोट्टाय् कुडन्दै किडन्दाने शप्पाणि. | "व्योम्नि विभासमान हे शीतकिरण! ज्योत्स्नाविशदे गृहाङ्गणे मम क्रीडानुकूलतया त्वमिहागच्छ" इति चन्द्राह्वानं कुर्वन् सन् हे कृष्ण! त्वत्प्रशंसनैकनिरतानां गोपानां नन्दगोपस्य च मानसं प्रहर्षयन् सन् सहपाणिखेलनं कलय। श्रीकुम्भघोणक्षेत्रकृतशयन भगवन् कृष्णकिशोर! सहपाणिखेलनं कलय ॥ ४ ॥ |

(गाथा.) पुट्टियिल् शेरुम् पुळुदियुम् कोण्डुवन्दु * अट्टियमुक्कि अहम्पुक्करियामे *
शट्टित्तयिरुम् तडाविनिल्वेण्णेयुमुण् * पट्टिक्कन्रे कोट्टाय् शप्पाणि पर्प्पनाबा कोट्टाय् शप्पाणि॥

पुट्टियिल् शेरुम् पुळुदियुम् कोण्डु वन्दु अट्टि अमुक्कि अहम् पुक्कु अरियामे शट्टि तयिरुम् तडाविनेल् वेण्णेयुम् उण् पट्टि कन्रे शप्पाणि कोट्टाय् पर्पनाबा शप्पाणि कोट्टाय्.

हे पद्मनाभ! रथ्याविहारावसरे स्वाङ्गलग्नं पङ्कं पांसुं च मय्यपि लग्नमाकलय्य सहपाणिखेलनमाचर। गृहान्तरे प्रविश्य भाण्डभरितं दधि नवनीतं च स्वच्छन्दमुपभुञ्जान, स्वैरवारिन् वत्स! सहपाणिखेलनं कलय॥ ५॥

पांसुक्रीडासमये श्रान्तिसंजातस्वेदबिन्दुनिपातास्पदेष्वङ्गेषु पांसुः पङ्कभावमाप्नोति, अतथाविधेष्ववयवेषु पांसुरेवावतिष्ठते इति वेदितव्यम्। * किमिव हि मधुराणां मण्डनं नाकृतीनाम् * इतिरीत्या सर्वमपि हि भोग्यं भवति प्रेमविह्वलानाम्॥ .... .... .... .... (५)

(गाथा.) तारित्तु नूत्तुवर्तन्दै शोल्कोळ्ळादु * पोरुय्त्तु वन्दु पुहुन्दवर्मण्णाळ *
पारित्त मन्नर्पड पञ्चवर्क्कु * अन्नु तेरुय्त्त कैकळाल् शप्पाणि देवकिशिङ्गमे शप्पाणि॥ ६॥

तन्दै शोल् तारित्तु कोळ्ळादु पोर् उय्त्तु वन्दु पुहुन्दवर् मण् आळ पारित्त नूत्तुवर् मन्नर् पड अन्रु पञ्चवर्कु तेर् उय्त्त कैहळाल् शप्पाणि दवकि शिंगमे शप्पाणि.

हे देवकीगर्भसंभूतसिंहशाव कृष्णकिशोर! पुरा सकलजगती पितुस्तव वाचमनादृत्य समराङ्गणं प्रविष्टानां स्वयमेव कृत्स्नं राज्यमुपभोक्तुं कृताध्यवसायानां च धार्तराष्ट्राणां निधनाय पाण्डवानां स्यन्दनं प्रवर्तितवद्भ्यां पाणिभ्यां सहपाणिखेलनं कलय॥ ६॥

(गाथा.) परन्दिट्टु निन्न पडुकडल् तन्नै * इरन्दिट्ट कैमेलेरितिरै मोद *
करन्दिट्टु निन्न कडलैकलङ्ग * शरम् तोट्ट कैकळाल् शप्पाणि शार्ङ्गविल्कैयने शप्पाणि॥

परन्दिट्टु निन्र पडुकडल् तन्नै इरन्दिट्ट कैमेल् एरि तिरै मोद करन्दिट्टु निन्र कडल् कलङ्ग शरम् तोट्ट कैहळाल् शप्पाणि शार्ङ्गम् विल् कैयने शप्पाणि.

शार्ङ्गपाणे भगवन् वासुदेव! पुरा रामावतारे स्वकर्तृकशरणागतिविषयभूते विपुले गभीरे सागरे अनादरेण वीचिविक्षेपमाकलय्य किञ्चित्कारमकुर्वाणे सति, * सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः * इति प्रकोपेन * चापमानय सौमित्रे शरांश्चाशीविषोपमान् * इत्युक्तरीत्या बाणप्रयोगसंनाहं कृतवद्भ्यां पाणिभ्यां सहपाणिखेलनमनुतिष्ठ॥ ७॥

(गाथा.) कुरक्किनत्ताले कुरैकडल् तन्नै * नेरुक्कि यणै कट्टि नीणीरिलङ्गै *
अरक्करविय अडुकणैयाले * नेरुक्किय कैकळाल् शप्पाणि नेमियङ्कैयने शप्पाणि॥ ८॥

कुरै कडल् तन्नै नेरुक्कि कुरङ्गु इनत्ताले अणै कट्टि नील् नीर् इलङ्गै अरक्कर् अविय अडु कणैयाले नेरुक्किय कैहळाल् शप्पाणि नेमि अम् कैयने शप्पाणि.

हेतिराजालंकृतदिव्यापाणे भगवन्! पुरा वानरसेनासनाथतां प्राप्य सागरे सेतुबन्धमारचय्य सागरपरिवृतलङ्कानिवासिराक्षसबृन्दनिधनाय शरारुशरजालप्रयोगं कृतवद्भ्यां पाणिभ्यां सहपाणिखेलनं कलय॥ ८॥

(गाथा.) अळन्दिट्ट तूणै अवन् तट्ट * आङ्गे वळन्दिट्टु वाळुहिर्चिङ्ग वुरुवाय् *
उळम् तोट्टिरणिय नोण्मार्वहलम् * पिळन्दिट्ट कैहळाल् श्प्पाणि पेयूमुलैयुण्डाने श्प्पाणि॥

अळन्दिट्ट तूणै अवन् तट्ट आङ्गे वाळ उहिर् शिङ्गम् उरुवाय् वळर्न्दिट्टु उळम् तोट्टु इरणियन् ओळ अहलम् मार्पु पिळन्दिट्ट कैहळाल शप्पाणि पेय् मुलै उण्डाने शप्पाणि.

पूतनास्तन्यपायिन् नन्दनन्दन! पुरा हिरण्यकशिपुनाम्नि दानवेन्द्रे स्वगृहे स्वनिर्मितां स्थूणां स्वयमेव सरोषमास्फालितवति सति तस्मादेव स्थलात्सद्यो नरकेसरिरूपेण प्रादुर्भूय बृहत्तरं दिव्यविग्रहमास्थाय तस्य दानवस्य हृदयशोधनपूर्वकं वक्षस्स्थलं विदारितवद्भ्यां पाणिभ्यां सहपाणिखेलनमाकलय ॥ ९ ॥

यस्मिन् स्तम्भे नरहरिभगवत्प्रादुर्भावस्समजनि तस्मिन् पुरस्तादेव नरहरिर्गर्भीकृत आसीदिति वक्तुमशक्यतां स्फोरयितुं (स्वनिर्मितां स्थूणाम्) इत्युक्तम्। (हृदयशोधनपूर्वकम्) इत्युक्तेरयं भावः—प्रातिकूल्ये व्यवसितानामपि दुर्भाषितानि प्रजल्पतामपि रिपूणां बाह्यक्रियाकलापं बाह्यवागाडम्बरमात्रं च निमित्तीकृत्य भगवान्न दिशति दण्डनम्। हृदयेऽपि मात्सर्यं समग्रमस्ति वेति परिशोधने प्रवर्तते। तत्र यदि मात्सर्यं नालक्ष्येत तर्हि, "हृदये अशुद्धिरहितोऽयं न दण्डनीयः" इति दयमानमनास्सन् विसृजति। ये तावदानुकूल्यव्यवसिताः स्तुतिवचांसि विकिरन्ति भक्ताः, तेषां हृदयेऽपि समग्रा भक्तिरस्ति वेति परिशोधने न प्रवर्तते भगवान्। तेषां बाह्यक्रियाकलापमात्रं बाह्यवागाडम्बरमात्रमेव च निमित्तीकृत्य तदनुग्रहसमुत्सुको भवति—इतितावच्छास्त्रतः प्रतिपत्तिः। एतेन, अनुग्रहं प्रति स्वल्पनिमित्तमपि पर्याप्तम्; निग्रहं प्रति अमितं कारणमावश्यकमित्युक्तं भवति। प्रकृते आश्रितविरोधिनोऽपि सतो हिरण्यकशिपोः हृदयशोधने प्रवृत्तिः हृदये कौटिल्याभावे न दण्डनीयोऽयमिति धियैव। हिरण्यकशिपोः हृद्यपि मात्सर्यमविकलमवेक्ष्यैव तं निजघानेति ॥ .... .... (९)

(गाथा.) अडैन्दिट्टमरर्हळाळ्कडल् तन्नै * मिडैन्दिट्टु मन्दरम् मत्ताह नाट्टि *
वडम् शुत्ति वाशुकि वन्कयिराह * कडैन्दिट्ट कैहळाल् श्प्पाणि कार्मुहिल्वण्णने श्प्पाणि॥

अमरर्हळ् अडैन्दिट्टु आळ् कडल् तन्नै मिडन्दिट्टु मन्दरम् मत्ताह नाट्टि वाशुकि वल् वडम् कयिरु आह शुत्ति कडैन्दिट्ट कैहळाल् शप्पाणि कार् मुहिल् वण्णने शप्पाणि.

नीलमेघनिभमुकुन्द! दुर्वासश्शापोपहतानामाश्रितानाममराणामनुजिघृक्षया क्षीरपयोनिधौ मन्दराद्रिं मन्थदण्डं कृत्वा तस्मिन् वासुकिनागं मथनरज्जुमारचय्य तं पयोनिधिमनायासतो मथितवद्भ्यां पाणिभ्यां सहपाणिखेलनमाकलय ॥ १० ॥

(गाथा.) आट्कोळ्ळत्तोन्निय आयर्तम् कोविनै * नाट्कमल् पूम्पोळिल् विल्लिपुत्तूर्पट्टन् *
वेट्कैयाल् शोन्न श्प्पाणि यीरैन्दुम् * वेट्कैयिनाल् शोल्लुवार्विनै पोमे॥ ११॥

आळ् कोळ्ळ तोन्रिय आयर् तम कोविनै वेट्कैयिनाल् नाळ् कमल पू पोळिल् विल्लिपुत्तूर् पट्टन् शोन्न शप्पाणि ईरैन्दुम् वेट्कैयिनाल् शौल्लुवार् विनै पोम.

सर्वानपि भक्तान् समुज्जीवयितुं प्रादुर्भूतं गोपालकृष्णमुद्दिश्य परमभक्तिभाजा सुरभिवनराजिपरिवृत श्रीधन्विनव्यपुरस्वामिना भट्टनाथमुनिवरेण (यशोदातादात्म्यभावनाजुषा) प्रोक्तं सहपाणिखेलनप्रार्थनापरं दशकमिदं साभिनिवेशं कीर्तयन्तो विनष्टकलुषा भवितारः (इति फलकीर्तनेन समापितमिदं दशकम्) ॥ ११ ॥

— एतद्दशकार्थसारसंग्राहकोऽयं श्लोकः —

पाण्योस्साहित्यकृत्या विदधति शिशवः खेलनं, तच्च कृष्णे
माता संद्रष्टुकामा मणिनिभ! ममच त्वत्पितुश्चाङ्कभागे ।
आगत्यागत्य हर्षात्प्रकलय संहपाण्याह्वयं क्रीडितं त्वं
पाणिभ्यां सेतुकृद्ध्यामिति कथितवतीत्यूचिवान् सूरिरीड्यः ॥

पाणिना सह पाणिं संयोज्य ध्वनिविशेषसमुत्पादनात्मकं सहपाणिखेलनं जगति सर्वैरपि शिशुभिः क्रियमाणं वत्से कृष्णेऽपि दिदृक्षमाणा यशोदा, हे मणिनिभशुभविग्रह मत्पुत्ररत्न! त्वं पित्रोरावयोरुत्सङ्गे मुहुरागत्य सेतुबन्धहिरण्यवधभूमिमिक्षणपाण्डवस्यन्दनसंचालनप्रभृतिनानाचेष्टितवर्गं कृतवद्भ्यां पाणिभ्यां सहपाण्याह्वयं खेलनं कलयेति प्रार्थयत । तदाह भगवान् विष्णुचित्तसूरिराडिति ॥ .... .... *

इति श्रीभट्टनाथसूक्ते प्रथमशतके षष्ठं दशकमवसितम् ॥
श्रीभट्टनाथमुनीन्द्रदिव्यचरणौ शरणम् ॥

---

श्रीवरवरमुनीन्द्रदिव्यचरणौ शरणम्

## श्रीभट्टनाथसूक्ते प्रथमशतके सप्तमं दशकम्

# ॥ (१–७) तोडर्शङ्गिलिकै ॥

अवतारिका—शिशुषु स्खलितगतिविशेषः प्रथितः । धरायां पादतलयोस्सुदृढं निधानस्य दुश्शकतया स्खालित्येन युक्ता गतिर्भवति हि । तादृशीम् मनोहरां गतिं कृष्णे दिदृक्षमाणा यशोदा तं बहुधा स्तुत्वा 'हे वत्स मुकुन्द! कलभागमननिर्विशेषं त्वमाव्रजन् दिव्यदेहगतसकलभूषणप्रणादमधुरं यथातथा अग्रजेन बलरामेण सह स्खलितगतिविभ्रमं प्रदर्श्य मां प्रहर्षय' इति प्रार्थयते स्म पुरा । तदेतदभिदधाति मुनिवरस्तद्भावभावनया दशकेस्मिन् ॥

(गाथा.) तोडर्शङ्गिलिहै शलार्पिलारेन्न तूङ्गुपोन्मणि योलिप्प *
पड्डु मुम्मदप्पुनल्शोर वारणम् पैयनिन्नूर्वदुपोल *
उडन्कूडि किङ्गिणि यारवारिप्प उडैमणि परै करङ्ग *
तडन्तालिणै कोण्डु शार्ङ्गपाणि तळर्नडै नडवानो ॥ १ ॥

वारणम् शङ्गिलिकै तोडर् शलार् पिलार् एन्न तूङ्गु पोन् मणि ओलिप्प पड्डु मुम्मदम् पुनल शोर निन्रु पैय ऊर्वदु पोल किण्किणि उडन् कूडि आरवारिप्प उडै मणि परै करङ्ग शार्ङ्गपाणि तड ताळ इणै कोण्डु तळर् नडै नडवानो.

शार्ङ्गपाणिर्मम कृष्णकिशोरः यथा कश्चन कलभो निगलशृङ्खलिकां शलार्पिलारिति ध्वनयन् रज्जुबद्धां घण्टां च नादयन् स्थानत्रयप्रस्रुतमदजलश्च सन् मन्दमन्दं सरति, तथा नूपुरमेखलादिभूषणध्वनिना सह स्वसुन्दरपादयुगळेन स्खलितगति विभ्रमं प्रदर्शयेन्न किमु? ॥ १ ॥

वत्स, प्रदर्शयेति कथनपर्यायतयैव "प्रदर्शयेन्न किमु" इति कथनमपि व्यावहारिकम्। उपमानभूतकलभनिष्ठनिगलशृङ्खलिकानिनदस्य घण्टानादस्य च स्थाने नूपुरमेखलादिभूषणध्वनिरुपमेये कृष्णे कथितः। एवं कलभे मदजलवैशिष्ट्यमुक्तम्; तत्स्थाने उपमेये कृष्णे खेदसलिलस्रुतिवैशिष्ट्यमुक्तप्रायं ध्येयम्॥ .... (१)

(गाथा.) शेक्करिडै नुनिक्कोम्बिल् तोन्नुम् शिरुपिरै मुळैप्पोल् *
नक्क शेन्तुवर्वाय् त्तिण्णैमीदे नळिर्वेण्पल्मुळै यिलह *
अक्कुवडमुडु त्तामैत्तालि पूण्ड अनन्तशयनन् *
तक्क मामणिवण्ण न्वासुदेवन् तळर्नडै नडवानो॥ २॥

शेक्करिडै नुनि कोम्बिल् तोन्रुम् शिरु पिरै मुळै पोल नक्क शेम् तुवर् वाय् तिण्णै मीदु नळिर् वेण्पल् मुळै इलह अक्कु वडम् उडुत्तु आमैत्तालि पूण्ड अनन्तशयनन् तक्क मा मणि वण्णन् वासुदेवन् तळर्नडै नडवानो.

शोणे नभस्स्थले शाखाग्रे भासमानो बालचन्द्र इव स्वकीयरक्ताधरस्थले शुभ्रदन्ताङ्कुरो यथा भासेत तथा स्मयमानवदनस्सन् कटितटनिबद्धदिव्यमणिरशनः कूर्माभरणाढ्यकन्धरः अनन्तशयनो विलक्षणनीलमणिविडम्बिविग्रहश्च मम वासुदेवः स्खलितगतिविभ्रमं संदर्शयेन्न किमु?॥ २॥

कृष्णस्य बिम्बफलोपमशोणाधरस्थाने शोणनभस्स्थलम्, शुभ्रदन्ताङ्कुरस्थाने शुक्लबालचन्द्रश्चाभ्यधायिषाताम्। शाखाग्रे चन्द्र इति लोकोक्तिमनुसृत्य (शाखाग्रे भासमानः) इत्युक्तम्। गोपजात्यनुरूपेषु अर्भकाभरणेषु कूर्माभरणमन्यतमम्। अत एव श्रीरङ्गराजस्तवे * वक्षस्स्थल्यां तुलसिकमलाकौस्तुभैवैजयन्ती सर्वेशत्वं कथयतितरां रङ्गधाम्नस्तदास्ताम्। कूर्मव्याघ्रीनखवरिमिलत्पञ्चहेती यशोदानद्धा मौग्ध्याभरणमधिकं नस्समाधिं धिनोति॥ * इति भट्टपादानामद्भुतोऽनुभवः॥ .... .... .... (२)

(गाथा.) मिन्नुक्कोडियुमोर्वेणूतिङ्गळुम् शूळ्परिवेडमुमाय् *
पिन्नल्तुलङ्गुमरशिलैयुम् पीतक चित्ताडैयोडुम् *
मिन्निल्पोलिन्दतो कार्मुहिल्पोल कळुत्तिनिल् कारैयोडुम् *
तन्निल्पोलिन्द विरुडीकेशन् तळर्नडै नडवानो॥ ३॥

मिन् कोडियुम् ओर् वेण् तिङ्गळुम् शूळ् परिवेषमुम् आय् पिन्नल् तुलङ्गुम् अरशिलैयुम् शिरु पीतहम् आडैयोडुम् मिन्निल् पोलिन्ददु ओर् कार् मुहिल् पोल कळुत्तिनिल् कारैयोडुम् तन्निल् पोलिन्द हृषीकेशन् तळर्नडै नडवानो.

विद्युल्लतया, विलक्षणधवलचन्द्रमसा, एतदुभयमपि परिवेष्टमानेन परिवेषेण च सदृशं रशनावेणीभूषणम् अश्वत्थपत्राकाररजताभरणं दिव्यपीताम्बरं च दधानः विद्युता सह सततं विराजमानः कश्चन कालमेघ इव कनकमयकण्ठिकालंकृतकन्धरः परमसुन्दरो हृषीकेशः स्खलितगतिविभ्रमं संदर्शयेन्न किमु?॥ ३॥

गाथायामस्यामभूतोपमा निबद्धा। चन्द्रमसो विद्युल्लतया परिवेषेण च सह सदा भासमानत्वमसंभवि। तथा कालमेघस्य विद्युता सह सततं विराजमानत्वं चासंभवि। * उभौ यदि व्योम्नि पृथक्पतेतामाकाशगङ्गा-पयसः प्रवाहौ। तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः॥ * इति माघकाव्यपद्यमभूतोपमानिदर्शन-तयाऽनुसंधेयम्। तथा ह्येतत्॥ .... .... .... .... (३)

(गाथा.) कन्नल्कुडम् तिरन्दालोत्तूरि कणकण शिरित्तु उवन्दु *
मुन्वन्दु निन्नु मुत्तन्तरुम् एन्मुहिल्वण्णन् तिरुमार्वन् *
तन्नैप्पेत्तेर्क्कु त्तन् वायमुदन्तन्दु एन्नै त्तळिर्प्पिक्किन्नान् *
तन्नेत्तु मात्तलर्तलैहण्मीदे तळर्नडै नडवानो॥ ४॥

इक्षुरसभरितः कश्चन कुम्भः सरन्ध्रो भूत्वा स्वनिष्ठं रसं रन्ध्रद्वारा निर्गमयन्निव निजमुखारविन्दात् लालारसमतिमधुरमाविर्भावयन् घणघणात्कारिहासमुदञ्चयन् हर्षप्रकर्षमेदुरान्तःकरणश्च सन् मम पुरतस्समागत्य परमप्रेम्णा चुबुकाघ्राणभाग्यं प्रयच्छन् मम तनुजो नीलमेघनिभो लक्ष्मीमनाथवक्षाश्च कृष्णोऽय जननीं मां स्वकीय-मधरामृतं पाययित्वा परमानन्दकन्दलितस्वान्तां वितन्वन् स्ववैरिणां मूर्धसु स्खलितगतिविभ्रमं संदर्शयेन्नकिमु?

अदसीयगतिविभ्रमवीक्षणमात्रेणैव कंसादयो द्रोहिणो ध्वस्ता भवितार इत्यभिप्रायगर्भं वचः (स्ववैरिणां मूर्धसु) इति॥ .... .... .... .... .... (४)

(गाथा.) मुन्नलोर्वॆळ्ळिप्पेरुमलै क्कुट्टन् मुडुमुडु त्तिरैन्दोड *
पिन्नैत्तोडर्न्ददोर्करुमलैक्कुट्टन् पेयर्न्दडि यिडुवदुपोल् *
पन्नियुलहं परवियोवाप्पुहळ् बलदेवनेन्नुम् *
तन्नम्बियोड प्पिन्कूडच्चेल्वान् तळर्नडै नडवानो॥ ५॥

पुरस्ताद्व्रजन्तं कैलासगिरिपोतकमनुसृत्य पश्चात्कश्चन नीलाद्रिशावो व्रजतीवेति वर्णनीयता यथा स्यात्तथा अप्रमेययशसं बलदेवाभिधानमग्रजमनुसृत्य व्रजन्मम कृष्णः स्खलितगतिविभ्रमं संदर्शयेन्न किमु?

बलभद्रश्शुक्लवर्णः, कृष्णः कृष्णवर्ण इति प्रथितमेतत्। बलरामो रजताद्रिप्रसूतः कश्चन रजतार्भक इव, कृष्णो नीलाञ्जनाद्रिप्रसूतः कश्चन नीलमणिशाव इव चोत्प्रैक्षिषाताम्। कारणसावर्ण्यं कार्ये नियतमिति धिया (रजताद्रिपोतक इव, नीलाञ्जनाद्रिशाव इव) चेत्युक्तम्। अर्भकयोस्साक्षाददिसाधर्म्यवर्णनमशोभनं खलु॥ (५)

(गाथा.) ओरुकालिल् शङ्गु ओरुकालिल् शक्करम् उळ्ळडि पॊरित्तमैन्द *
इरुकालुं कोण्डङ्गङ्गेळुदिनाप्पोल् इलचिनै पड नडन्दु *
पेरुहानिन्न इन्बवेळ्ळत्तिन्मेल् पिन्नैयुम् पेय्दु पेय्दु *
करुकार्कडल्वण्णन् कामर्तादै तळर्नडै नडवानो॥ ६॥

उभयपादतलाभ्यन्तरे रेखात्मना भासमानं शङ्खं चक्रं च भूतले तत्रतत्र विलिखन्निव पादविन्यासं वितन्वन् [भवनतलमशेषं शङ्खचक्ररेखाचित्रितं कुर्वन्] मम हर्षप्रकर्षमुत्तरोत्तरमभिवर्धयन् नीलाम्भोनिधिसवर्णो मदनजनकश्चायं कृष्णः स्खलितगतिविभ्रमं संदर्शयेन्न किमु?

मन्मथांशभूतप्रद्युम्नस्य (अनिरुद्धपितुः) जनको बभूवेति हेतोः मदनजनक इत्युच्यते कृष्णः॥ (६)

(गाथा.) पडर्पङ्कय मलर्वाय् नेहिळ प्पनिपड्ड शिरुतुळिपोल् *
इडङ्कोण्ड शेव्वायूरियूरि यित्तितु वीळ निन्रु *
कडुंशेक्कलुत्तिन्मणिक्कुरल्पोल् उडैमणि घणघणेन *
तडन्ताळिणैकोण्डु शार्ङ्गपाणि तळर्नडै नडवानो ॥ ७ ॥

बृहत्तरे कमलकुसुमे विकसिते सति ततो यथा मकरन्दबिन्दुस्स्रवति, तथा स्वकीयात् पृथुवक्त्रादमृत-बिन्दुकणान्मुहुः प्रस्रावयन् वृषभकण्ठनद्धघण्टानादसमशीलं स्वकटितटनिबद्धदिव्यभूषणमणिगणान् ध्वनयंश्च सन् शार्ङ्गपाणिर्भगवान् स्वपादद्वन्द्वेन स्खलितगतिं संदर्शयेन्न किमु ॥

अर्भकाणां स्खलितगतिसमये वक्त्रादसकृल्लालाबिन्दुस्रुतिः कटितटालङ्कारभूतभूषणानां शब्दायमानता च प्रथितैव हि जगति ॥ .... .... .... .... (७)

(गाथा.) पक्कङ्करुञ्शिरुप्पारै मीदे अरुविकळ् पकर्न्दनैय *
अक्कुवडमिळिन्देरित्ताळ अणियल्गुल् पुडै पेयर *
मक्कळुलकिनिल्पेयूदरिया मणिक्कुळवि युरुविन् *
तक्क मामणि वण्णन् वासुदेवन् तळर्नडै नडवानो ॥ ८ ॥

नीलवर्णशिलोच्चयपरिसरे निर्झराम्बुप्रपातसमशीलं नीलच्छविविभासुरदिव्यमङ्गलविग्रहे लम्बमानं शङ्खमणिसरं समुद्भासयन् सुन्दरं नितम्बप्रदेशमुच्चालयंश्च सन् अतिमानुषदिव्यस्तनन्धयवपु र्नीलमणिनिभो वासुदेवः स्खलितगतिं संदर्शयेन्न किमु ।

नीलवर्णशिलोच्चयस्थाने कृष्णदिव्यमङ्गलविग्रहः, निर्झराम्बुप्रपातस्थाने लम्बमानशङ्खमणिसरश्च कथितौ वेदितव्यौ । गोपालजात्यनुरूपतया बालकानां कटितटे शङ्खमणिसरबन्धनं भवति । धवलवर्णस्य तस्य भूषणस्य नीलवपुषि भानं नीलाद्रिपरिसरे स्वच्छपयःप्रवाहप्रपातसमशीलमित्यनुसंधीयते ॥ .... (८)

(गाथा.) वेण्पुलुदि मेर्पेय्दु कोण्डळैन्ददोर्वेळत्तिन्करुङ्गन्रुपोल् *
तेण्पुलुदियाडि त्तिरिविक्किरमन् शिरुपुकर्पडवियर्त्तु *
ओण्पोदलर्कमलच्चिरु क्कालुरैत्तोन्तुम् नोवामे *
तण्पोदुकोण्ड तविशिन्मीदे तळर्नडै नडवानो ॥ ९ ॥

स्वगात्रे स्वयमेव धूलीनिवहानुत्कीर्य विहरन् कलभ इव पांसुक्रीडासक्त्या स्ववपुषि पांसूनुत्किरन् स्वेदाम्बुकणिकाञ्चितश्च त्रिविक्रमो भगवान् नन्दसूनुः कमलकुसुमसुकुमारस्य निजपादतलस्य भुवि निक्षेपश्रममनुत्पादयन् परमसुकुमारपुष्पविततिविराजमानविष्टरोपरि स्खलितगतिं संदर्शयेन्न किमु? .... (९)

(गाथा.) तिरैनीर्चन्दिरमण्डलम्पोल् शेङ्गणमाल् केशवन्तन् *
तिरुनीर्मुकत्तु तुलङ्गुशुट्टि तिगळ्न्देङ्गुम्पुडैपेयर *
पेरुनीर्त्तिरैयेळु गङ्गैयिलुम् पेरियतोर्तीर्त्तपलं तरुनीर् *
शिरुच्चण्णन्तुळ्ळम्शोर तळर्नडै नडवानो ॥ १० ॥

अरुणकमलसुभगनयनः केशवः चन्द्रसमाने परमसुन्दरे स्वकीये मुखमण्डले ललाटिकामुच्चलन्तीमुद्वहन् मन्दगतिविभ्रमं च प्रदर्शयन् जाह्नवीतोयादप्यभ्यर्हितं परमपवित्रं मूत्रबिन्दुं शनैरुत्सृजंश्च स्खलितगतिं संदर्शयेन्न किमु? .... .... .... .... .... .... (१०)

(गाथा.) आयर्कुलत्तिनिल्ढ़ वन्दुतोन्रिय अञ्जनवण्णन्तन्नै *
तायर्मकिळ वोन्नार्तळर चळर्नडै नडन्दतनै *
वेयर्पुकळ्ढ़ विष्णुचित्तन् शीराल्विरित्तन वुरैक्वल्लार् *
मायन्मणिवण्णन् ताळ्पणियुं मक्कळै पेरुवर्हळे ॥ ११ ॥

गोपालकुले प्रादुर्भूतस्य अञ्जनसवर्णस्य बन्धुजनमनोहरं वैरिव्रातावलेपलोपनं च स्खलितगतिविशेषमधिकृत्य यशस्विना भट्टनाथमुनिवरेण विरचितं दशकमिदं कीर्तयन्तो महान्तो भगवत्पादारविन्दप्रावण्यभरितान् पुत्रान् प्राप्य मङ्गलाशासनप्रावण्यभरितसन्ततिसमृद्धा भवेयुरिति फलश्रुत्या समापितमिदं दशकम् ॥ .... (११)

— एतद्दशकसारार्थसंग्राहकोऽयं श्लोकः —

(गाथा.) सस्खालित्या गतिर्या शिशुषु भुवि जनैर्दृश्यते तां यशोदा
कृष्णे संद्रष्टुकामा, कलभ इह यथाऽऽयाति तद्वन्मुकुन्द ।
एहि स्खालित्यगत्या तनुगतमखिलं भूषणं नादयन् सन्
साकं रामेण चेति न्यगददिति गदन् विष्णुचित्तो गतिर्नः ॥

धरायां पादतलं सुदृढं निधातुमशक्ताश्शिशवः स्खलितगतिं कुर्वन्ति हि; तादृशीं मनोहरां गतिं कृष्णे दिदृक्षमाणा यशोदा, 'हे मुकुन्द! कलभगमननिर्विशेषं त्वमाव्रजन् दिव्यशुभविग्रहालङ्कारभूतसकलभूषणप्रणादसनाथं यथायथा अग्रजन हलायुधेन सह स्खलितगतिं कृत्वा मामानन्दय' इति प्रार्थयामासेति स्वानुभवेन कथितवान् भट्टनाथसूरिरस्माकं गतिः ॥ .... .... .... *

इति श्रीभट्टनाथसूक्ते—प्रथमशतके—सप्तमं दशकमवसितम् ॥

---

॥ श्रीरस्तु ॥

श्रीभट्टनाथसूक्ते प्रथमशतके अष्टमं दशकम्

## ॥ पोन्नियल्ढ़ ॥

अवतारिका—किशोरका मातुरुत्सङ्गमारोढुकामास्सन्तः सरभसं दूरादागत्य मातुर्देहमधिरुह्य गाढसंमर्दं दिशन्तो विलक्षणमानन्दमुत्पादयन्तीत्यनुभवसिद्धमेतत् । एतादृशानन्दलिप्सया यशोदा कृष्णकिशोरमभि ूय प्रार्थ्य पूर्वं प्रमुमुदे; तदिदं मुनिवरस्तद्भावभावनया निबध्नाति दशकेऽस्मिन् ॥

(गाथा.) पोन्नियर्किण्किणि शुट्टिपुरङ्कट्टि * तन्नियलोशै शलन्शलनेन्रिड *
मिन्नियल्मेघम् विरैन्देदिर्वन्दार्पोल्ढ़ * एन्निडैक्कोट्टरावच्चोवच्चो एम्बेरुमान्वारावच्चोवच्चो ॥ १ ॥

भगवन् कृष्णकिशोर ! हिरण्यानि किङ्किणीललाटिकादिदिव्यभूषणानि तत्तदुचितस्थानेषु बिभ्रत् तेषामाभरणानां श्रुतिपथसुभगं ध्वनिविशेषमुत्पादयंश्च सन् विद्युद्विलासी नीलजीमूतो वेगेन पुरतस्समायातीवेति यथा कथ्येत तथा नाम मदुत्सङ्गेऽवस्थातुं कामयमानस्सरभसमागत्य मामाश्लिष्यतात्; अस्मत्स्वामिन् समागम्य मामाश्लिष्यतात् ॥

भूषणानां प्रभा विद्युत्त्वेन, कृष्णो नीलजीमूतत्वेन चाध्यवसितो वेदितव्यः ॥ .... (१)

(गाथा.) शेङ्गमलप्पूविल् तेनुण्णुं वण्डेपोल् * पङ्गिकळ् वन्दु उन्पवळवायूमोय्प्प *
शङ्गुविल्वाळ्तण्डु शक्करमेन्दिय * अङ्गैकळाले वन्दच्चोवच्चो आरत्तळुवावन्दच्चोवच्चो ॥ २ ॥

अरविन्दे मधुपानार्थं प्रसक्ताः भ्रमराः किममी ! इत्युल्लेखयोग्यतया निटिलालम्बिचिकुरप्रकरसंकीर्णसुभगवदनारविन्द ! भगवन् कृष्ण ! शङ्खचक्रगदासिशार्ङ्गालङ्कृतचारुपाणिभ्यां समाश्लिष्यतात्, समागत्य सुगाढमाश्लिष्यतात् ॥ .... .... .... .... .... (२)

(गाथा.) पञ्जवर्तूदनाय् भारतङ्गैशेय्दु * नञ्जुमिळ् नागङ्किडन्द नप्पोय्कैपुक्कु *
अञ्जप्पणत्तिन्मेल् पायून्दिट्टरुळ्शेय्द * अञ्जनवण्णनेयच्चोवच्चो आयर्पेरुमाने यच्चोवच्चो ॥

पाण्डवदूत्यमारचय्य भारतसमरं च साधु निर्वर्तितवन्, गरलोद्गारिकालियनागदूषितयमुनाह्रदमधिगत्य तत्फणमण्डले निपत्य भीषयित्वा अथ तस्मिन्ननुकम्पामाविष्कृतवन् ! अञ्जनाभ भगवन् कृष्ण ! मामाश्लिष्यतात्; गोपालप्रभो ! अश्लिष्यतात् ॥ .... .... .... .... (३)

(गाथा.) नारियशान्दम् नमक्किरै नल्हेन्न * तेरियवळुम् तिरुवुडम्बिल्पूश *
ऊरिय कूनिनै उळ्ळेयोडुङ्ग * अन्नु एरुघुरुविनायच्चोवच्चो एम्बेरुमान्वारायच्चोवच्चो ॥ ४ ॥

कुब्जामुपसृत्य सुरभि चन्दनम् ईषत्प्रदेहीत्यपेक्ष्य अथ तया प्रहृष्टया दिव्यमङ्गलविग्रहे लिप्तेन दिव्यचन्दनेन प्रसन्नतामधिगत्य तस्या गात्रकौटिल्यमपनीय परमानुग्रहं प्रकाशितवन् भगवन् कृष्ण ! समाश्लिष्यतात् ॥

कंससंदेशमाहरता अक्रूरेण मधुरापुरीमानीतौ कृष्णबलरामौ वीथ्यां व्रजन्तावास्ताम् । तदा तत्र काचन कुब्जा युवतिः नानाविधचन्दनभरितस्थालीहस्ता समाययौ । तामन्वयुङ्क्त कृष्णः, का त्वम्, कस्यार्थे नयसि चन्दनमिति । एतेन मधुरमुग्धभाषितेन हृतहृदया सा 'अयि रमणीयदर्शन ! नाम्नाऽहमस्मि नैकवक्रा; कंसेन चन्दनादिसुगन्धद्रव्यसन्नाहकर्मणि नियुक्ताऽस्मि' इत्यवोचत् । अथ कृष्णः * सुगन्धमेतद्राजार्हं रुचिरं रुचिरानने । आवयोर्गात्रसदृशं दीयतामनुलेपनम् ॥ * इति तामयाचत : साच भृशं प्रमुदिता तथैव समार्पिपत् । ततस्सुप्रसन्नो भगवान्नन्दनन्दनस्तां परमानुग्रहपात्रतां नयन् व्यपेतकुब्जभावामतिसुन्दरविग्रहां च वितताननेति कथाऽत्रानुसन्धेया ॥ .... .... .... .... .... (४)

(गाथा.) कळल्मन्नर्शूळ क्कतिर्पोल्विळङ्गि * एळलुत्तमीण्डे यिरुन्दुन्नै नोक्कुम् *
शुळलैप्पेरिदुडै तुच्चोदनन्नै * अळलविळित्ताने यच्चोवच्चो आळियङ्गैयनेयच्चोवच्चो ॥ ५ ॥

महावीराणां भूयसां भूपतीनां मध्ये स्वात्मानं विस्मृत्य अवशादुत्थाय अथ लज्जया समुपविश्य 'हन्त ! किमिदं विलक्षणं तेजः !' इति विस्मितं नृशंसं मायाविनं च दुर्योधनं निग्रहलक्ष्योकृतवन् भगवन् कृष्ण ! समाश्लिष्यतात्, चक्रपाणे समाश्लिष्यतात् ॥

अत्रायमितिहासोऽनुसन्धेयः। यदा वासुदेवः पाण्डवदूतस्सन् धार्तराष्ट्रान्तिकं गन्तुं प्रतस्थे, तदा तदागमनमवजग्मिवान् दुर्योधनः स्वसयूथ्यान् सर्वानपि भूपतीन् समाहूय, 'अत्रागमिष्यतो गोपालकस्यार्थे केनापि न कोऽप्युपचारः कर्तव्यः आसनादुत्थानमपि न कर्तव्यम्' इति द्रढीयसीमाज्ञामाकलय्य सभामण्डपे सर्वैस्तैस्समासीन आसीत्। अथ तेजस्वी भगवान् कृष्ण आगमत्तत्र। पुरा तथा नाम कृतव्यवस्थो दुर्योधनस्स्वयमेव पुरस्तादवशादुदतिष्ठत्। ततस्तमनुसृत्य सर्वेऽपि * यथार्हं केशवे वृत्तिमवशः प्रतिपेदिरे * इत्युक्तरीत्या समुदतिष्ठन्। तदनन्तरं च, हन्तैवं विप्रतीपं संवृत्तमिति लज्जितास्सन्तस्सर्वेऽपि न्यषीदन्। दुर्योधनस्तु अन्यादृशमेतत् कृष्णस्य तेज इति विस्मितोऽपि नैसर्गिकदौरात्म्येन कृष्णविषये द्रोहचिन्तक एवासीदिति॥ (५)

(गाथा.) पोरोक्कप्पण्णि यिप्पूमिप्पोरैतीर्प्पान् * तेरोक्क वून्दाय् शेलुन्दार्विंशयक्कीय् *
कारोक्कुमेनि क्करुम्पेरुङ्कण्णने * आरत्तळुवावन्दचोवचो आयर्हळ्पोरेरेयचोवचो ॥ ६ ॥

भूभारनिर्वहणाय भारतसमरसंविधानमारचय्य जैत्रस्य पार्थस्य स्यन्दनं सुष्ठु संचालितवन्! कालमेघनिभ कमललोचन कृष्णकिशोर! समागत्य समाश्लिष्यतात्; गोपालपुङ्गव समाश्लिष्यतात्। .... (६)

(गाथा.) मिक्कपेरुम्पुकळ् मावलि वेळ्वियिल् * तक्कतितन्नेन्नु दानं विलक्किय *
शुक्किरन्कण्णै तुरुम्बालिकिळरिय * शक्करक्कैयने यचोवचो शङ्गमिडत्तानेयचोवचो॥ ७॥

औदार्यकीर्त्युज्ज्वलमहावलियज्ञवाटे, वामनायास्मै दानं नोचितमिति दानप्रतिषेधं कृतवतश्शुक्रस्य दैत्यगुरोरक्षि दर्भपवित्राग्रेण विकलीकृतवन् चक्रपाणे! समाश्लिष्यतात्; पाञ्चजन्याश्रितवाममणे समाश्लिष्यतात्।

"दर्भपवित्राग्रेण विकलीकृतवन् चक्रपाणे" इति कथनेन सुदर्शनभगवानेव तदात्वे दर्भपवित्रमाविश्य शुक्रस्य निग्रहं चक्र इति द्योतितं भवति। अत एव सुदर्शनशतके "कृतनयननयव्याहतिर्भार्गवस्य" इत्यन्वग्राहि। * शक्तिर्यस्येषुदंष्ट्रानखपरशुमुखव्यापिनी तद्विभूत्याम् * इत्येषा सुदर्शनशतकसूक्तिरप्यत्र स्मर्तव्या। (७)

(गाथा.) एन्निदु मायम् एन्नप्पनरिन्दिलन् * मुन्नैय वण्णमे कोण्डळवायेन्न *
मन्नु नमुचियै वानिल्शुळत्तिय * मिन्नु मुडियनेयचोवचो वेङ्कडवाणने यचोवचो ॥ ८ ॥

महावलियज्ञवाटे महावलिदत्तभूमेः स्वायत्तीकरणावसरे लघुविग्रहविसर्जनपूर्वकगुरुविग्रहस्वीकारासहिष्णुतया 'आः किमेषा माया? मायावैदग्ध्यमिदं त्वदीयं मम पिता न वेद। भिक्षणकालिकेन रूपेणैव प्रतिगृहाण दत्तम्' इति निर्बन्धनेऽवस्थितं महावलितनयं नमुचिं नभसि परिभ्राम्य निगृहीतवन् भास्वत्किरीट कृष्ण! समाश्लिष्यतात्; श्रीवेङ्कटाद्रिनिलय भगवन् समाश्लिष्यतात्॥ .... .... .... (८)

(गाथा.) कण्डकडलुं मलैयुमुलकेलुम् * मुण्डत्तुक्काचा मुकिल्वण्णा ओवेन्नु *
इण्डैचडैमुडि यीशनिरक्कोळ्ळ * मण्डैनिरैत्तानेयचोवचो मार्विल्मरुवनेयचोवचो ॥ ९ ॥

"सागरा महीधरा लोकास्सप्त च कपालं पूरयितुं न प्रभवन्ति हन्त! नीलमेघनिभ भो भगवन्" इति जटाधरस्य रुद्रस्य प्रबलमाक्रन्दितं परिहर्तुं तत्कपालपरिपूरणं कृतवन् कृष्ण! समाश्लिष्यतात्, श्रीवत्साङ्क! समाश्लिष्यतात्॥

स्वस्यैव स्वजनकस्य वेधसोऽपि स्थितं पञ्चमुखत्वमसहमानो रुद्रस्तस्य शिर एकं नखाग्रेण निकृन्ततिस्म कदाचित्। लूनस्य तस्य मुण्डस्य निजकरतलादनपेतस्य केनोपायेन व्यरोहनं सुकरमिति विचारयन्तं शंभुमाह्व-स्सुराश्च महर्षयश्च; 'शंभो! भैक्षं चर; भिक्षया यदा कपालस्यास्य पूरणं भवति, तदा करतलादस्य प्रच्युति-र्भवित्री' इति। अथ शूली सर्वत्र नित्यं पर्यटन् भिक्षमाणोऽपि कपालस्य तस्य पूर्तिं प्रच्युतिं चानवलोकयन् परितप्तमना मार्गक्रमेण बदरिकाश्रममनुप्राप्य तत्र भगवन्तं नारायणं प्रणम्य प्रार्थ्य तेन परमदयालुना अक्षय-मित्युक्त्वा सादरमर्पितया भिक्षया कपालस्य पूर्तिं प्रच्युतिं च दृष्ट्वा प्रनष्टपातकः प्रमुमुदे—इतीयं कथाऽत्र वेदितव्या॥

(गाथा.) तुन्निय पेरिरुळ् शूल्न्दुलकै मूड * मन्निय नान्मरै मुत्तुं मरैन्दिड *
पिन्निव्वुलकिनिल् पेरिरुळ् नीङ्ग * अन्नन्नमदानाने यच्चोवच्चो अरुमरै तन्दाने यच्चोवच्चो॥

सर्वेषामपि वेदानां विलयेन गाढान्धकारे जगति वितते सति तत्तमो निराकर्तुं हंसरूपेणावतीर्ण कृष्ण भगवन्! समाश्लिष्यताात्: दुर्लभवेदप्रदानप्रवीण हरे समाश्लिष्यतात्॥

पुरा कदाचिच्छयानस्य विरिञ्चस्य मुखतः प्रादुर्भूय पुरुषरूपेण संचरतश्चतुरो वेदानपहृत्य कश्चिदसुरः प्रलयनीरपूरे व्यलीयत। तदा भृशं निर्विण्णेन तेन वेधसा प्रार्थितो भगवान्नारायणो मत्स्यरूपी सन् प्रवाहान्तः प्रविश्य तमसुरं निहत्य तदपहृतान् वेदांश्च पुनरुद्धृत्य सारासारविवेचनकुशलहंसरूपी सन् विरिञ्चाय पुनरुपादिश-दिति कथाऽत्र बोद्धव्या॥ .... .... .... .... (१०)

(गाथा.) नच्चुवार्मुन्निर्कुम् नारायणन्तन्नै * अच्चो वरुकवेन्नु आयूचियुरैत्तन *
मच्चणिमाडप्पुदुवैकोन्पट्टन् शोल् * निच्चलुम्पाडुवार्नीळ् विशुम्बाळ्वरे॥ ११॥

स्वभक्तानां साक्षात्कारयोग्यं भगवन्तं नारायणमुद्दिश्य 'समाश्लिष्यतात् आगत्य समाश्लिष्यतात्' इति पुरा यशोदया जनन्या कथितं यत्तदेव दिव्यप्राकारपरिवृतश्रन्विनव्यनगरललामभूतभट्टनाथमुनीन्द्रेण प्रकीर्तितम्। ता इमा गाथास्सततं कीर्तयन्तो भक्ता दिव्यधामनिर्वाहका भवितारः। इति फलश्रुत्या समापितमिदं दशकम्॥

— एतद्दशकसारांशसंग्राहकश्लोक एषः —

बाला आधाव्य दूरात्सरभसमुपसृत्याथ मातुश्शरीरे
गाढाश्लेषं ददानाः कमपि कमपिचानन्दमुद्भावयन्ति।
एतंचानन्दमीप्सु र्निजसुतमभियाच्याञ्जसा संप्रहृष्टा
धन्यासीत्सा यशोदा, तदिदमभिदधद्विष्णुचित्तोऽतिधन्यः॥

जगति शिशवो मातुरुत्सङ्गमारुरुक्षन्तस्सजवमुपाधाव्य मातुर्देहमधिरुह्य गाढसंमर्दवितरणेन विलक्षणानन्द-संदायका भवन्ति खलु; ईदृगानन्दलिप्सया यशोदा कृष्णकिशोरं विविधस्तोत्रप्रणयनपूर्वकं प्रार्थ्य प्रमोदतेस्म। तदिदमत्र दशके प्राह विष्णुचित्तस्सूरिवरः॥ .... .... .... *

श्रीभट्टनाथदिव्यसूरिदिव्यचरणौ शरणम्।

इति श्रीभट्टनाथसूक्ते प्रथमशतके अष्टमं दशकमवसितम्॥



॥ श्रीरस्तु ॥

## श्री भट्टनाथसूक्ते प्रथमशतके नवमं दशकम्

# ॥ वट्टुनडुवे वळर्हिन्न ॥

अवतारिका—पूर्वदशकापेक्षया दशकेऽस्मिन् विलक्षणोऽनुभवः । अर्भका दूरात्सजवमागत्य मातुः पृष्ठतलमाश्लिष्य खेलन्ति खलु लोके । तादृशं खेलनमनुबभूव पुरा जननी यशोदा; तदभिधत्ते विष्णुचित्तस्तद्भावभावनया ॥

(गाथा.) वट्टु नडुवे वळर्हिन्न * मणिक्क मोट्टुनुनियिल् मुळैक्किन्न मुत्तेपोल् *
शोट्टुचोट्टेन्न तुळिक्कचुळिक्क * एन् कुट्टन् वन्देन्नैप्पुरम्पुल्कुवान् गोविन्दनेन्नै प्पुरंपुल्कुवान्॥

वर्तुलाकार रत्नद्वयमध्यभास्वन्माणिक्यकोरकाग्रात् प्रादुर्भवन्मुक्ताफलमिव स्थितं परमपवित्रमूत्रविन्दुं शनैश्शनैः प्रस्रावयन् मम मुग्धः किशोरो हन्त मे पृष्ठतलाश्लेषसुखं दिशति, गोविन्द एवं सुखाकरोति ॥

कृष्णशिशोर्मुष्कद्वितयं वर्तुलाकाररत्नद्वयत्वेन, गुह्यावयवविशेषस्तन्मध्यभास्वन्माणिक्यकोरकत्वेन चोपावर्ण्येतामिह । उपमेयवस्तुकथनगन्धमन्तरेण उपमानवस्तुमात्रकथनमत्यन्तातिशयोक्तिः । * पश्य नीलोत्पलद्वंद्वान्निस्सरन्ति शिताश्शरा इतिवत् ॥ .... .... .... .... (१)

(गाथा) किण्किणि कट्टि क्किरिकट्टि * कैयिनिल् कङ्कणमिट्टु क्कलुत्तिल् तोडर्कट्टि *
तङ्गणचाले शतिरा नडन्दुवन्दु * एन्कण्णनेन्नैप्पुरम्पुल्कुवान्, एम्बिरानेन्नै प्पुरंपुल्कुवान्॥२॥

किङ्किणीभूषां लघुविद्रुमसरं करभूषां कण्ठभूषां च दधानो मम बालकृष्णः अन्यैश्च विविधैर्भूषणैर्भूषितस्सन् चारुतरगतिविशेषं कुर्वाणस्समागत्य मे पृष्ठतलाश्लेषसुखं दिशति; मत्प्रभुरेवं सुखाकरोति ॥ (२)

(गाथा.) कत्तकदित्तु किडन्द पेरुञ्शेल्वम् * ओत्तुप्पोरुन्दिक्कोण्डु उण्णादु मण्णाळ्वान् *
कोत्तुत्तलैवन् कुडिकेडत्तोन्रिय * अत्तन् वन्देन्नैप्पुरं पुल्कुवान्, आयर्हळेरेन्पुरंपुल्कुवान् ॥

स्पर्धाहेतुत्वेन समृद्धं सुमहत्तरमैश्वर्यं सौमनस्येन ज्ञातिभिस्सममनुभोक्तुमनिच्छतः कृत्स्नं च स्वयमेवोपभोक्तुमिच्छतश्च दुर्योधनस्य कुटुम्बकं प्रणाशयितुं प्रादुर्भूतः प्रभुर्मे पृष्ठतलाश्लेषसुखं दिशति; गोपालपुंगव एवं सुखाकरोति ॥ .... .... .... .... .... (३)

(गाथा). नान्दकमेन्दिय नम्बि शेरणेन्नु * ताळ्न्द धनञ्जयर्काकि धरणियिल् *
वेन्दर्गळ्ट्टक विजयन्मणित्तिण्डेर् * ऊर्न्दवनेन्नैप्पुरंपुल्कुवान् उम्बर्कोनेन्नैप्पुरंपुल्कुवान् ॥ ४॥

"नन्दकनामकगङ्गधराच्युत! भवानेव मे शरणं भूयात्" इति प्रार्थ्य प्रणते धनञ्जये परमकृपां प्रदर्शयन् प्रत्यर्थिनां पार्थिवानां प्रणाशाय सारथ्यं कृतवान्मुकुन्दः पृष्ठतलाश्लेषसुखं मे दिशति; देवाधिदेव एवं सुखाकरोति ॥ .... .... .... .... .... (४)

(गाथा.) वेण्कलप्पत्तिरं कट्टि विळैयाडि * कणूपलशेयूद करुन्दळैक्काविन्कीळ् *
पण्पलपाडि पल्लाण्डिशैप्प * पण्डु मणूपलकोण्डान् पुरंपुल्कुवान् वामननेन्नैप्पुरं पुल्कुवान् ॥

कांस्यपत्रात्मककटिभूषणं दधानो विहृत्य वर्हिवर्होपकल्पितदिव्यच्छत्रधारी सन् समागत्य भक्तवर्गप्रकीर्तितमङ्गलाशासनगाथास्तुतश्च सन् पुरा भूमिविक्रमणं कृतवान् भगवान्मे पृष्ठतलाश्लेषसुखं दिशति; वामनो भगवानेवं सुखाकरोति ॥

कटितटे कांस्यपत्रमयभूषणधारणं विप्रकुमारलक्षणमिव प्राक्काले। तादृशभूषणभूषितस्सन् वामनवालको विहरन्नासीदिव महाबलियज्ञवाटसमागमात्पूर्वम् ॥ .... .... .... (५)

(गाथा.) शत्तिरमेन्दि तनियोरु माणियाय् * उत्तरवेदियिल्निन्न वोरुवनै *
कत्तिरियर्काण काणि मुत्तुम् कोण्ड * पत्तिराकारन् पुरं पुल्कुवान् पारळन्दानेन् पुरं पुल्कुवान् ॥

छत्रधरवामनब्रह्मचारी सन् यज्ञवेदिकामधितिष्ठतोऽद्वितीयौदार्यनिधेर्महाबलेस्सविधं समेत्य सर्वेषामपि भूभुजां पुरतः सर्वाणि जगन्ति स्वाधीनयन् विलक्षणवर्ष्मा भगवान्मे पृष्ठतलाश्लेषसुखं दिशति। धरणिविक्रमणदक्षिणो भगवानेवं सुखाकरोति ॥ .... .... .... .... (६)

(गाथा.) पोत्तवुरलै कविळ्त्तु अदन्मेलेरि * तित्तित्तपालुम् तडाविनिल्वेण्णेयुम् *
मेत्तत्तिरुवयिरार विळुङ्गिय * अत्तन् वन्देन्नै प्पुरंपुल्कुवान् आलियानेन्नै प्पुरं पुल्कुवान् ॥

उपयोगानर्हमुलूखलमधोमुखं भुवि निक्षिप्य तदुपरि समारुह्य शिक्यस्थकलशवर्तिमधुरदुग्धनवनीतादिकं गृहीत्वा आजठरपूर्तिं भृशमास्वादितवान् प्रभुर्मे पृष्ठतलाश्लेषसुखं दिशति; एतादृशचेष्टितकुशलः कृष्ण एवं सुखाकरोति ॥

मात्रादिभिरुत्तुङ्गस्थाने सुरक्षितं निहितस्य नवनीतादिभोग्यवस्तुजातस्य मोषणे प्रवृत्तः कृष्ण उलूखलं संपाद्य निधाय तदुपर्यारुह्य मुष्णाति; उलूखलस्य तस्य उपयोगानर्हत्वविशेषणदानमवधेयमिह। उपयोगयोग्यमुलूखलमानीतवान्यदि, तर्हि कार्यवशात्तदन्वेषणे प्रवृत्ता मात्रादय एनं मोषकं गृह्णीयुः किल; तथाऽन्वेषणप्रसक्तिर्माभूदिति धिया उपयोगानर्हमुलूखलमानिनाय सोऽयमिति ध्येयम् ॥ .... .... (७)

(गाथा.) मूत्तवै काण मुदुमणल्कुन्नेरि * कूत्तुवन्दाडि क्कुळलालिशै पाडि *
वायूत्त मरैयोर्वणङ्ग * इमैयवरेत्त वन्देन्नैप्पुरं पुल्कुवान् एम्बिरानेन्नै प्पुरं पुल्कुवान् ॥ ८॥

वयोवृद्धगोपालानामप्याकर्षकतया चिरन्तनसैकतविशेषोपरि समारुह्योपविश्य ब्रह्मर्षिभिरभिवन्दितो दिविपद्भिरभिष्टुतश्च सन् मृदुमधुरमुरलीगानं मनोहारि नर्तनं च कुर्वन् कृष्णो मे पृष्ठतलाश्लेषसुखं दिशति। अस्मत्प्रभुरेवं सुखाकरोति ॥ .... .... .... .... .... (८)

(गाथा.) कर्पकक्कावु करुदिय कादलिक्कु * इप्पोळुदीवनेन्नु इन्दिरन्काविनिल् *
निर्पन शेयूदु निलात्तिकळ् मुत्तत्तुळ् *उयूत्तवनेन्नै प्पुरंपुल्कुवान् उम्बर्कोनेन्नै प्पुरं पुल्कुवान्॥

वासवोद्यानवनस्थितं पारिजाततरुं कांक्षितवत्यै देव्यै सत्यभामायै सपदि तत्प्रदानं संकल्प्य तमनोकहं समुत्खाय चन्द्रज्योत्स्नाविशदं द्वारकागृहाङ्गणं प्रापितवान् कृष्णो मे पृष्ठतलाश्लेषसुखं दिशति। देवाधिनाथ एवं सुखाकरोति ॥

पारिजातापहरण कथा चैवम्—पुरा देवेन्द्रस्य शरणागतस्य महान्तमवसादमपाकर्तुकामो भगवान् वासुदेवस्तत्प्रार्थनया सत्यभामासमेतो गरुडारूढस्सन् नरकपुरमुपेत्य नरकं तं सुदर्शनप्रयोगतस्संहृत्य, तेनापहृतचरे इन्द्रमातुरदित्याः कर्णभूषणे तस्यै प्रदातुं देवलोकमुपाययौ। तत्र च शचीदेवी सत्यभामाया उच्चावचोपचार-संविधाननिरताऽपि पारिजातकुसुमं देवतैकभोग्यं मनुष्यानर्हं च मन्वाना न तत्तस्यै समार्पिपत। तस्मिन् दिव्य-कुसुमे स्पृहातिशयशालिनी भामा प्रियवल्लभसविधे स्वात्मन उत्कण्ठां न्यवेदयत्। अथ सत्यसंकल्पस्स भगवान् गरुत्मन्तमादिदेश—कल्पकानोकहं सत्यभामागृहाङ्गणमुपस्थापय क्षिप्रमिति। सच तथैव सद्यश्चक्रे। तदात्वे शचीप्रेरितो मघवा युद्धसन्नद्धश्च सन् भग्नः प्रतिनिवृत्त इति॥ .... .... (९)

(गाथा.) आयुच्चियन्नालिप्पिरान् पुरं पुल्किय * वेयूत्तडन्तोलिशोल् विट्टुशित्तन् मकिळ्न्दु *
ईत्त तमिलिवै यीरैन्दुं वल्लवर * वायूत्त नन्मक्कळैप्पेत्तु मकिळ्वरे॥ १०॥

पुरा कृष्णकिशोरप्रदत्तपृष्ठतलसंश्लेषणसुखमधिकृत्य विलक्षणावयवसन्निवेशाया यशोदया यदुक्तं तत्तथा प्राह विलक्षणद्राविडगिरा विष्णुचित्तसूरिवरः। ता इमा दश गाथास्संकीर्तयन्ति ये ते भगवद्भागवतमंगलाशासनो-त्सुकसदपत्यशालिनस्संतुष्टान्तःकरणा विराजेरन्निति फलश्रुत्या समापितमिदं दशकम्॥ .... (१०)

— एतद्दशकसारांशसंग्राहकश्लोकश्चैषः —

बालालङ्कारभूषाञ्चितमृदुतनुना कृष्णडिम्भेन शश्वत्
दूरादागत्य मूत्रस्रुतिततिसहितं पृष्ठभागे प्रदत्तम्।
कण्ठाश्लेषं प्रपद्य प्रमदमनुपमं प्राप्तवत्या जनन्या
तत्स्तोत्रं यद्यदुक्तं तदभिहितवता सूरिणाऽहं सनाथः॥

अर्भका दूरतस्सरभसमागत्य जनन्याः पृष्ठतलमाश्लिष्य यत्खेलनं कुर्वन्ति, तत्कृष्णोऽपि चक्रे यशोदायाम्। तथानाम खेलनकाले बाल्योचिताभरणनिनदश्रवणस्य मूत्रस्रुतिप्रेक्षणस्य च परमभोग्यत्वेन तत्कथन-मपि प्राप्तमभूत्। एवं कथितवत्या यशोदाया भावबन्धमात्मन्यावाह्य कथयामास भगवान् विष्णुचित्तसूरिवरः॥

इति श्रीभट्टनाथसूक्ते प्रथमं शतकं समाप्तम्॥

श्रीभट्टनाथदिव्यसूरिदिव्यचरणौ शरणम्॥

---

॥ श्रीरस्तु॥

श्रीमच्छठकोपयतिराजवरवरमुनीन्द्रदिव्यचरणा एव शरणम्॥

अथ श्रीभट्टनाथसूक्ते द्वितीयशतकप्रारम्भः। तत्र प्रथमं दशकम्।

## ॥ मेच्चूदुशङ्गम्॥

अवतारिका—श्रीभट्टनाथसूक्ते द्वितीयं शतकमुपक्रम्यते। तत्रेदमाद्यं दशकम्—श्रीकृष्णस्य दृग्विभीषणचेष्टितोद्घोषणं गोपीजनकृतमाह। लोके बालानां क्रीडितेषु दृग्विभीषणक्रीडितमप्यन्यतमं प्रथितम्। पक्ष्मणोर्विपर्यासनेन कुन्तलानां नेत्रभागेषु बन्धनेन च डिम्भानां भयोत्पादनं हि तत्। एवंविधं भीषणं चेष्टित-

विशेषं गोपकुमारिकासविधे श्रीकृष्णः कृतवानिति तासां वाचा निबध्नाति दशकमिदं सूरिः ॥ "अप्पूच्चि काट्टुकिन्रान्" [कृष्णो विभीषयति हन्त भयं प्रसूते] इत्येव एकैकस्या अपि गाथाया श्चतुर्थचरणो विराजते। केन प्रकारेण भीषणं करोतीति तु स्पष्टतया नाभ्यधायि श्लोके। बाला यथा कुर्वन्ति तथैवायमपि कृष्णकिशोरः कृतवानिति सामान्यतया केषाञ्चिदमिसन्धिरासीत। श्रीरङ्गधामनि अध्ययनोत्सवे एतद्दिव्यप्रबन्धानुसन्धानकाले [प्रथमोत्सवे प्रातः] अरैयरभिधानो दिव्यप्रबन्धगायक एतद्दशकवर्णितचेष्टिताभिनयं कुर्वन् पक्ष्मणोर्विपर्ययकरणं कुन्तलैर्मुखप्रच्छादनं च चक्रे। तदाले तत्र गोष्ठयां भगवान् रामानुजमुनिसार्वभौम आसीत्। तत्पृष्ठतो रामानुज-पदच्छायाचार्यो गोविन्दसूरिरन्ये चासन्। गायकेन संदर्शिते अभिनये अनौचित्यं प्रतिपद्यमानेन श्रीगोविन्द-सूरिणा [एम्बारगुरुवरेण] अरसिकोऽयं गायक इति हृदि कलयता प्रकारान्तरेणाभिनयप्रदर्शनं विलक्षणहस्तमुद्रया संसूचितम्। इङ्गितज्ञो गायकश्चाथ कृतचरमभिनयप्रकारमपहाय शंखचक्रदिव्यहेतिप्रदर्शनात्मकं विलक्षणमभिनय-मकार्षीत्। (अथ तद्विवृणुमः)। श्रीकृष्णो भगवान् अवतारसमये दिव्यायुधभूषितहस्त आसीत्। अथ * उप-संहर विश्वात्मन् रूपमेतच्चतुर्भुजम्। जानातु माऽवतारं ते कंसोऽयं दितिजन्मजः। * इति पित्रोः प्रार्थनया दिव्यायुधोपसंहारमतनोत्। तथा तदोपसंहृतं दिव्यायुधमधुना गोपबालिकासकाशे प्रदर्शयन् स एष गोपाल-कृष्णस्तासां भीषणो भवतिस्मेति संप्रदायविदामनुसन्धानम्। गोविन्दसूरिप्रदर्शितरीत्या गायकस्वामिनि प्रदर्श-यत्यभिनयं गोष्ठीनिविष्टा भगवद्रामानुजप्रभृतयस्सर्वेऽपि हर्षप्रकर्षमवापुः ॥ .... .... (*)

(गाथा.) मेच्चूदुशङ्गमिडत्तान् नल्वेयूदि * पोयुच्चूदिल् तोत्त पोरैयुडै मन्नर्काय् *
पत्तूर् पेरादन्नु भारतम् कैशेय्द * अत्तूदनप्पूचि काट्टुकिन्रान् अम्मनेयप्पूचि काट्टुकिन्रान्॥

सर्वाभिनन्द्यनिनदाढ्य पाञ्चजन्याञ्चितवामपाणिः, मृदुमधुरवेणु गानविशारदः, कृत्रिमद्यूते पराजितानां क्षमाधनानां पाण्डवानां सकलविधसाहाय्यसंविधाता, सर्वथाऽप्याकिञ्चन्यं तेषामपाकर्तुं भारतसमरं च सुष्ठु निर्वहन् जगत्प्रसिद्धदूतः कृष्णो हन्त विभीषिकां प्रदर्शयति भीषयति हन्त ॥ .... (१)

(गाथा.) मलैपुरै तोळ् मन्नवरुम् मारथरुम् मत्तुम् * पलर्कुलैय नूत्तुवरुम् पट्टळिय * पार्थन्
शिलैवळैय तिण्डेर्मेल् मुन्निन्र*शेङ्गणलैवलै वन्दप्पूच्चिकाट्टुकिन्रान्अम्मनेयप्पूचिकाट्टुकिन्रान्॥

शैलोपमेयभुजशालिनो भूपतीन् महारथान् अन्यांश्च भूयसो धूर्तान् धार्तराष्ट्रांश्च भञ्जयितुं धनुर्धराग्रेसर-धनञ्जयस्यन्दनसारथ्यं कृतवान् पुण्डरीकाक्षः पार्थविजयप्रशंसनोत्सुकः कृष्णो हन्त विभीषिकां प्रदर्शयति भीषयति हन्त ॥ .... .... .... .... .... (२)

(गाथा.) कायुनीर्पुक्कु कडम्बेरि * काळियन् तीय पणत्तुल् शिलम्बार्क्क प्पायून्दाडि *
वेयिन्कुळलूदि वित्तहनाय् निन्न*आयन्वन्दप्पूचि काट्टुकिन्रान् अम्मनेयप्पूचि काट्टुकिन्रान्॥

कालियभुजङ्गगरलाञ्चितसकलिन्दनन्दिनीघट्टमासाद्य तत्तीरस्थकदम्बमहीरुहादाशीविषस्य तस्य फणा-मण्डले निपत्य स्वचरणाभरणनिनदसनाथं ललितनटनमाकलय्य विरचितमधुरमुरलिगानो विस्मयनीयः कृष्णो हन्त विभीषिकां प्रदर्शयति भीषयति हन्त ॥ .... .... .... (३)

(गाथा.) इरुट्टिल् पिरन्दु पोय् एकै वल्लायर् * मरुट्टै त्तविर्प्पित्तु वन्कञ्जन्माळ *
पुरट्टि यन्नाळेङ्गळ् पूम्पट्टुक्कोण्ड * अरट्टन्वन्दप्पूचि काट्टुहिन्रानम्मने यप्पूचि काट्टुहिन्रान् ॥

मथुरानगरे तमिस्रायां प्रादुर्भूय अथ व्रजमधिगत्य तत्रत्यानामविवेकिनां स्वसजातीयानां वल्लवानां स्वविषये जातां भीतिं कंसवधेन निराकृतवान्, तटाकस्नानकाले आस्माकीनान्यम्बराण्यपहृतवांश्च धूर्तः कृष्णो हन्त विभीषिकां प्रदर्शयति भीषयति हन्त ॥ .... .... ... ... (४)

(गाथा.) शेप्पूण्ड शाडु शिदरि * तिरुडि नेय्क्कापूण्डु नन्दन्मनैवि कडै ताम्बाल् *
शोप्पूण्डु तुळ्ळि तुडिक्कतुडिक्क * अन्राप्पूण्डानप्पूचि काट्टुकिन्रानम्मने यप्पूचि काट्टुहिन्रान् ॥

असुरावेशदारुणस्य वृषभयोगार्हशकटस्य भञ्जनकर्ता गव्यस्तेयापराधेन नन्ददयितया दाम्ना निबध्य प्रहृतस्ततोऽतिमात्रं खिन्नश्च दामोदरो हन्त विभीषिकां प्रदर्शयति भीषयति हन्त ॥ .... (५)

(गाथा.) शेप्पिळ मेन्मुलै देवकि नङ्गैक्कु * शोप्पड चोत्रि तोरुप्पाडियोम् वैत्त *
तुप्पमुम् पालुम् तयिरुम्विळुङ्गिय * अप्पन्वन्दप्पूचिं काट्टुहिन्रानम्मने यप्पूचि काट्टुहिन्रान् ॥

विलक्षणावयवसौन्दर्यशालिन्या देवक्यास्तनूभवो भवन् व्रजनिलयाभिर्गोपीभिरस्माभिस्सुरक्षितनिक्षिप्त-माज्यं दुग्धं च आस्वादितवान् प्रभुः हन्त विभीषिकां प्रदर्शयति भीषयति हन्त ॥ .... (६)

(गाथा.) तत्तुकोण्डाळ् कोलो ताने पेत्ताळ् कोलो * शित्तमनैया ळशोदै यिळञ्शिङ्गम् *
कोत्तार्करुङ्गुळल् कोपाल कोळरि * अत्तन्वन्दप्पूचि काट्टुकिन्रान् अम्मने यप्पूचि काट्टुकिन्रान् ॥

'मनस्विन्या यशोदाया असौ स्वीकृतपुत्रः किम्? आहोस्विदौरसपुत्रः?' इत्युल्लेखयोग्यः कुसुमभरा-ञ्चितकुन्तलशाली गोपालसिंहः स्वामी हन्त विभीषिकां प्रदर्शयति भीषयति हन्त ॥

यशोदास्तन्यपानदर्शनेन 'कृष्णोऽयं तस्या औरसः पुत्रो भवितुमर्हति' इति केषाञ्चन जनानां प्रतीतिः; 'एतादृगतिमात्रप्रभावशाली महापुरुषः कथमनया गोपाङ्गनया प्रसूतो भवितुमर्हति! स्वयंव्यक्तोऽयं देवः पुत्रत्वे-नानया स्वीकृतस्स्यादिव' इत्यन्येषां जनानां प्रत्ययः ॥ .... .... .... (७)

(गाथा.) कोङ्गै वन्कूनि शोल्कोण्डु * कुवलयत्तुङ्गकरियुम् परियुमिराज्जियमुम् *
एङ्गुम्परदर्करुळि वन्कानडै * अङ्कण्णनप्पूचि काट्टुहिन्रान् अम्मने यप्पूचि काट्टुहिन्रान् ॥

कुब्जाया मन्थराया मनोरथमनुसृत्य लोकोत्तरगजतुरगाद्यपरिमितसंपत्समृद्धं कृत्स्नमपि राज्यं भरत-सात्कृत्य कर्कशमरण्यं प्रयातवानेष चारुलोचनः कृष्णो हन्त विभीषिकां प्रदर्शयति भीषयति हन्त ॥

रामकृष्णयोर्धर्म्यैक्यरूपं तादात्म्यमनया गाथया सुष्ठु प्रतिष्ठापितं भवतीति वेदितव्यम् ॥ .... (८)

(गाथा.) पदह मुदलै वाय्पट्ट कळिरु * कदरिकैकूप्पि येन्कण्णा कण्णावेन *
उदवप्पुळ्ळूर्न्दु अङ्गुरु तुयर्तीर्त * अदहन्वन्दप्पूचि काट्टुहिन्रान् अम्मने अप्पूचि काट्टुहिन्रान् ॥

प्रबलबाधाकरेण महापातकिना ग्राहेण प्रसभं गृहीतस्य मूलमूलेति खिन्नस्य शरणागतस्य 'आः परमकारुणिक भगवन्!' इत्याक्रन्दतश्च गजराजस्य आपन्निवर्तनाय तार्क्ष्यमधिरुह्य समागत्य तदीयमतिमात्रमवसादमपाकृतवान् प्रणतार्तिहरो भगवान् हन्त विभीषिकां प्रदर्शयति भीषयति हन्त ॥ .... (९)

(गाथा.) वल्लालिलङ्गै मलङ्ग शरम् तुरन्द * विल्लाळनै विट्टुशित्तन्विरित्त *
शोल्लान्दै अप्पूचि पाडलिवै पत्तुम् वल्लार्पोय् * वैहुन्दम्मन्नियिरुप्परे ॥ १० ॥

रणवीरस्य राक्षसेन्द्रस्य लङ्कां भस्मसात्कर्तुं शरान् प्रेरितवन्तं शार्ङ्गिणमुद्दिश्य श्रीविष्णुचित्तसूरिणा प्रणीतं गोपबालिकाभीषणविषयकमिदं दशकं कीर्तयन्तो महान्तो दिव्ये धाम्नि नित्यनिरता भवितार इति फलश्रुत्या समापितमिदं दशकम् ॥ .... .... .... .... (१०)

— एतद्दशकसारार्थसंग्राहक श्लोक एषः —

बालाः कुर्वन्ति हर्म्यां किमपि विहरणं भीषणं ह्यर्भकाणां
तद्वत्कृष्णोऽपि गोपीष्वकुरुत निजदिव्यायुधख्यापनेन ।
प्रोचुर्गोप्यस्तदात्वे तदिदमतिभिया, तत्तथैवानुशंसन्
सूरिः श्रीविष्णुचित्तो विलसति हृदये मामके ध्वान्तहारी ॥

दृग्विभीषणखेलनं कुर्वन्ति लोके बालका इति प्रसिद्धमेतम्। पक्ष्मणोर्विपर्यसनेन केशानां नयनभागेषु बन्धनेन च डिम्भानां भयप्रजननं हि तत्। एवंविधं भीषणं चेष्टितविशेषं बल्लवबालिकासविधे श्रीकृष्णः कलयामासेति कथनम्-स्वकीयशंखचक्रात्मकदिव्यहेतिप्रदर्शनेन विभीषयामासेति कथनपर्यायभूतमिति वेदितव्यम् ॥ एतादृशं भयानकं क्रीडितविशेषमधिकृत्य पुरा चकिताभिर्गोपबालिकाभिर्यदुक्तम्, तत्तथैव प्रोवाच भगवान् विष्णुचित्तसूरिवरः ॥ *

इति श्रीभट्टनाथसूक्ते द्वितीयशतके प्रथमं दशकम् ॥
श्रीविष्णुचित्तदिव्यसूरिदिव्यचरणावेव शरणम् ॥

---

श्रीमद्वरवरमुनये नमः ।

श्रीभट्टनाथसूक्ते द्वितीयशतके द्वितीयं दशकम्

## ॥ अरवणैयायायरेरे ॥

अवतारिका—स्तन्यपानार्थं यशोदया कृतं कृष्णस्याह्वानमधिकृत्य प्रवर्तते दशकमिदम्। श्रीकृष्णः कृत्स्नेऽप्यहनि लीलासक्तस्सन् क्षपितकालः श्रमातिशयेन स्तन्यपानमपि विस्मृत्य निद्रालुरभवत्। अथ प्रभातेऽप्यलब्धजागरं तं यशोदा प्रबोधयामास नानाविधस्तोत्रगीर्भिस्सह। प्रबुद्धोऽप्यथ कृष्णः स्वैरं वीथीषु विहरणे लोलुपस्सन् स्तन्यपानमकुर्वाण एवासीत्। तदा कथयति माता 'कुमारक!-दुर्बुद्धिदूषितः कंसः त्वयि कठोरचेता इति प्रसिद्धम्; स च तुभ्यं द्रुह्यन्, त्वज्जिघांसया आसुरप्रकृतीन् भूयसो मुहुः प्रेरयतीति च प्रथितम्।

अस्यामवस्थायां रथ्यासु निर्भयं स्वच्छन्दं विहरणं तव नैव मनागप्युचितम्। यथाकालं स्तन्यपानं किमु ते न कर्तव्यम्? वत्स? मास्म चरः स्वैरम्। मातृवाक्यपरिपालनं ते भृशमावश्यकमहो; त्वदीयानि चेष्टितानि सर्वाणि मदुत्सङ्गे प्रदर्शयन् सन् प्रेम्णा स्नुतं मदीयं स्तन्यं पीत्वा कृतार्थय माम्' इति। तदिदं तद्भावभावनया दिव्यमधुरगाथाभिराचष्टे भगवान्विष्णुचित्तसूरिः॥

*

(गाथा.) अरवणैयायायरेरे अम्मम्मुण्ण त्तुयिलेळाये *
इरवुमुण्णादुरङ्गि नीं पोयिनुमुचि कोण्डतालो *
वरवुं काणेन्वयिरशैन्दाय् वनमुलैहळ् शोर्न्दुपाय *
तिरुवुडैय वायूमडुत्तु तिळैत्तुदैत्तु प्परुहिडाये॥ १॥

भो भोगिभोगशयनीयशायिन् गोपालपुंगव! ह्यो रात्रावपि त्वं स्तन्यपानमकुर्वन् निद्राणोऽभूः; अद्य च नभसो मध्यमासीदतिस्म गभस्तिमाली। अतश्च स्तन्यं पातुमुत्तिष्ठ तल्पादपेतनिद्रः। मत्प्रार्थनां विना त्वमेवोत्थाय समागमिष्यसीति व्यभावयम्; हन्त न तथा समागतोऽसि। क्षुधितत्वं च दृश्यते तव कुक्षौ। मम च चारू पयोधरौ स्रवत्पयसौ विराजेते। उत्थायागत्य स्तन्यं पिव सानन्दं सकोलाहलं च। (इत्याह्वयति जननी यशोदा।) (१)

(गाथा.) वैत्त नेय्युम् काय्न्द पालुम् वडि तयिरुम् नरु वेण्णेयुम् *
इत्तनैयुम्पेत्तरियेन् एम्बिरान्नी पिरन्द पिन्नै *
एत्तनैयुम् शेय्यप्पेत्ताय् एदुम्शेय्येन् कदम्पडादे *
मुत्तनैय मुरुवल् शेय्दु मूकुरिञ्जि मुलैयुणाये॥ २॥

अस्मत्प्रभो कृष्णकिशोर! यदा त्वमिह व्रजे समजनिष्ठाः, ततः प्रभृति आज्यक्षीरदधिनवनीतादिषु लवलेशमपि नोपलभे। अस्तु तत्। त्वं तु यथेष्टं चेष्टितुं प्रभवसि। तत्कृते त्वामहं मनागपि न दण्डयेयम्। मा स्म कार्षीः कोपम्। मुक्ताफलोल्लाससमं स्मितमुदञ्चयन् घ्राणतश्चाजिघ्रन् स्तन्यं पिव॥ .... (२)

(गाथा.) तन्दम्मकळ्ळुदु शेन्नाल् ताय्मारावार्तरिक किल्लार *
वन्दु निन्मेल्पूशल् शेय्य वाळ वल्ल वाशुदेवा *
उन्दैयारुन्तिरत्तरल्ल रुन्नै नानोन्नुरप्प माट्टेन् *
नन्दगोप नणि शिरुवा नान् शुरन्द मुलैयुणाये॥ ३॥

अयि नन्दगोपसुन्दरनन्दन! त्वया प्रभसं प्रहृता अर्भका रुदन्मुखा स्सन्तः स्वस्वजननीसकाशं यदि गच्छेयुः तास्ता मातरः किमहो सहेरन्? असहमानास्ता इहागत्य त्वद्विषयकाणि निर्वेदवचांसि कटुतराण्यवकिरन्ति। तत एव च त्वं विशेषतः प्रहृष्यसि। तव पिता तु न मात्रयाऽपि त्वयि दत्तावधानः। अहं तावदबला न त्वां शिक्षयितुं प्रभवामि। आस्तां तदेतत्। वत्स वासुदेव! मदीयस्तनस्नुतं स्तन्यं पिवतात्॥ (३)

(गाथा.) कञ्जन्तन्नाल् पुणर्क्कप्पट्ट कळ्ळच्चकडु कलक्कळिय *
पञ्जियन्न मेल्लडियाल् पाय्न्दपोदु नोन्दिडुमेन्नु *
अञ्जिनेन्का णमरर्कोवे आयर्कूट्ट त्तळवन्नालो *
कञ्जै युन्वञ्जनैयाल् वलैप्पडुत्तायू मुलैयुणाये॥ ४॥

भो देवदेव! कंसप्रेरणया समागतेन दैत्येनाविष्टं शकटं यदा त्वं स्वकीयेन सुकुमारतरेण पादतलेन क्षिप्तवान्, हन्त तदा तत्र महती व्यथा जाता स्यादिति भृशमहं चकिताऽभूवम्। यद्यपि अन्येऽपि गोपाला एवमभूवन् भीताः, तथाऽपि मम जाता भीतिस्तु सर्वातिशायिनी। हे कंसवञ्चनपटो कृष्ण! स्तन्यमिदानीं पिब॥

(गाथा.) तीय पुन्दि कञ्जनुन्मेल् शिनमुडैयन् शोर्वु पार्त्तु *
मायन्दन्नाल् वलैप्पडुकिल् वाळकिल्लेन्वाशुदेवा *
तायर्वायूचोल् करुमङ्कण्डाय् शात्तिचोन्ने न्पोहवेण्डा *
आयर्पाडि कणि विळक्के अमर्न्दुन्दे न्मुलैयुणाये॥ ५॥

भगवन्वासुदेव! अतिदारुणमतिः कंसस्तावत् त्वयि क्रोधपरिप्लुतात्मा भृशम्। यदा त्वमनवहितो वर्तसे तदा त्वां स यदि स्वचिकीर्षितद्रोहलक्ष्यमाकलयेत, अथ हन्त! नाह मात्मानं धारयितुं प्रभवेयम्। अवधेहि वत्स! मातृवाक्यपरिपालनमत्यावश्यकं कृत्यमिति। पुनः पुनश्चेदं ब्रवीम्यहम्। त्वं तु मा स्म गच्छः कुत्रापि। व्रजभूषण वत्स! सोत्साहमागत्य समुत्सुकस्सन् स्तन्यं पिब॥ .... .... (५)

(गाथा.) मिन्नैय नुण्णिडैया र्विरिकुळल्मेल् नुळैन्द वण्डु *
इन्निशैकुम् विल्लिपुत्तू रिनिदमन्दा युन्नैक्कण्डार् *
एन्न नोन्बु नोत्ताळ् कोलो इवनै प्पेत्त वयिरुडैयाळ् *
एन्नुम् वार्त्तै येय्दुवित्त इरुडीकेशा मुलैयुणाये॥ ६॥

विद्युत्सन्निभवलग्नशालिललनामणिचिकुरप्रकरेषु निषण्णानां भ्रमराणां हर्षप्रकर्षपरीवाहरूपमधुरनिनदेन व्याप्ते श्रीधन्विनव्यपुरे सानन्दं विराजमान भगवन्! श्रीकृष्णकिशोर! स्वावलोकननिरतानां जनानां मुखात् 'आः कीदृशं तपस्तप्तमिमं शिशुं प्रसूतवत्या महाभागया' इत्येवमभिनन्दनवचः प्रादुर्भावयन् हृषीकेश! स्तन्यं मदीयं पिब॥

यशोदाभावनया गाथाः कीर्तयन्नपि विष्णुचित्तसूरिः स्वकीयानुभवमपि न जहातीति प्रोक्तचरम्। अत एवात्र स्वाभिनिवेशलक्ष्यभूतश्रीधन्विनव्यपुरी [श्रीविल्लिपुत्तूरु] ललामभूतभगवदभिन्नत्वेन कृष्णस्य संबोधनमकारि। यशोदयाऽप्येवं संबोधनमकारीति तु न संभावनार्हम्। अर्चामूर्तेर्विभवमूर्तेश्च धर्म्यैक्येन तादात्म्यमुपपन्नमेव ननु॥

अस्यां गाथायां रस्यरहस्यार्थविशेषः कश्चिदन्यापदेशवैखर्या कीर्तितो वर्तते। श्रीधन्विनव्यपुरस्य [श्रीविल्लिपुत्तूरुदिव्यदेशस्य] यद्विशेषणमिह दत्तं तन्नूनमभिप्रायविशेषगर्भितम्। ललनामणिचिकुरप्रकरासक्तभ्रमर-हर्षास्पदत्वविशेषणमिदं गोदादेवीविषयकसुप्रसिद्धैतिह्यविशेषप्रत्यभिज्ञापकं वेदितव्यम्। स्वात्मजां गोदादेवीमेव ललनामणिपदेनात्र विवक्षति विष्णुचित्तसूरिः। तस्याश्चिकुरप्रकरे संसक्तो भ्रमरः श्रीधन्विनव्यपुराधिनाथवटपत्र-शायिभगवानेव। तदिदं गोदादेवीचरित्रविदां सुगमम् * स्वोच्छिष्टायां स्रजि निगलितं या बलात्कृत्य भुङ्क्ते गोदा * इति पद्यरत्नं च श्रीभट्टपादानुगृहीतं प्रथितम्। * अलकविनिहिताभिः स्रग्भिराकृष्टनाथा विलसतु हृदि गोदा विष्णुचितात्मजा नः * इति श्रीमन्निगमान्तगुरुवर (गोदास्तुति) फणितिश्च प्रसिद्धा। तथाच स्वतनयाविषयकं यदैतिह्यं प्रथितम् तदेवात्र गाथायां सुचारुतरं व्यञ्जयामास सूरिवर स्तदनुगुणवाग्विन्यासैरित्युक्तं भवति। रसिकस्य भगवतो भ्रमरत्वेन कथनं युज्यते हि॥ .... .... .... (६)

(गाथा.) पेण्डिर्वाळ्वार् निन्नोप्पारै पेरुदुमेन्नु माशैयाले *
कण्डवर्हळ् पोकोळिन्दार् कण्णिणैयाल् कलक्कनोक्कि *
वण्डुलाम्पूङ्कुळलिनार् उन्वायमुद मुण्णवेण्डि *
कोण्डुपोवा न्वन्दुनिन्नार् गोविन्दा नी मुलैयुणाये ॥ ७ ॥

वत्स गोविन्द ! याया ललनास्त्वामिह द्रष्टुमागच्छन्ति तास्तास्सर्वा अपि त्वत्सन्निभं शिशुं प्रजनयितुकामास्सत्यः स्वस्य गृहगमनं विस्मृत्य सोत्कण्ठमत्रैवावतिष्ठन्ते । मधुपानवप्रवणभ्रमरपरिवृतचिकुरप्रकरा अन्याश्च वनितास्तव सर्वाङ्गसौन्दर्यविलोकनेन विवशास्सत्यः त्वदधरामृतास्वादनहेवाकेन त्वां स्वस्वगृहं नेतुकामा अत्रावतिष्ठन्ते । तत् सरभसमायाहि स्तन्यं पातुम् ॥ .... .... .... (७)

(गाथा.) इरुमलै पोलेदिन्द मल्लर् इरुवरङ्गमेरिशेयूदायू * उन्
तिरुमलिन्दु तिहळुमार्वु तेक्क वन्दु एन्नल्हुलेरि *
ओरु मुलैयै वायूमडुत्तु ओरु मुलैयै नेरुडिकोण्डु *
इरुमलैयुम् मुरै मुरैयायू एङ्गियेङ्गि यिरुन्दुणाये ॥ ८ ॥

शैलोपमेयभुजबलशालिनोः प्रस्पर्धितुमागतयोरुभयोश्चाणूरमुष्टिकाख्यमल्लयोः शरीरं भस्मसात्कृतवन् नन्दनन्दन ! त्वमागत्य मदुत्सङ्गमधिरुह्य, परमसुन्दरं तव वक्षस्स्थलं यथा स्तन्येन प्रपूर्णं भवेत्तथा स्तनमेकमास्वादयन् अपरं च स्तनं हस्तचेष्टयाऽभिमृशन् स्तनद्वयमपि पर्यायेण साह्लादातिशयं पिब ॥ .... (८)

(गाथा.) अङ्गमल प्पोदहत्तिल् अणिकोळ्मुत्तम् शिन्दिनाप्पोल् *
शेङ्गमल मुहम् वियर्प्प तीमैशेयूदु इम्मुत्तत्तूडे *
अङ्गमेल्लाम् पुळुदियाह अळैयवेण्डा अम्मविम्म *
अङ्गमर्कमुदळित्त अमर कोवे मुलैयुणाये ॥ ९ ॥

पुरा शरणागतानाममराणाम् उदधिमथनेनामृतमनुगृहीतवन् देवाधिदेव भगवन् ! सुरुचिरे कमलकुसुमे चारूणि मौक्तिकानि विशीर्णानीवेति वक्तुं योग्यतया तव मुखारविन्दं स्वेदाम्बुकणिकाञ्चितमाकलय्य दिव्यवपुश्च धूलिधूसरितं विरचय्य सदनाङ्गणेऽत्र पांसुक्रीडां मास्म कार्षीः, बाल्यलौल्यतो विरम्य स्तन्यं पातुमायाहि ॥ (९)

(गाथा.) ओडवोड किङ्गिणिहळ् ओलिक्कुमोशै प्पाणियाले *
पाडिप्पाडि वरुहिन्नायै पर्प्पनाव नेन्निरुन्देन् *
आडियाडि यशैन्दशैन्दिट्टु अदनुक्केत्त कूत्तैयाडि *
ओडियोडि प्पोय्विडादे उत्तमा नी मुलैयुणाये ॥ १० ॥

शैशवोचितस्खलितगतिसमये संजातेन पादाभरणध्वनिना संगीतमुत्पाद्य तादृशगानानुरूपं नटनं च विरचय्य सविभ्रमं समागच्छन्तं त्वां साक्षात् पद्मनाभं भगवन्तमेव मन्ये । अयि पुरुषोत्तम ! एवमेवं नटनेन सुदूरतो मास्म गमः । आयाहि स्तन्यं पातुम् ॥ .... ... .... (१०)

(गाथा.) वारणिन्द कोङ्गैयाचि माधवावुण्णेन्न मात्तम् *
नीरणिन्द कुवळै वाशम् निहळ नारुं विल्लिपुत्तूर् *
पारणिन्द तोल्पुहळान् पट्टर्पिरान्पाडल्वल्लार् *
शीरणिन्द शेङ्गण्माल्मेल् शेन्न शिन्दै पेरुवर् तामे ॥ ११ ॥

कञ्चुकाञ्चितकुचभरया यशोदया स्तन्यपानार्थं यत्कृतं कृष्णकिशोराह्वानम्, तत् कुवलयसौरभसंभृत-धन्विनव्यनगरावसथेन विश्वविसृत्वरयशसा भट्टनाथेन तद्भावभावनया प्रोक्तम् । ता इमा गाथा ये कीर्तयन्ति ते पुण्डरीकाक्षे भगवति प्रवणचित्ता भवितारः ! इति फलश्रुत्या समापितमिदं दशकम् ॥ ... (११)

— एतद्दशकसारांशसंग्राहक श्लोक एषः —

वीथ्यां स्वैरं चरन्तं भयलवविधुरं नन्दनं नन्दपत्नी
हा कृष्ण स्वैरमेवं विहरणमुचितं नैव ते वीथिकासु ।
काले स्तन्यं न पेयं किमु, कठिनहृदः कंसदैत्यस्य दौष्ट्यं
शङ्कां दत्ते, तदेहीत्यकथयदिति तत्प्रोचिवान् सूरिरीड्यः ॥

श्रीकृष्णः कृत्स्नेऽप्यहनि लीलासक्तस्सन् क्षपितकालः श्रमातिशयेन स्तन्यपानमपि विस्मृत्य निद्रालुरभवत् । अथ प्रभातेऽप्यलब्धजागरं तं यशोदा प्रबोधयामास नानाविधस्तोत्रगीर्भिः । प्रबुद्धोऽप्यथ कृष्णः स्वैरं वीथीषु विहरणे लोलुपस्सन् स्तन्यपानमकुर्वाण आसीत् । तदा कथयतिस्म माता "हा कुमारक ! दुर्बुद्धिदूषितः कंसस्त्वयि कठोरचेता इति प्रसिद्धम्; सच तुभ्यं द्रुह्यन् त्वजिघांसया आसुरप्रकृतीन् भूयसो मुहुः प्रेरयतीति च प्रसिद्धम्; अस्यामवस्थायां रथ्यासु निर्भयं स्वच्छन्दं विहरणं तव नैव मनागप्युचितम् । यथाकालं स्तन्यपानं किमु ते न कर्तव्यम? वत्स ! मास्म चरः स्वैरम्; समागत्य मदुत्सङ्गे निषद्य मदीयं स्तन्यं पिब" इति । इदं तद्भावभावनया प्रोक्तवान् विष्णुचित्तसूरिरस्माकं स्तुतिपात्रम् ॥

इति श्रीभट्टनाथसूक्ते द्वितीयशतके द्वितीयं दशकम् ॥
श्रीविष्णुचित्तसूरिदिव्यचरणावेव शरणम् ॥

---

॥ श्रीरस्तु ॥

## श्रीभट्टनाथसूक्ते द्वितीयशतके तृतीयं दशकम्

# ॥ पोय्प्पाडुडैय ॥

**अवतारिका**—अधस्तनदशके स्तन्यपानार्थमाहूतवती यशोदा कृष्णस्य कर्णवेधोत्सवं चिकीर्षन्ती तदर्थं व्रजे सर्वा अपि ललना आहूय अथ तासां सत्कारार्थं ताम्बूलपूगादिकं च सज्जीकृत्य 'आयाहि कृष्ण ! कर्णवेधोत्सवमनुभवितुम्; कर्णवेधेन न ते बाधालेशोऽपि भविता; इह च पश्य सर्वानपि गोपालबालान् यथाकालमनुभूतकर्णवेधान मकरकुण्डलालंकृतकर्णांश्च । त्वयाऽपि नन्वेवं वर्तितव्यम्; मा स्म रोदीः; त्वदभिमत-जम्बूफलपनसफलादिकं च विशेषतो वितरेयम्; आयाहि तूर्णमायाहि कर्णवेधार्थं कर्णभूषणधारणार्थं च' इत्याचचक्षे । तदिदं तद्भावोपपत्त्या कथयति भगवान् भट्टनाथो मुनिप्रवरः । दशकेऽस्मिन् आनुपूर्व्या केशवादि-द्वादशनामावलिप्रथनात्मको विशेषश्चाववेयः । अत एव दशकमिदं फलश्रुतिगाथया सह त्रयोदशगाथात्मकं विराजते ॥

(गाथा.) पोरुप्पाडुडैय निन् तन्दैयुम् ताव्त्तान् पोरुतिरल् कञ्जन्कडियन् *
काप्पारुमिल्लै कड़ल्वण्णाचुन्नै तनिये पोयेङ्गुम् तिरिदि *
पेरुप्पाल्मुलैयुण्ड पित्तने केशवनम्बी युन्नै कादु कुत्त *
आरुप्पालर्पेण्डुहलेल्लारुम् वन्दार् अडैकाय् तिरुत्ति नान् वैत्तेन् ॥ १ ॥

जलधिसवर्ण वत्स कृष्ण! महात्मा तव जनको नन्दगोपः कार्यवशाद्बहिर्गतवान् नाद्यापि प्रतिनिवृत्तः। युद्धोन्मुखः कंसश्च तव विषये नितरां दारुणः। त्वामभिरक्षितुं शक्तः कोऽपि नास्ति तावदिह। त्वं तु एकाकी सन् सर्वत्र संचरसि स्वच्छन्दम्। पूतनास्तन्यपायिन् उन्मत्तकृष्ण! केशवनामक भगवन्! त्वदीयकर्णवेधोत्सवार्थं गोपाङ्गनास्सर्वा अपीह समागतास्सन्ति। तासां सत्कारार्थं ताम्बूलादिकं च मया सज्जीकृतमास्ते ॥ ... (१)

(गाथा.) वण्णप्पवळ मरुङ्गिनिल् शात्ति मलर्प्पादक्किण्गिणियार्प्प *
नण्णित्तोल्लुमवर्शिन्दै पिरियाद नारायणा विङ्गे वाराय् *
एण्णवर्करिय पिराने तिरियै येरियामे कादुक्किडुवन् *
कण्णुक्कु स्नन्नुमळडुमुडैय कनकक्कडिप्पुमिवैया ॥ २ ॥

आश्रितजनहृदयैकनिवासरसिक नारायणनामधेय! कृष्ण! रमणीयविद्रुमभूषालंकृतकटितटस्त्वं पादारविन्द धृतभूषणध्वनिना सह सरभसमत्र समायाहि तावत्। दुरवगमस्वरूपस्वभाव प्रभो! व्यथालेशमन्तरेण तव कर्णयो स्तन्तुवर्तिकां प्रवेशयेयम्। तदनन्तरं धारयितुं योग्ये चारुतरे सौवर्णकुण्डले च इमे ॥ .... (२)

(गाथा.) वैयमेल्लाम्पेरुम् वार्हडल्वाल्लुम् महरक्कुळै कोण्डु वैत्तेन् *
वेय्यवे कादिल् तिरियै इडुवन् नी वेण्डियदेल्लाम् तरुवन् *
उय्यविव्वायर्कुलत्तिनिल् तोन्रिय ओणूशुडरायर्कोलुन्दे *
मैयन्मै शेथ्दिळवाचियरुळ्ळत्तु मादवने यिङ्गे वाराय् ॥ ३ ॥

अस्माकमुज्जीवनाय गोपालकुलेऽस्मिन्नवतीर्ण महातेजस्विन् माधवसमाख्य गोपालतल्लज! अनर्घं मकरकुण्डलं तव कृते सज्जीकृतवत्यहम्। यथा च ते व्यथा न भवेत्तथानाम कर्णवेधं करिष्यामि। त्वदपेक्षितं सर्वमपि वस्तुजातं वितरिष्यामि। कृष्ण! गोपालबालिकानां हृदि व्यामोहमुत्पादयन् सन्नत्रागच्छ ॥ .... (३)

(गाथा.) वणनन्नुडैय वयिरक्कडिप्पिट्टु वार्हादु ताळप्पेरुक्कि *
कुणनन्नुडैय रिक्कोपाल पिळ्ळैकळ् कोविन्दा नीशोल्लुक्कोळ्ळाय् *
इणै नन्नळहिय इक्कडिप्पिट्टा लिनिय पलाप्पळन्तन्दु *
शुणनन्नणिमुलै युण्ण तरुवन् नान् शोत्तम्पिरानिङ्गे वाराय् ॥ ४ ॥

अयि गोविन्दनामक वत्स कृष्ण! अमी गोपालबालका यथाकालं कर्णवेधोत्सवमनुभूय सुमनोहरकुण्डलालंकृतकर्णास्सद्गुणशालिनश्च खलु विराजन्ते। त्वं तु मातुर्मे भाषितं न मनागप्याद्रियसे। अनादरमिममपोह्य यदि कुण्डलधारणयोग्यो भवितासि अथ ते परमभोग्यपनसफलप्रदानपूर्वकं स्तन्यं च वितरेयम्। एवमङ्गीकुरुष्वेति बद्धश्चायमञ्जलिस्ते। मत्सविधमायाहि वत्स! ॥ .... .... (४)

(गाथा.) शोत्तम्पिरानेन्निरन्दालुम् कोळ्ळाय् शुरिकुळ्लारोडु नी पोय् *
कोत्तु क्कुरवै पिणैन्दिङ्गु वन्दाल् कुणम् कोण्डडुवनो नम्बी *
पेर्तुम्पेरियन वप्पन्तरुवन् पिराने तिरियिड वोट्टिल् *
वेय्त्तडन्तोळाविरुम्बु करुङ्गुळल्लिट्टुवे नी यिङ्गे वाराय् ॥ ५ ॥

भुजसौन्दर्यशालिनीनां ललनानां स्पृहणीय! नीलकुन्तलसुन्दर! विष्णुनामक कृष्ण! तव बद्धोऽयमञ्जलिरित्युक्त्वा प्रार्थितोऽपि त्वं न मे वाचमाद्रियसे। कुटिलकुन्तलाभिर्वनिताभिस्सह गत्वा रासक्रीडामारचय्य समागच्छसि चेत्त्वम्, कथमहं त्वां गुणशालिनं प्रतिपद्येय?। अस्तु तत्। पुनः पुनश्च ते पृथून्यपूपभक्ष्याणि वितरेयम्, यदि त्वं कर्णवेधानुकूल्यमावहसि। आयाहि तावदिह ॥ (इत्याह यशोदा।)

कर्णवेधोचिते वयसि वर्तमानोऽयं रासक्रीडातत्परः कथं भवितुमर्हतीति शङ्का जायेत। अत्रैवं समाधेयम्। यशोदा तु तदात्वे बाल्योचितं किमपि चेष्टितं कथितवती। पश्चात्तनो विष्णुचित्तसूरिस्तु रासक्रीडात्मकं तत् व्यपदिशतीति। क्रीडाविशेषवाची शब्दोऽयं क्रीडासमान्ये वर्तेत इति ग्रहीतुं युक्तम्। .... (५)

(गाथा.) विण्णेल्लाम् केट्क वळुदिट्टाय् उन्वायिल्विरुम्बियदनै नान्नोक्कि *
मण्णेल्लाम् कण्डेन्मनत्तुळ्ळे यञ्जि मदुशूदने येन्निरुन्देन् *
पुण्णेदुमिल्लै युन्कादु मरियुम् पोरुत्तिरुप्पोदिरु नम्बी *
कण्णावेन्कार्मुहिले कडल्वण्णा कावलने मुलैयुणाये ॥ ६ ॥

मृद्भक्षणापराधनिमित्तेन मया प्रहृतस्त्वं वत्स कृष्ण! भृशमुच्चैररोदीः। तदात्वे त्वदास्ये मृदमवलोकितुं व्यवसितवत्या मया तत्र सकलानि भुवनानि निरीक्षितानि हन्त। अहह! ईदृशं सकलजगद्भक्षणदक्षिणं प्रभुवरं किल प्राहरम्! इति चकिता सती 'मधुसूदनो भगवानेवासौ' इत्यवाधारयम्। आस्तां नाम तत्। तव कर्णे व्रणबाधा न काऽपि भवित्री। कर्णवेधकुण्डलधारणसमये स्वल्पीयसी व्यथा यद्यपि जायेत, क्षणं तां सहस्व। गुणगणभरित! नीलमेघनिभ! जलधिसवर्णकृष्ण! भगवन्! मदीयस्तन्यपाने व्यग्रो भव ॥ .... (६)

(गाथा.) मुलैयेदुम् वेण्डेनेन्नोडि निन्कादिल् कडिप्पै परित्तेरिन्दिट्टु *
मलैयै येडुत्तु महिळ्न्दु कन्मारिकात्तु पशुनिरै मेय्त्ताय् *
शिलैयोन्निरुत्ताय् तिरिविधिकरमा तिरुवायर्पाडिप्पिराने *
तलैनिलाप्पोदे युन्कादैप्पेरुक्कादे विट्टिट्टेन् कुत्तमेयन्ने ॥ ७ ॥

गोवर्धनाद्रिसमुद्धरणेन शिलावर्षविपन्निवारणनिपुण! गोपालबालक! जानकीपरिणयाय रौद्रधनुर्भञ्जनपटो त्रिविक्रमाभिधान! गोकुलमहोपकारक! स्तन्यमन्यच्च न किमप्यपेक्षितं ममेति प्रोच्य मद्दित्सितं वस्तुजातमवधीर्य प्रधाव्य कर्णभूषां च निरस्तवानसि। अतिशैशववयस्येव तव कृत्यमिदं न ह्यहं कृतवती। ममैव खल्वसावपराधः ॥

(गाथा.) एन्कुत्तमेयेन्नु शोल्लवुम् वेण्डाकाण् एन्नैनान् मण्णुण्डेनाह *
अन्बुत्तु नोक्कि यडित्तुम्पिडित्तुम् अनैवर्क्कुम् काट्टित्तिलैये *
वन्पुत्तरविन्पहै क्कोडि वामननम्बी उन्कादुहळ् तूरुम् *
तुन्बुत्तनवेल्लाम् तीर्प्पाय् पिराने तिरियिट्टु चोल्लुहेन्मेय्ये ॥ ८ ॥

(गाथायामस्यां पूर्वार्धं कृष्णभाषितम्; उत्तरार्धं यशोदाभाषितमिति वेदितव्यम्।) अयि जननि! यशोदे! ममैव खल्वसावपराध इति स्वात्मगर्हया यदुक्तं त्वया, तत् ममैव खल्वपराधित्वस्थापनरूपम्। वस्तुतो मयि न कोऽप्यपराधः। अकृतमृद्भक्षणमपि मां मृद्भक्षकमुक्त्वा सादरं मम वदनं विलोक्य अकाण्डे मां प्रहृत्य, दुष्टमिमं डिम्भं पश्यतेति अन्येभ्योऽपि जनेभ्यो मां प्रदर्शितवती खल्वसि त्वम् इति कथितवन्तं कृष्णं प्राह यशोदा—अये गरुडध्वज वामनमूर्ते! एवं नाम वाक्कलहेन वृथा कालयापने कृते सति, विद्धौ तव कर्णौ नीरन्ध्रौ स्याताम्। प्रणतार्तिहर प्रभो! तव कर्णरन्ध्रे भूषणप्रवेशनपूर्वाङ्गतया तन्तुवर्तिकां प्रवेशयितुमनुजानीहि। अथ, इतःपरं त्वां न ताडयेयमिति सत्यं शपेय॥ .... .... .... .... (८)

(गाथा.) मेय्यन्नु शोल्लुवार्शोल्लै क्करुदि तोडुप्पुण्डांय् वेण्णेयेयेन्नु *
कैयैप्पिडित्तु करैयुरलोडेन्नै काणवे कट्टित्तिलैये *
शेय्दन शोल्लि शिरित्तङ्गिरु विकल् शिरीदरा वुन्कादु तूरुम् *
कैयिल् तिरियै यिडुकिडाय् इन्निन्न कारिहैयार्शिरियामे॥ ९॥

(अस्यामपि गाथायां पूर्वार्धं कृष्णभाषितम्। उत्तरार्धं यशोदाभाषितम्।) जननि यशोदे! येये यद्यद्वदन्ति तत्सर्वं तथ्यमेवेति मत्वा त्वं नवनीतचौर्यापराधं मय्यारोप्य प्रसभं मां गृहीत्वा बहुजनापहास्यतया उलूखलबन्धं प्रापयः खलु (इत्युक्तवन्तं कृष्णं प्राह यशोदा—) अये श्रीधर! एवमेवं मया कृतं किमपि किमपि कृत्यमधुनाऽभिधाय स्मयमानमुखस्त्वं दूरतोऽवतिष्ठसे यदि, तव कर्णौ नीरन्ध्रौ स्याताम्। अथच इमा ललना अपहसेयुस्त्वां शून्यकर्ण इति। तादृगपहासावकाशमप्रदाय मत्करस्थिततन्तुवर्तिकां कर्णे कलय कुमारक!॥ (९)

(गाथा.) कारिहैयार्क्कुं मुनक्कुमिळुक्कुत्तेन्? कादुहळ् वीङ्गियेरियिल् *
तारियादाहिल् तलैनोन्दिडुमेन्नु विट्टिट्टेन् कुत्तमेयन्रे *
शेरियल् पिळ्ळैहळेल्लारुम् कादुपेरुक्कि तिरियवुम् काण्डि *
एर्विंडै शेत्तिळङ्कन्नेरिन्दिट्ट इरुडीकेशा एन्दन्कण्णे॥ १०॥

अस्यां गाथायां प्रथमपादमात्रं कृष्णस्य वचः; अथ पादत्रयं यशोदावचः।) जननि यशोदे! अपहसितुमिच्छवः काममपहसन्तु नाम। मम कर्णयोः व्यथायां जातायां, तासां ललनानां तव च किं नाम क्षतम्? (इति वदन्तं कृष्णं प्राह यशोदा—) अयि हृषीकेश वत्स! इतः प्रागेव कर्णवेधादिकं ते कर्तव्यमासीत्; अतिशैशवे तत्करणे तव भवेदसह्या व्यथेति खल्वहमुपेक्षितवती। तदिदं ममैव ह्यपराधः। अरिष्टासुरनिरासक! वत्सासुरविमर्दन कृष्ण! व्रजेऽस्मिन् त्वदितरान् सर्वानपि बालकान् पश्यसि खलु त्वं कर्णिकालंकृतकर्णान्। त्वयाऽपि ननु तादृशेन हि वर्तितव्यम्॥ .... .... .... (१०)

(गाथा.) कण्णैक्कुळिर क्कलन्देङ्गुम् नोक्कि कडिकमळ् पूङ्गुळलार्हळ् *
एण्णत्तुळेन्नुमीरुन्दु तित्तिक्कुम् पेरुमाने येङ्गळमुदे *
उण्णक्कनिकळ् तरुवन् कडिप्पोन्नुम् नोवामे कादुक्किडुवन् *
पण्णैक्किळिय चक्कडमुदैत्तिट्ट पर्प्पनाबा विङ्गे वाराय्॥ ११॥

सुगन्धिचिकुरप्रकराणां वल्लवीनां नयनैस्सह स्वनयने संपृक्ते कृत्वा साकूतमिव तासां सर्वाङ्गसुषमामभिवीक्ष्य, तासां हृदयदहरमधिवसन् परममधुरमूर्ते भगवन् पद्मनाभसमाख्य कृष्ण! भोक्तुं ते फलानि वितरेयम्; व्यथालेशमन्तरेण कुण्डलधारणं च ते कारयेयम्। अयि शकटभञ्जननिपुण कृष्ण! समायाह्यत्र ॥ .... (११)

(गाथा.) वावेन्नुशोल्लियेन् कैयैप्पिडित्तु वलियवे कादिल् कडिप्पै *
नोवत्तरिक्कल्उनक्किङ्ङिलक्कुत्तेन् कादुकल् नोन्दिडुम् किल्लेन् *
नावर्पळम् कोण्डुवैत्तेन् इवै काणाय् नम्बी! * मुन्वञ्जमकळै
शावप्पालुण्डु शकडिरप्पायुन्दिट्ट दामोदराविङ्गे वाराय् ॥ १२ ॥

(पूर्वार्धे कृष्णवचः; उत्तरार्धे यशोदावचः) अयि जननि यशोदे! वत्स! समायाह्यत्रेति सादरं मामाहूय प्रथमं मम करौ परिगृह्य व्यथां समुत्पाद्य कर्णयोः कुण्डलधारणं कारयन्त्यास्तव का नाम हानिरुत्पत्स्यते! ममैव खल्वसह्या बाधा। नास्ति मे तत्सहन शक्तिः (इत्युक्तवन्तं कृष्णं प्राह यशोदा) गुण परिपूर्ण! दामोदरसमाख्य कृष्ण! त्वदभिमतानि जम्बूफलानि सज्जीकृतानि मया समवलोकय; पूतनास्तन्यपायिन् शकटमर्दनदक्षिण वत्स! समायाह्यत्र ॥ .... .... .... .... (१२)

(गाथा.) वार्हादुतालप्पेरुक्कियमैत्तु मकरक्कुळैयिड वेण्डि *
शीरालशोदै तिरुमालैच्चोन्नशोल् शिन्दैयुल् निन्रु तीकळ *
पारार् तोल्पुकळान् पुदुवै मन्नन् पन्निरुनामत्ताल् शोन्न *
आरादवन्दादि पन्निरण्डुम् वल्लार् अच्युदनुक्कडियारे ॥ १३ ॥

कृष्णकिशोरस्य कर्णवेधम् अथ कुण्डलधारणं च कारयितुं कामयमानया यशोदया साधु साधु यदुक्तं तत्तथैव संचिन्त्य विश्वविसृत्वरयशसा भट्टनाथसूरिवरेण द्वादशनामावलीग्रथनपूर्वकम् अतिभोग्यान्तादिप्रक्रियया च परिकीर्तितम्। ता इमा द्वादश गाथा ये कीर्तयन्ति ते भवितारोऽच्युतभक्तिनिघ्ना इति फलश्रुतिगाथया परिसमापितमिदं दशकम् ॥ .... .... .... .... (१३)

— एतद्दशकसारांशसंग्राहकश्लोक एषः —

श्रीकृष्णे कर्णवेधं कलयितुमधिकोत्कण्ठिता दिव्यमाता
तस्योक्त्वा केशवादिद्व्यधिकदशमहानामवर्गं सुभोग्यम्।
जम्बूमुख्यं प्रदद्यां फलमतिमधुरं मास्म रोदीस्सुखं ते
भूयादित्याजुहावेत्यभिदधति मुनौ विष्णुचित्तेऽस्मि भक्तः ॥

यशोदा कृष्णकिशोरस्य कर्णवेधोत्सवं कर्तृकामा गोकुलवर्तिनीस्सर्वा अपि वनितास्तदर्थमाहूय तासां सत्काराय ताम्बूलादिकं च सन्नाह्य 'कर्णवेधोत्सवमनुभवितुं कृष्ण समागच्छ; बाधा तु न ते मनागपि भवित्री. कर्णवेधतः; जम्बूफलादिकं च ते वितरेयम्; सुखं ते भूयात्; इत्युक्त्वा तमाह्वयतिस्म, तदिदं द्वादशनामावलीग्रथनमधुरं वचनमनुवदतिस्म भगवान् भट्टनाथसूरिवरः। तस्मिन्नहमस्मि भक्तः ॥

इति भट्टनाथसूक्ते द्वितीयशतके तृतीयं दशकम् ॥
श्रीभट्टनाथसूरिदिव्यचरणावेव शरणम् ॥

॥ श्रीरस्तु ॥

# पेरियाळ्वार तिरुमोऴि

## श्रीभट्टनाथसूक्ते द्वितीयशतके चतुर्थं दशकम्

## ॥ वेण्णैयळैन्द कुणुङ्गुम् ॥

अवतारिका—अधस्तनदशके कृष्णस्य कर्णवेधकुण्डलधारणे कृतवत्या यशोदया अथ तस्य स्नाने च समजनि समुत्कण्ठा। स्नानोपयुक्तान्युपकरणानि सर्वाणि संभृत्य वत्स स्नातुमायाहि; गोष्ठेषु विहरणेन त्वदीय-गात्रमशेषं पांसुप्रदिग्धं परिदृश्यते; * सरसिजमनुविद्धं शैवलेनापि रम्यम् इत्युक्तरीत्या गोधूलिधूसरितकोमल-दिव्यगात्रं द्रष्टुमुत्कण्ठा मम महती कामम्। तथाऽपि येये त्वां पश्यन्ति ते सर्वेऽपि त्वद्विषये मामश्रद्दधानां मन्यमाना विनिन्देयुः; त्वन्मनोरमा नीलादेवी च अहह! मलीमसागात्रोऽसीति त्वां परिहसेत्। एतादृशपरिहासोपालम्भा-देरवकाशमप्रदाय क्षिप्रमायाहि स्नातुमित्युक्तवती सा। तदिदं तद्भावभावनया भट्टनाथसूरिराचष्टे दशकेऽस्मिन् ॥

(गाथा.) वेण्णैयळैन्द कुणुङ्गुं विळैयाडु पुळुदियुत् कोण्डु *
तिण्णन विव्विरावुन्नै तेयूत्तुकिडक्क नानोट्टेन् *
एण्णेयू पुळिप्पळङ्कोण्डु इङ्गेत्तनै पोदुमिरुन्देन् *
नण्णलरियपिराने नारणा नीराड वाराय् ॥ १ ॥

वत्स कृष्ण नारायण! अजस्रं नवनीतामिमर्शजनित गन्धविशेषेण सह लीलापांसुपुञ्जदिग्धगात्रस्त्वं अद्य रात्रौ बाधामधिकामवाप्स्यसि कण्डूतिमयीम्। नाहं तत्सहेय। अभ्यञ्जनार्थं तैलं तिन्त्रिणीफलं च अत्र सज्जीकृत्य चिरात्किलाहं त्वदागमनप्रतीक्षिणी वर्ते। स्वयत्नदुर्गम प्रभो! स्नातुमायाहि ॥ .... (१)

(गाथा.) कन्नुळैडचेवियिल्ल कट्टेरुम्बु पिडित्तिट्टाल *
तेन्त्रिक्केडुमाहिल्ल वेण्णयू तिरट्टि विळुङ्गमा काण्बन् *
निन्र मरामरं शायूत्ताय् नीपिरन्द तिरुवोणम् *
इन्रु नी नीराडवेण्डुम् एम्बिरानोडादे वाराय् ॥ २ ॥

पुरा रामो भूत्वा सप्त सालवृक्षान्निष्पत्रीकृतवन् कृष्णकिशोर! त्वं लीलापरस्सन् वत्सानां कर्णेषु कृष्णपिपीलिकाः प्रवेशयसि। एवंनाम चेष्टाकरणे वत्सास्ते चकिताः प्रधावेयुः खलु। प्रधाव्य प्रनष्टेषु तेषु, कथं त्वया नवनीतमास्वादयितुं शक्यं स्यात्। तत्त्यज तादृशानि दुश्चेष्टितानि। त्वदीयजन्मतारका श्रोणा ह्यद्य; अतस्त्वया स्नातव्यम्। अस्मत्स्वामिन्! मास्म धावीस्समाहि ॥ ... ... (२)

(गाथा.) पेयूच्चि मुलैयुण्णकण्डु पिन्नैयुम् निल्लादेन्नेञ्जम् *
आयूच्चियरेल्लारुम् कूडि अळैक्कवुम् नान्मुलै तन्देन् *
कायूच्चिन नीरोडु नेल्लि कडारत्तिल्ल पूरित्तु वैत्तेन् *
वायूत्तपुहळ्ळ मणिवण्णा मञ्जनमाड नी वाराय् ॥ ३ ॥

यशस्विन् मणिवर्ण कृष्ण यदा त्वं पूतनास्तन्यमपिवः, तदा तयाऽनुभूतां विपदं साक्षात्कृतवती सांहं 'स्तन्यदायिन्या ममापि तादृशी विपदुदियात्किमु !' इति भीता सती तुभ्यं स्तन्यदानाद्वारिता भवितुमर्हामि; तथापि मनो मम न विरक्तिमश्नुते ते स्तन्यदानात्। किञ्च 'तस्मै स्तन्यं मास्म वितर' इति गोपीभिराक्रुष्टाऽप्यहं हन्त ते स्तन्यमदाम्। तदास्ताम् आमलकीदलेन सह संतापितं स्नानीयं कटाहे सज्जीकृत्य निहितं मया। वत्स स्नातुमायाहि ॥ ... ... ... ... ... (३)

(गाथा.) कञ्जन् पुणर्प्पिनिल् वन्द कडिय शकडमुदैत्तु *
वञ्चकप्पेयमगळ् तुञ्ज वायूमुलै वैत्त पिराने *
मञ्जळुम् शेङ्गळुनीरिन् वाशिकैयुं नारु शान्दुम् *
अञ्जनमुम् कोण्डुवैत्तेन् अळगने नीराड वाराय् ॥ ४ ॥

कंसप्रेरणया समायातं कर्कशं शकटासुरं शिथिलीकृतवन्, विप्रलम्भसक्तचित्तां पूतनां मारयितुं तस्यास्स्तन्यं पीतवान् प्रभो ! हरिद्रां कल्हारस्रजं सुगन्धिचन्दनम् अञ्जनं च सज्जीकृतवती वर्ते। सुन्दरकृष्ण स्नातुमायाहि ॥ ... .... .... ... .... (४)

(गाथा.) अप्पङ्कुलन्द शित्तुण्डि अक्कारम् पालिल् कलन्दु *
शोप्पड नान् शुट्टुवैत्तेन् तिन्नलुरुदियेल् नम्बि *
शेप्पिळमेन्मुलैयार्हळ् शिरुपुरम् पेशिचिरिप्पर् *
शोप्पड नीराडवेण्डुम् शोत्तम्बिरानिङ्गे वाराय् ॥ ५ ॥

कृष्ण ! चारुपयोधरा गोपाङ्गनाः 'मलीमसवपुरयं बालकः' इति त्वां यथा न परिहसेयुस्तथा त्वया स्नातव्यं ननु; त्वदर्थं मया मधुराणि भक्ष्याणि बहूनि सन्ति सज्जीकृतानि; यदि तेषां खादनं कामयसे स्नातुमायाह्यत्र; तव बद्धोऽयमञ्जलिः ॥ .... .... .... ... (५)

(गाथा.) एण्णेय् क्कुडत्तैयुरुट्टि इळप्पिळ्ळै किळ्ळियेळुप्पि *
कण्णैप्पुरट्टि विळित्तु कळकण्डु शेय्युम्बिराने *
उण्णक्कनिहळ् तरुवन् ओलिकडलोद नीर्पोले *
वण्णमळगिय नम्बी मञ्जनमाड नीवाराय् ॥ ६ ॥

अयि सिन्धुसवर्ण कृष्णकिशोर ! तैलभाण्डं त्वमुल्लोलयसि भूतले; स्वपतो बालकान् नखक्षतसृष्ट्या समुद्बोधयसि। पक्ष्मणोर्विपर्यसनेन विभीषिकाश्च वितनोषि। एवंनाम दुश्चेष्टितानि कुर्वन्कुमार ! दद्यां ते स्वादूनि फलानि भोक्तुम्; स्नातुमायाहि वत्स ॥ ... ... ... .... (६)

(गाथा.) करन्दनल् पालुम् तयिरुम् कडैन्दुरिमेल् वैत्तवेण्णेय् *
पिरन्ददुवे मुदलाह पेत्तरियेनेम्बिराने ! *
शिरन्द नल्तायलर्तूत्तुम् एन्बदनाल् पिरर्मुन्ने *
मरन्दुमुरैयाड माट्टेन् मञ्जनमाड नीवाराय् ॥ ७ ॥

शिक्येषु निहितं दधि नवनीतं च कृष्णकिशोर ! तव जन्मतः प्रभृति नैव लभेऽहम् । हन्त माताऽपि वत्से परीवादान् प्रलपतीति लौकिका उपालम्भेरन्निति भिया त्वच्चेष्टितानि नाहं विस्मृत्यापि बहिः प्रकाशयामि । अस्तु तत्; स्नातुमायाहि वत्स ॥ ... ... ... ... (७)

(गाथा.) कन्निनै वालोलै कट्टि कनिहळुदिर वेरिन्दु *
पिन्तोडन्दोंडियोर् पाम्बै पिडित्तुक्कोण्डाट्टिनायूपोलुम् *
निन्तिरत्तेनळेन् नम्बि नीपिरन्द तिरुनन्नाळ् *
नन्नु नी नीराडवेण्डुम् नारणा वोडादे वारायू ॥ ८ ॥

वत्सस्य वाले तालच्छदं निबध्य तं फलेषु प्रक्षिपसि वत्स ! अथ च कालिन्दीतीरं प्रधाव्य कालिय-भुजगं करे गृहीत्वा तच्छिरसि नर्तनं च वितनोषि ; तव चेष्टितानि सर्वाणि नहि विज्ञातुं प्रभवाम्यहम् । विष्णु-पर्यायभूतस्य तव जन्मनक्षत्रं श्रोणा खल्वद्य ; नारायण ! साधु स्नातव्यं त्वया ; धावनं विहाय समायाहि तावत् ।

(गाथा.) पूणित्तोळुविनिल् पुक्कु पुळुदियळैन्द पोन्मेनि *
काणप्पेरिदुमुगप्पन् आकिलुम् कण्डार् पळिप्पर् *
नाणेत्तनैयुमिलादाय् नप्पिन्नै काणिल् शिरिक्कुम् *
माणिक्कमे एन्मणिये मञ्जनमाड नी वारायू ॥ ९ ॥

गोष्ठेषु प्रविश्य पांसुविहारकरणेन धूलिधूसरितं तव दिव्यगात्रं द्रष्टुं मम कुतूहलमेव सत्यमस्ति । तथापि 'कुमारकस्य स्नपनमप्येषा न करोती'ति मां परिवदेयुर्लौकिकाः ; तव प्रेयसी नीला च मलीमसगात्रं त्वां वीक्ष्य विहसेत् । अयि निरपत्रप मणिमाणिक्यसन्निभ कृष्ण ! स्नातुमायाहि ॥ .... ... (९)

(गाथा.) कार्मलिमेनि निरत्तुक्कण्णपिरानै युहन्दु *
वार्मलि कोङ्गै यशोदै मञ्जनमाट्टिय वार्त्तै *
वार्मलितोळ् पुदुवैक्कोन् पट्टर्पिरान् शोन्नपाडल् *
शीर्मलि शेन्दमिळ् वल्लार् तीविनैयादुमिलरे ॥ १० ॥

कालमेघातिशायिसौन्दर्यशालिदिव्यविग्रहं कृष्णकिशोरं कञ्चुकाञ्चितपयोधरा पुरा स्नानार्थं सानन्द-माहूय स्नपयतिस्मेति विषयमधिकृत्य श्रीधन्विनव्यनगराधीशेन भट्टनाथमुनीन्द्रेण कथिता इमा द्राविडगाथा ये कीर्तयन्ति ते अपहतपाप्मानो भवितारः इति फलश्रुत्या समापितमिदं दशकम् ॥ .... (१०)

— एतद्दशकसारांशसंग्राहकश्लोक एषः —

गोष्ठेषु क्रीडनेन प्रचुरतरपरागोपरागं त्वदङ्गं
द्रष्टुं वाञ्छा गरिष्ठा मम तदपि हसेत्प्रेयसी ते तु नीला ।
लोकाश्चोपालभेरन् कथमहमिह तत्सोढुमीशे तदेहि
स्नातुं कृष्णेति माताह्वयदिति कथयन्विष्णुचित्तो गतिर्नः ॥

स्नानार्थं सर्वाण्युपकरणानि सज्जीकृत्य, वत्स स्नातुमागच्छ; गोष्ठेषु क्रीडनेन त्वदीयं वपुरखिलं परागोपहतमवलोक्यते। * सरसिजमनुविद्धं शैवलेनापि रम्यं मलिनमपि हिमांशोः लक्ष्म लक्ष्मीं तनोतीत्युक्तरीत्या गोधूळिधूसरित कोमलदिव्यगात्रं द्रष्टुमुत्कंठा मम महती कामम्; तथापि द्रष्टारस्सर्वे मदीयामश्रद्धां अधिकृत्य विनिन्देयुः, त्वन्मनोरमा नीला च अहह मलीमसगात्रोऽसीति त्वां परिहसेत्; एतादृशपरिहासोपालम्भादेरवकाशमप्रदाय क्षिप्रमायाहि स्नातुमिति सानुनयमुक्तवती यशोदा, तदिदमुवाच भगवान् विष्णुचित्तो मुनिवरः ॥

श्रीभट्टनाथ दिव्यसूरि चरणावेव शरणम्।

---

॥ श्रीरस्तु ॥

## श्रीभट्टनाथसूक्ते द्वितीयशतके पञ्चमं दशकम्

# ॥ पिन्नैमणाळनै ॥

अवतारिका—श्रीकृष्णस्य स्नानोत्सवनिर्वर्तनमधस्तनदशके निबद्धम्। अथ चिकुरप्रकरपरिष्करणानुभवः निबध्यते अस्मिन् दशके। कृष्णकिशोरस्य चिकुरप्रकरपरिष्करणं चिकीर्षितमासीद्यशोदायाः। तदर्थमाहूतः कृष्णो रथ्याक्रीडासु कुतूहलभूम्ना धावने समृद्धाभिरुचिस्सन् मातुरमिमुखो नासीत्। लोके बालकानामलंकरणादिकं चिकीर्षन्त्यो मातरः काकाह्वाने प्रवर्तन्ते। तदात्वे बालाश्च क्रीडाचैयग्र्यं विहाय विस्मृत्यत्रा काकागमने उत्तानदत्ताननाः स्तब्धा इवावतिष्ठन्ते। तादृशे समये स्वचिकीर्षितं कार्यं कुर्वन्ति मातरः कुमारकेषु—इत्यनुभवसाक्षिकम्। एवमेवात्र यशोदापि कृतवतीति तत्कृतकाकाह्वनप्रणाल्या दशकमिदं निबध्यते। हेवायस! अत्रागत्य केशपरिष्करणं कलय इति प्रतिगाथं प्रोच्यतेऽत्र। किमहो वायस एव स्वयं करोति केशप्रसाधनमिति शंका जायेत। वस्तुस्थितिर्न तथा। वायसे आहूते सति बालानामान्यपर्यं जायते। तदात्वे तत्केशप्रसाधनं सुकरं भवति मातुरित्येव वस्तुस्थितिः। एवं च वायसाह्वानेन कृष्णकिशोरस्य आन्यपर्यमुत्पाद्य तत्केशप्रसाधनं कर्तुकामाया यशोदायाः अनुकारोऽस्मिन् दशके भवतीत्युक्तं भवति ॥

(गाथा.)पिन्नैमणाळनै पेरिल्किडन्दानै * मुन्नैयमरर्मुदल्व तनिवित्तिनै *
एन्नैयुमेङ्गळ् कुडिमुळुदाट्कोण्ड*मन्ननै वन्दु कुळल्वारायक्काकाय् मादवन्तन्कुळल्वारायक्काकाय् ॥

हे वायस! नीलादेवीवल्लभं तिरुप्पेर् नगराख्यदिव्यदेशे कृतशयनं नित्यसूरिनिर्वाहकं जगन्निदानभूतं मत्कुलसमुज्जीवनसमर्थंच कृष्णं समुपसृत्य कुरु तावदस्य कुन्तलपरिष्करणम। माधवस्यास्य कुन्तलप्रसाधनं कुरु वायस। (वायसमुद्दिश्य एवं कथनाभिप्रायः अवतारिकायां विवृतो द्रष्टव्यः।) .... (१)

(गाथा.) पेयिन्मुलैयुण्ड पिळ्ळैयिवन्मुन्नम् *
मायचकडुम् मरुदुमिरुत्तवन् *
कायामलर्वण्णन्कण्णन् करुङ्गुळल् *
तूय्दाह वन्दु कुळल्वारायक्काक्काय् तूमणिवण्णन् कुळल्वा रायक्काक्काय् ॥ २ ॥

हे वायस! सोऽयं कुमारकः पुरा पूतनास्तन्यपानं कृतवान्। शकटासुरशैथिल्यं यमलार्जुनभञ्जनं च कृतवान्। अतसीगुच्छसच्छायस्य अस्य कृष्णस्य केशपाशान् सुष्ठु परिष्कुरु। सुचारुमणिवर्णस्यास्य केशपरिष्करणं कुरुष्व वलिभोजन ॥ ... ... ... ... ... (२)

(गाथा.) तिण्णक्कलत्तिल् तिरैयुरिमेल्वैत्त *
वेण्णेय् विळुङ्गि विरैयवुरङ्गिडुम् *
अण्णलमरर्पेरुमानै यायर्तम् *
कण्णैवन्दु कुळल्वारायक्काक्काय् कार्मुहिल्वण्णन् कुळल्वारायक्काक्काय् ॥३॥

अयि काक! शिक्योपरि सुदृढपात्रविन्यस्तं नवनीतमास्वाद्य सपदि निद्रामुद्रामातन्वतोऽस्य प्रमोदैवाधिदेवस्य गोपालकृष्णस्य चिकुरप्रकरप्रसाधनं कलय। कालमेघनिभस्यास्य केशपाशालंकारं कलय वायस॥ (३)

(गाथा.) पळ्ळत्तिल् मेयुम् परवैयुरुक्कोण्डु *
कळ्ळवसुरन् वरुवानैत्तान्कण्डु *
पुळ्ळिदुवेन्नु पोदुक्को वाय् कीण्डिट्ट *
पिळ्ळैयै वन्दु कुळल्वारायक्काक्काय् पेय्मुलैयुण्डान् कुळल्वारायक्काक्काय् ॥ ४ ॥

जलप्रान्ते अशनगवेषणतत्परपक्षिभावं प्राप्य द्रोहबुद्ध्या समुपस्थितं बकासुरमुद्वीक्ष्य अयं वधार्हः पक्षीति विभाव्य क्षिप्रं तदास्यं विदारितवतो मम किशोरस्य चिकुरप्रकरपरिष्क्रियां कुरु काक! पूतनास्तन्यपायिनोऽस्य केशप्रसाधनं कलय वायस! .... .... .... (४)

(गाथा.) कत्तिनम्मेय्त्तु कनिक्कोरु कन्निनै *
पत्तियेरिन्द परमन् तिरुमुडि *
उत्तन पेशि नीयोडित्तिरियादे *
अत्तैक्कुम् वन्दु कुळल्वारायक्काक्काय् आलियान्तन् कुळल्वारायक्काक्काय् ॥५॥

हे वायस! त्वं स्वजात्युचितानि रटितानि कृत्वा मास्म धावः। वत्सवृन्दसंचारणचतुरस्य, वत्सासुरेण कपित्थासुरविमर्दनविचक्षणस्य च परमपुरुषस्य कचभरान् नित्यं परिष्कुरु, चक्रपाणेरस्य कुन्तलप्रसाधनं कुरु काक॥

(गाथा.) किळक्किलक्कुडिमन्नर् केडिलादारै *
अळिप्पान् निनैन्दिट्टव्वाळियदनाल् *
विळिक्कुमळविले वेररुत्तानै *
कुळर्क्कणियाह कुळल्वारायक्काक्काय् गोविन्दन्तन् कुळल्वारायक्काक्काय् ॥ ६ ॥

अनपायंमन्यानां प्राग्ज्योतिषपुरवासिनरकासुरप्रभृतीनां विनाशनं संकल्प्य निमेषमात्रे श्रीहेतिराजेन समूलोन्मूलनं कृतवतो भगवतोऽस्य गोविन्दस्य चिकुरप्रसाधनं कुरु वायस! ॥ .... (६)

(गाथा.) पिण्डत्तिरळैयुम् पेय्क्किट्ट नीर्चोरुम् *
उण्डर्कु वेण्डि नीयोडित्तिरियादे *
अण्डत्तमरर्पेरुमान् अळहमर् *
वण्डोत्तिरुण्ड कुळल्वारायक्काक्काय् माधवन्तन् कुळल्वारायक्काक्काय् ॥ ७ ॥

पितॄनुद्दिश्य दीयमानं पिण्डसंचयं, पिशाचेभ्यो दीयमानं सतोयमन्नं च भोक्तुं वाञ्छया वायस! मास्म कार्षीः पलायनपर्यटने। देवाधिदेवस्य सुन्दरभृङ्गोपमेयकुन्तलावलीः प्रसाधय। अत्यद्भुतचेष्टितस्य कृष्णकिशोरस्य कचभरान् परिष्कुरु काक! ॥ .... .... .... (७)

(गाथा.) उन्दियेळुन्द उरुवमलर्तन्निल् *
शन्दचदुमुहन्तन्नैप्पडैत्तवन् *
कोन्दक्कुळलै कुरन्दु पुळियट्टि *
तन्दत्तिन् शीप्पाल् कुळल्वारायक्काक्काय् दामोदरन्तन्कुळल्वारायक्काक्काय् ॥ ८ ॥

हे वायस! स्वनाभीनटसमुत्थितसुचारुकमलकुसुमे चतुर्मुखं पुरा सृष्टवतोऽस्य कृष्णकिशोरस्य सुशोभनं कुन्तलं दन्तमयकङ्कतेन सुष्ठु परिष्कुरु। दामोदरस्यास्य केशप्रसाधनं कलय वायस! ॥ .... (८)

(गाथा.) मन्नन्तन्देविमार् कण्डु महिळ्वेय्द *
मुन्निव्वुलहिनै मुत्तुमळन्दवन् *
पोन्निन्मुडियिनै पूवणैमेल्वैत्त *
पिन्नेयिरुन्दु कुळल्वारायक्काक्काय् पेरायिरत्तान्कुळल्वारायक्काक्काय् ॥ ९ ॥

पुरा महाबलियज्ञवाटप्रवेशसमये तस्य दाराणां मानसं निजवपुस्सुषमाभूम्ना प्रसभमपहृत्य जगदिदमशेषं स्वायत्तीकृतवतोऽस्य कुमारस्य सुचारु मस्तकं पुष्पमयतल्पे निधाय पश्चात् स्थित्वा कुन्तलपरिष्करणं कलय वायस!। सहस्रनाम्नोऽस्य कृष्णस्य केशप्रसाधनं कुरु काक ॥ .... .... (९)

(गाथा.) कण्डार्पळियामे अक्काक्काय् * कार्वण्णन्, वण्डार्कुळल्वार वावेन्रयूचिशोल् *
विण्डोय् मदिल् विल्लिपुत्तूर्क्कोन्पट्टन् शोल् * कोण्डाडिप्पाड क्कुरुहा विनैतामे ॥ १० ॥

हे काक! कालमेघनिभस्यास्य कृष्णस्य भृङ्गनिभालकभरं सर्वजनश्लाघ्यं यथातथा परिष्कर्तुं समायाहि- इति पुरा यशोदया कथितं तद्भावभावनया प्रावोचदभ्रंलिहप्राकाराञ्चितधन्विनव्यनगराधिनाथो विष्णुचित्तयोगी। ता इमा दिव्यगाथास्सश्लाघं कीर्तयतां सतां कर्मलेपो न भविता—इति फलश्रुत्या समापितमिदं दशकम् ॥ (१०)

— एतद्दशकसारांशसंग्राहकश्लोक एषः —

स्नातं कृत्वाऽथ कृष्णं चिकुरभरपरिष्कारकृत्ये यशोदा
सक्ता, लोके तदर्थं बलिभुजमखिला आह्वयन्तीति दृष्ट्वा।
कृत्वाऽमुष्यान्यपर्यं सुकरतरमिदं कृत्यमित्याशयाना
काकं प्रेम्णाऽऽजुहावेत्युदितवति मे विष्णुचित्तेऽस्तु भक्तिः ॥

कृष्णं स्नातं कृतवत्या यशोदाया अथ तत्केशपाशप्रसाधने रुचिरुदियाय। तदर्थमाहूतोऽसौ नन्द-नन्दनो वीथीविहरणेषु समिन्धानकुतूहलस्सन् मातृकांक्षितपरिपूरणावकाशमप्रयच्छन्निवासीत्। लोके बालकानां प्रसाधनादिकर्म कर्तुं कामयमाना मातरस्तेषामन्यपरतां संपाद्य स्वसमीहितं निर्वर्तयितुं काकाह्वाने प्रवर्तन्त इति प्रात्यक्षिकमेतत्। तथा यशोदाऽपि कृतवतीति तत्कृतकाकाह्वानकथनसरण्या निबद्धमिदं दशकं तद्भावनामधिजग्मुषा विष्णुचित्तमुनीन्द्रेण। तस्मिन्नस्तु मे भक्तिः॥ .... .... .... *

इति श्रीभट्टनाथसूक्ते द्वितीयशतके पञ्चमं दशकमवसितम्॥
श्रीभट्टनाथदिव्यसूरिदिव्यचरणावेव शरणम्।

## अथ षष्ठं दशकम्

# ॥ वेलिक्कोल्वेट्टि ॥

अवतारिका—कृष्णकिशोरस्य केशप्रसाधनानन्तरं पुष्पधारणं कारयितुमुत्कण्ठिताऽऽसीज्जननी। तदात्वे कृष्णस्तु गोचारणार्थं वनं व्रजद्भिर्बालकैस्साकं स्वयमपि जिगमिषन् "वत्सचारणानुकूलं दण्डं देहि मातः!" इति निर्बबन्ध। पुष्पधारणशोभां दिदृक्षमाणा जननी तु तत्कांक्षानुरोधेन दण्डमप्रयच्छन्ती लौकिकरीत्या विप्रलम्भे प्रावर्तत। 'बालकृष्ण! तव दण्डस्तु वायसेन कुत्रापि नीत इव; कथमहं सद्य एव तं दातुं प्रभवामि? सहस्व मनाग्विलम्बम्। दण्डमानेतुं काकमादिशामि' इत्यभिधाय काकमाह्वयति। तदिदं निबध्यते दशकेऽस्मिन्। यशोदातादात्म्येन तदिदमनुभवति विष्णुचित्तसूरिः॥

(गाथा.) वेलिक्कोल्वेट्टि विळैयाडु विल्लेत्ति *
तालिक्कोळुन्दै तडङ्कळुत्तिल्पूण्डु *
पीलित्तळैयै पिणैत्तुप्पिरहिट्टु *
कालिप्पिन्पोवाक्कोर् कोल्कोण्डुवा कडल्निरवण्णक्कोर् कोल्कोण्डुवा॥ १॥

हे वायस! उपवनप्रान्तेष्वभिवर्धमानं दण्डं छुरिकया विलूय तमेव लीलाचापत्वेन परिगृह्य तस्मिन् ज्यारोपणं च कृत्वा वन्याभरणविशेषं कण्ठे भृत्वा मयूरपिञ्छमालाः पृष्ठतले निबध्य गास्संचारयितुं जिगमिषतोऽस्य वत्सस्य कृते गोयष्टिमानय। सागरसवर्णस्यास्य कुमारस्य कृते गोयष्टिमानय॥

दशकेऽस्मिन् वायससंबोधनं यद्यपि प्रतिगाथं च न निवेशितम्, तथाऽपि चरमगाथायां निवेशितं तदिति ध्येयम्। सप्तमगाथायास्संनिवेशश्च वायससंबोधनं सुदृढीकरोति॥ .... .... (१)

(गाथा.) कोङ्गुम् कुडन्दैयुम् कोट्टियूरुम् पेरुम् *
एङ्गुम् तिरिन्दु विळैयाडुमेन्महन् *
शङ्गम्पिडिक्कुम् तडक्कैक्कुत्तक्क *
नल्लङ्गुडैयदोर् कोल्कोण्डुवा अरक्कु वळित्तदोर्कोल् कोण्डुवा॥ २॥

सुगन्धिकुम्भघोणक्षेत्रे गोष्ठीपुरे तिरुप्पेर्नगराख्यमहापुरे अन्यत्र च पर्यटनेन विहरतोऽस्य मत्तनूजस्य शंखालंकृतपाण्यनुरूपामभिरूपां गोयष्टिमानय। लाक्षारसालंकृतां गोयष्टिमानय वायस!॥ .... (२)

(गाथा) करुत्तिट्टेदिर्निन्न कञ्जनै क्कोन्नान् *
पोरुत्तिट्टेदिर्वन्द पुळ्ळिन्वाय् कीण्डान् *
नेरित्त कुळल्हळै नीङ्ग मुन्नोडि *
शिरुक्कन्नु मेय्प्पाक्कोर् कोल्कोण्डुवा तेवपिरानुक्कोर् कोल्कोण्डुवा ॥ ३ ॥

क्रुद्धं वैरिणं कंसं व्यापादितवतः, प्रतिपक्षिभावेन समागतं बकासुरं शनैस्संहृतवतः, विस्रंसिचिकुरवन्धं यथातथा प्रधाव्य वत्सान् चारयतश्चास्य गोविन्दस्य गोयष्टिमानय वायस ! देवाधिदेवस्यास्य गोयष्टिमानय ॥ ३॥

(गाथा.) ओन्ने युरैप्पान् ओरुशोल्ले शोल्लुवान् *
तुन्नुमुडियान् तुरियोदनन्पक्कल् *
शेन्नङ्गुप्पारदम् कैयेरिन्दानुक्कु *
कन्नुहळ् मेय्प्पदोर्कोल्कोण्डुवा कडल्निरवण्णर्कोर्कोल्कोण्डुवा ॥ ४ ॥

* मित्रभावेन संप्राप्तं न त्यजेयं कथंचनेति, * अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं ममेति च वाचमेव सुदृढं व्याहरतः, साम्राज्योत्सुकदुर्योधनसकाशं गत्वा भारतयुद्धकर्तव्यतामेव निर्धारितवतश्चास्य मुकुन्दस्य वत्सचारणोपयुक्तयष्टिमानय । सिन्धुसवर्णस्यास्य गोयष्टिमानय वायस ! ॥ .... .... (४)

(गाथा). शीरोन्नु तूदाय् तुरियोदनन्पक्कल् *
ऊरोन्नुवेण्डि प्पेरादवुरोडत्ताल् *
पारोन्निप्पारदम् कैशेय्दु पार्त्तर्क्कु *
तेरोन्नैयून्दर्क्कोर्कोल्कोण्डुवा देवपिरानुक्कोर्कोल्कोण्डुवा ॥ ५ ॥

दुर्योधनसविधे पाण्डवदूतत्वेन समुपेत्य पाण्डवानां कृते राज्यमेकमपि वा दीयतामित्यभ्यर्थ्य तस्याप्यलाभेन जातया रुषा भारतसमरं संकल्प्य पार्थसारथित्वेन स्थितस्य केशवस्य गोयष्टिमानय वायस ! देवाधिदेवस्यास्य गोयष्टिमानय ॥ .... .... .... .... (५)

(गाथा.) आलत्तिलैयान् अरविनणैमेलान् *
नीलक्कडलुळ् नेडुङ्कालम् कण्वळर्न्दान् *
बालप्पिरायत्ते पार्त्तर्क्करुळ्शेय्द *
कोलप्पिरानुक्कोर्कोल्कोण्डुवा कुडन्दैक्किडन्दार्क्कोर्कोल्कोण्डुवा ॥ ६ ॥

वटदलशायिनो भोगिभोगशयनीयशायिनः सुचिरं नीरधिमधिशयानस्य, बालभाव एव प्रकाशितपाण्डवपक्षपातस्य चास्य सुन्दरकृष्णस्य गोयष्टिमानय वायस ! । श्रीकुम्भघोणक्षेत्रशायिनोऽस्य कुमारस्य गोयष्टिमानय ॥

(गाथा.) पोत्तिहल्र् शित्तिरकूडप्पोरुप्पिनिल् *
उत्तवडिविल् ओरुकण्णुम्कोण्ड * अ-
क्कत्तैक्कुललन् कडियन् विरैन्दुन्नै *
मत्तैक्कण्कोल्कामे कोल्कोण्डुवा मणिवण्णनम्बिक्कोर्कोल्कोण्डुवा ॥ ७ ॥

हेवायस! पुरा सुभगे चित्रकूटशिखरिणि वैदेह्या दिव्यविग्रहे अपचारितदृष्टिं निहितवतस्तत्र नयनमेकं हृतवान् भगवान् हन्त सुदारुणः; स यथा तव नापहन्यादपरमप्यक्षि, तथा त्वमानय गोयष्टिमस्य मणिनिभवपुषः पूर्णस्य कृष्णस्य ॥ .... .... .... .... .... (७)

(गाथा.) मिन्निडैचीदैपोरुट्टा इलङ्कैयर् * मन्नन्मणिमुडि पत्तुमुडन्वीळ *
तन्निहरोन्निल्ला शिलैकाल्वळैत्तिट्ट * मिन्नुमुडियक्कोंकोंल्कोण्डुवा वेलैयडैत्ताक्कोंकोंल्कोण्डुवा ॥

विद्युत्सन्निभवलग्नशालिन्या वैदेह्याः कृते लङ्काधिनाथशीर्षदशकं विहन्तुं स्वकीयमप्रतिमं शार्ङ्गमाकृष्टवतो मणिमयमकुटाञ्चितस्यास्य कृष्णस्य गोयष्टिमानय वायस! । अब्धौ सेतुं कृतवतोऽस्य कृष्णस्य गोयष्टिमानय ॥ (८)

(गाथा.) तेन्निलङ्गै मन्नन् शिरम्तोळ् तुणिशेय्दु * मिन्निलङ्गुपूण् विवीडणनम्बिक्कु *
एन्निलङ्गु नामत्तळवुम् अरशेन्न * मिन्निलङ्गारक्कोंल्कोण्डुवा वेङ्गडवाणक्कोंकोंल्कोण्डुवा ॥९॥

लङ्केश्वरस्य शिरांसि भुजांश्च विलूय राजाभरणभूषिताय महात्मने विभीषणाय शाश्वतिकमाधिराज्यमनुगृहीतवतः सर्वालङ्कारालंकृतवपुषोऽस्य कृष्णस्य गोयष्टिमानय वायस! श्रीवेङ्कटाद्रिनाथस्यास्य गोयष्टिमानय ॥ (९)

(गाथा.) अक्काक्कायू नम्बिक्कु कोल्कोण्डुवावेन्नु * मिक्काळैरत्त शोल्ल विल्लिपुत्तूर्पट्टन् *
ओक्कवुरैत्त तमिळ् पत्तुम् वल्लवर् * मक्कळैप्पेत्तु महिळ्वरिव्वैयत्ते ॥ १० ॥

हेवायस! कृष्णस्य कृते गोयष्टिमानयेति पुरा यशोदया कथितं यत्तदाह भगवान् धन्विनव्यपुराधिनाथो भट्टनाथसूरिस्तद्भावभावनया । ता इमा गाथा ये कीर्तयन्ति ते ससंताना इह भुवि संप्रहृष्येयुरिति फलश्रुत्या समापितमिदं दशकम् ॥ .... .... .... .... (१०)

— एतद्दशकसारांशसंग्राहकश्लोक एषः —

कृष्णं गोपालजन्मोचितकृतिकुतुकाद्गोततेश्चारणार्थं
कान्तारं यातुकामं छलवचनबलाद्रोद्धुकामा यशोदा ।
गोसंचारार्हदण्डं मम तनयवरस्याहराद्याशु काके-
त्यूचे शश्वत्तदेतद्रसघनवचनैरूचिवान् सूरिरीड्यः ॥

कृष्णस्य पुष्पधारणं कारयित्वा तच्छोभातिशयं द्रष्टुमुत्कण्ठितायां सत्यां यशोदायां कृष्णकुमारको गास्संचारयितुं वनं गच्छता डिम्भबृन्देन सह स्वयमपि गन्तुकामो वत्सचारणोपयुक्तं दण्डं देहि जननीति मातरं निरवध्नात् । तदा सा छलवचनैस्तस्य वनगमनं निरोद्धुकामा सती—दण्डो वायसेनापहृत इति, काकसकाशाद्दण्डं गृहीत्वा दास्यामीति च प्रोच्य काकमाजुहाव दण्डानयनार्थम् । तदिदं दशकेऽस्मिन्निबद्धवान् विष्णुचित्तसूरिरस्माकं स्तुतिगोचरः ॥ .... .... .... .... .... *

इति भट्टनाथसूक्ते द्वितीयशतके षष्ठं दशकमवसितम् ॥

श्रीभट्टनाथदिव्यसूरिदिव्यचरणावेव शरणम् ॥

———

॥ श्रीरस्तु ॥

## अथ सप्तमं दशकम्

# ॥ आनिरैमेय्क ॥

अवतारिका :—अधस्तनदशककृतेन विप्रलम्भोपायेन निरुद्धवनप्रयाणौत्सुक्यं कृष्णकिशोरं नानापुष्पभूषितशिरस्कं कृत्वा प्रेक्षितुं कामयमाना यशोदा चाम्पेय मल्लिका दमनक सुरपुन्नाग मागधी मालतीप्रभृतीनि सद्योविकसितानि कुसुमानि समाहृत्य 'वत्स ! एतानि पुष्पाणि धारयितुमायाहि' इत्ययाचत । तदिदं निबध्यते दशकेऽस्मिन् । [इदं दशकं सर्वेष्वपि भगवदालयेषु नित्यं सायं पुष्पालङ्कारसमर्पणसमये भक्तवरैर्नित्यानुसन्धानगोष्ठीनिविष्टैरनुसन्धीयत इति दशानामपि गाथानां प्रत्येकशः श्लोकविवर्तः कृत इह प्रकाश्यते ॥ ].

(गाथा.) आनिरै मेय्क्क नीपोदि अरुमरुन्दावदरियाय् * कानहमेल्लाम् तिरिन्दु उन्करियतिरुमेनिवाड*
पानैयिल् पालैप्परुहिप्पत्तादारेल्लाम् शिरिप्प * तेनिलिनियपिराने ! शेण्पहप्पूच्चूट्टवाराय् ॥

श्लो॥ गास्संचारयितुं प्रयासि, नहि वेत्स्यात्मप्रभावं हरे !
कान्तारे बहु संचरन् बत ! वपुर्ग्लानिं समासीदसि ।
भाण्डे चूपसि दुग्धमित्यहह भो मित्रेतरैर्हस्यसे
पीयूषादपि भोग्य ! चम्पकसुमं वोढुं समागच्छतात् ॥ १ ॥

हे कृष्ण ! निजदिव्यविग्रहसौकुमार्यमीषदप्यजानन् सन् स्वयमेव हन्त गाश्चारयितुं वनं व्रजसि । मुहुःपर्यटनेन परमशोभनस्य वपुषो बत ग्लानिं विन्दसि ; गृह एव तिष्ठता त्वया तु भाण्डे दुग्धं चूष्यत इति परिहसन्त्यमित्रजनाः, परिहसन्तु ननु कामं ते। त्वदीयं सर्वमपि चेष्टितमस्मादृशां परमभोग्यं ननु । अमृतादप्यधिकभोग्यताशालिन् कृष्ण ! चाम्पेयकुसुममर्पयामि ते शिरसि, तदिदं वोढुमायाहि भोः ॥ .... (१)

(गाथा.) करुवुडै मेहङ्गल् कण्डालुन्नैक्कण्डालोक्कुम् कण्कल् * उरुवुडैयाय् उलहेळुमुण्डाह वन्दु पिरन्दाय् *
तिरुवुडैयाळ् मणवाळा तिरुवरङ्गत्ते किडन्दाय् * मरुविमणम् कमळ्किन्न मल्लिकैप्पूच्चूट्टवाराय् ॥

श्लो॥ जीमूतो जलगर्भनिर्भर इवानन्दं दृशोर्वर्धयन्
सौन्दर्याश्रित ! सर्वलोकविततीरक्षार्थमत्रोदित ।
लक्ष्मीनायक ! रङ्गनाम्नि निलये शेषे शयान प्रभो
सौगन्ध्याधिकमल्लिकास्रजमिमां वोढुं समागच्छ भोः ॥ २ ॥

हे कृष्ण ! वर्षुकवलाहकस्य विलोकने यावानानन्दो जायते, सत्यं तावानानन्दो जायते तवावलोकने । एवं नाम सुन्दर सर्वजगद्रक्षणार्थमत्राविर्भूत ! श्रीरङ्गे भोगिशयनीगशायिन् ! सौरभाढ्यां मल्लीमालामिमां धारयितुमायाहि ॥ .... .... .... .... .... (२)

(गाथा.) मच्चोडुमाळिहैयेरि मादर्हळ् तम्मिडम् पुक्कु * कच्चोडु पट्टैक्किळित्तु काम्बुतुहिलवै कीरि *
निच्चलुम् तीमैहळ् शेय्वाय् नीळ्तिरुवेङ्गडत्तेन्दाय् * पच्चैत्तमनहत्तोडु पादिरिप्पूच्चूट्टवाराय् ॥

श्लो ।। आरुह्य प्रसभं महत्तरगृहप्रासाददेशादिषु
प्राप्य स्त्रीजनतान्तिकम् शिथिलयन् तच्चोलचेलादिकम् ।
नित्यं दुश्चरितोत्सुक ! क्षितिधरे शेषाभिधे सन् प्रभो !
वोढुं सद्मनं च पाटलसुमं स्वामिन् समागच्छ भोः ।। ३ ।।

उत्तुङ्गसौधादिस्थलेषु यत्रयत्र वनिता निवसन्ति तत्रतत्र समीपतो गत्वा तासां कञ्चुकवस्त्रादिकं शिथिलीकरोषि । एवंविधेषु दुश्चेष्टितेषु नित्यमुत्कण्ठित ! शेषाद्रिशे वरविभो ! दमनकं पाटलप्रसूनं च धारयितुमायाहि ।।

(गाथा.) तेरुविन्कणिन्निळवाय्चिमार्हैळैत्तीमै शेय्यादे * मरुवुम् दमनकमुम् शीमर्लैमणङ्कमळ्किन्न *
पुरुवम् करुङ्कुलल्नेत्तिप्पोलिन्द मुहिलूक्कन्नुपोले * उरुवमळहिय नम्बि उहन्दिवैशूड्ड नीवाराय्।।

श्लो ।। स्थित्वा वीथिषु वालगोपललनागोष्ठीषु दुश्चेष्टितं
स्वैरं मा कुरु नीलकेशललितभ्रूरम्यफालोज्ज्वल ।
भास्वन्मेघशिशूपमेय सुषमासंपूर्ण कृष्णप्रभो
वोढुं सौरभसंभृतं दमनकं श्रीपल्लवं चाव्रज ।। ४ ।।

हे सर्वाङ्गसुन्दर, मेघडिम्भनिभ, कृष्णकिशोर ! रथ्यासु वालिकाभिस्सह स्थित्वा स्वच्छन्दं दुरितानि मास्मकार्षीः, दमनकं मरुक्कोळुन्दुनामकं श्रीपल्लवञ्च धारयितुमायाहि ।। .... .... (४)

(गाथा.) पुळ्ळिनैवाय् पिळन्दिट्टाय् पोरुकरियिन् कोम्बोशित्ताय् *
कळ्ळवरक्कियैमूक्कोडु कावलनैत्तलैकोण्डाय् *
अळ्ळिनीवेण्णेय् विळुङ्ग अञ्जादडियेनडित्तेन् *
तेळ्ळियनीरिलेन्लुन्द शेङ्कळुनीशूड्डवाराय् ।। ५ ।।

श्लो ।। वक्त्रं दैत्यवकस्य दीर्णमतनोः दन्तं गजस्याहरः
राक्षस्याः किल नासिकां व्युदसृजः रक्षःपतिं चावधीः ।
नाथ ! त्वां नवनीतजग्धिसमये निर्भीरहं प्राहरं
तच्चास्तां विमलाम्बुनिर्गतमिदं कह्लारमुत्तंसय ।। ५ ।।

हे कृष्ण भगवन् ! तव एकैकमपि चेष्टितमतिमनोहरं भयानकं च । वकासुरस्य वदनं विदारयामासिथ । कंसप्रेरितस्य कुवलयापीडस्य करिणो दन्तं जहर्थ । शूर्पणखाया अङ्गभङ्गं चकर्थ । लंकेशं रावणं व्यापादयामासिथ । ईदृशस्त्वं नवनीतं मुषित्वा प्राश्ना इति निर्भयमहं त्वां प्रहृतवती । तत्तु मनसि मास्म कलुयः । सौगन्धिकमधुना धारयितुमायाहि ।। .... .... .... .... (५)

(गाथा.) एरुदुहळोडु पोरुदि एदुमुलोगाय् काणूनम्बि *
करुदियतीमैहळ् शेय्दु कञ्जनैक्काल्कोडु पाय्न्दाय् *
तेरुविन्कण् तीमैहळ् शेय्दु शिक्कन मल्लर्हळोडु *
पोरुदुवरुहिन्र पोन्ने पुन्नैप्पूशूड्डवाराय् ।। ६ ।।

युद्धं दारुणमाततन्थ वृषभैः गात्रे विरक्तो निजे
स्वच्छन्दं च विचेष्टसे चरणतः कंसं प्रहृत्याहरः।
रथ्यायां कटुचेष्टितानि कलयन् मल्लैस्समं युद्धम-
प्याधायागत! हेमरम्य! शिरसा पुंनागपुष्पं वह ॥ ६ ॥

हे कृष्ण! नीळादेवीपाणिग्रहणार्थं सप्तभिरुक्षभिस्सह भयानकं युद्धमकरोः। स्वकीये दिव्यवपुषि मनागपि ते रिरक्षिषा नास्त्येव। यथा यथा चेष्टाः कर्तुं कामयसे तथातथा स्वैरं कलयसि। पादघातेन कंसमभ्य-वधीः। मधुरावीथ्यां रजकाभिभवप्रभृतीनि कटुचेष्टितानि कृत्वा मल्लैस्साकं समरमपि निरवर्तयः। अयि कनकवत् स्पृहणीयदिव्यविग्रहाभिराम! पुन्नागपुष्पमवतंसयितुमायाहि ॥ .... .... (६)

(गाथा.) कुडङ्गळेडुत्तेरविट्टु क्कूत्ताडवल्ल वेंकोवे * मडङ्गोल्मदिमुहत्तारै माल्शेय्यवल्लवेन्मैन्दा *
इडन्दिट्टिरणियन्नेञ्जै यिरुपिळवाह मुन्कीण्डाय् *कुडन्दैक्किडन्द वेङ्कोवे कुरुक्कत्तिप्पूचूट्टवाराय् ॥

श्लो॥ कुम्भानूर्ध्वमुपक्षिपन् पटुतमं नृत्तं प्रकुर्वन् प्रभो!
गोपीश्चन्द्रसमानकान्तिवदना व्यामोहयन् बालक।
वक्षो दैत्यपतेर्हिरण्यकशिपोः द्वेधा विभिन्दन् प्रभो
वोढुं मूर्धनि कुम्भघोणशयनायहि स्रजं मागधीम् ॥ ७ ॥

सत्यं गोपालजातीय एवायं कृष्ण इति परप्रत्यायनार्थमसकृत्कुम्भनर्तनं चकारेति प्रसिद्धिः। कुम्भनर्तनं नाम—भुजयोरुभयोरपि घटबृन्दं निधाय शिरसि च तथा विन्यस्य हस्ताभ्यां घटद्वयं परिगृह्य क्रियमाणं ताण्डवम्। एतादृशे नर्तने भुजगतानां शीर्षगतानां च घटानां मनागपि चलनाभाव एव सामर्थ्यविशेषः। एवंविधनर्तनप्रावीण्य-मिह प्रथमचरणे प्रस्तूयते। हे घटनृत्तपटो! गोपीजनव्यामोहन! हिरण्यासुरवक्षःकवाटविभेदनविचक्षण! श्रीकुम्भघोणक्षेत्रमधिशयान! मागधीं स्रजमवतंसयितुमायाहि ॥ .... .... (७)

(गाथा.) शीमालिकनवनोडु तोळमैकोळ्ळवुम् वल्लाय् * शामारवनै नीयेण्णिचक्करत्ताल् तलैकोण्डाय् *
अमाररियुम् पिराने अणियरङ्गत्ते किडन्दाय् * एमात्तमेन्नैत्तविर्त्ताय् इरुवाट्चिप्पू च्चूट्टवाराय् ॥

श्लो॥ मैत्रीं मालिकनामकेन कलयन् दृष्ट्वाऽथ तद्धूर्ततां
तं हन्तव्यमवेत्य तस्यतु शिरो हेतीश्वरेणाच्छिनः।
कार्याकार्यविशेषवेदनपटो श्रीरङ्गशायिन् प्रभो।
मद्दुःखापह मालतीस्रजमिमां वोढुं समागच्छ भोः ॥ ८ ॥

गाथायामस्यां मालतीकुसुमधारणार्थमाहूयमानः कृष्णो भगवान् कयाचिदपूर्वकथया स्तूयते। मालिक-नामा कोऽपि प्रियमित्रमणिः कृष्णस्यासीत्। सचायं कृष्णेन स्निग्धेन भूयसीरस्त्रविद्याश्शिक्षितः क्रमेण च महताऽव-लेपेन कवलितात्मा सर्वानपि भागवतान् भृशमधिक्षिपन् अभिभवंश्चासीत्। बहुमुखं प्रयस्यन्नपि कृष्णो दुर्वृत्तमिद मदसीयमपाकर्तुमशक्नुवन् तस्य क्रमेण चरमोपायमवलम्बन् समयप्रतीक्षी समवर्तत। अत्रान्तरे कदाचिदयं

मालिकः कृष्णान्तिकमुपगम्य 'सखे सर्वा अप्यस्त्रविद्याः शिक्षितोऽहं भवता नहि खलु चक्रप्रयोगविद्यां शिक्षितोऽस्म्येतावता कालेन; अतश्चाद्य तच्छिक्षणमारचयतु भवान्' इत्याचकांक्ष। दुस्साधमिदं कृत्यं भवत इति शतशः कृष्णेन बोधितोऽपि मालिकोऽयमनवबुध्यमानः किमस्ति ममापि दुस्साधमित्यवलिप्यमानः पुनः पुनः निरबध्नात्। अथ स्वसमीहितनिर्वर्तनाय समुचितस्समयस्समुपनत इति संतुष्यन् वासुदेवः 'पश्य मालिक! विद्यायाः अस्याः प्रयासगरिमाणम्' इत्याचक्षाणः सुदर्शनं हेतिराजं स्वकीयम् आकाशाभिमुखमूर्ध्वं प्रेरयन्, अथ ससंभ्रम मधः पतनोन्मुखं तमायुधवरेण्यं स्वकीयहस्ताङ्गुल्यैकया अवलीलया धारयामास। तदिदमीक्षमाणः मालिकः 'अहो कः पुनरत्र प्रयासो मम?' इति साभिमानमुदीरयन् स्वप्रार्थनया पुनः कृष्णेन पूर्ववदूर्ध्वं प्रेरितं चक्रं स्वयं स्वहस्तांगुल्या धारयितुमिच्छन् प्रयस्यंश्चाशक्नुवन् कण्ठमूलपतितेन तेन कृत्तशीर्षः परित्यक्तवान् प्राणानिति कथाऽत्रानुसंधेया। कुत्रत्येयं कथेति न वयं विज्ञातुं प्रभवामः। श्रीविष्णुपुराणे श्रीभागवते हरिवंशे वा कथामिमां नोत्पश्यामः। इतिहास पुराण प्रवचन प्रवणाः प्रवीणा महान्तः स्वयमवगन्तुमीशते। व्यासपराशर वाल्मीकि प्रभृतयो मुनिवरा यथा भगवच्चरितविशेषान् योगमहिम्ना साक्षात्कुर्वन्तिस्म तथा भट्टनाथ सूरिवरोऽयम् इतिहासमिमं स्वयं साक्षात्कृतवानित्याचार्या मन्यन्ते॥ .... .... .... .... (८)

(गाथा.) अण्डत्तमरहॅव्ळ् शूळ अत्ताणियुव्ळॐङ्गिरुन्दाय् * तोण्डर्हॅव्ळ् नॅञ्जिलुरैवाय् तूमलराळ्मणवाळा *
उण्डिट्टुलहिनैयेळुमोरालिलैयिल् तुयिल्कोण्डाय् * कण्डुनानुन्नैयुहक्ककरुमुहैप्पूच्चूट्टवाराय्॥

श्लो॥ दिव्यैस्सूरिगणैस्समेत्य विलसन्नास्थानसन्मण्डपे
भक्तान्तःकरणे निवासरसिक श्रीमन् रमावल्लभ।
भुक्त्वा सप्त जगन्ति निद्रित हरे न्यग्रोधपत्ते क्वचित्
मत्प्रीत्यै ननु कार्मुकाख्यकुसुमं स्वामिन् मम्मुत्तंसय॥ ९॥

श्रीमहामणिमण्डपसमाख्ये दिव्ये श्रीमत्यास्थानमंडपे नित्यैर्मुक्तैश्च सह विराजमान! भक्तहृदयैकवासरसिक! श्रियः पते! सप्तलोकीं निगीर्य वटदल मधिशयितवन्! भो कृष्णकिशोर! मम प्रीतिमावहन् करुमुगै-[कार्मुक] समाख्यं कुसुमं धारयितुमायाहि॥ .... .... .... (९)

(गाथा.) शॅण्बहमल्लिहैयोडु शॅङ्गळुनीरिरुवाट्चि * ऍण्बहर्पूवुङ्कोणर्न्दॅन् इन्निवैशूट्टवावॅन्नु *
मण्बहर्कॊण्डानै आय्च्चिमहिळ्न्दुरैशेयूदविम्मालै * पण्बहर्विल्लिपुत्तूर्क्कोन् पट्टर्पिरान् शॊन्नपत्ते॥

श्लो॥ मल्लीचम्पकहल्लकादिकुसुमान्यादाय मात्रा पुरा
स्वामिन्वोढुममूनि संप्रति समागच्छेतिं सानन्दया।
यत्प्राभाषि यशोदया तदुदितं श्रीधन्विनव्याभिध-
क्षेत्राधीश्वरभट्टनाथविदुपा भक्तैकभोग्यक्रमात्॥ १०॥

मल्लिकाचाम्पेयसौगन्धिकादीनि कुसुमान्यादाय कृष्णावतारकाले यशोदया तद्धारणार्थं कृष्णाह्वानरूपं यदुक्तं तत् कालांन्तरे तद्भावभावनया श्रीविष्णुचित्तसूरिणा संकीर्तितम्। तदिदं भक्तानां परमभोग्यम्॥ (१०)

— एतद्दशकसारांशसंग्राहक श्लोक एषः —

स्नातं संपुष्टकेशं सुतमथ कुसुमालंक्रियाढ्यं चिकीर्षुः
माता चाम्पेयमल्लीदमनकसुरपुन्नागमागध्यभिख्यम् ।
सज्जीकृत्य प्रसूनप्रचयमभिनवं, वत्स! पुष्पाणि धर्तुं
द्रागायाहीति याश्चामकृत, वदति तद्विष्णुचित्तेऽस्मि भक्तः ॥

अधस्तनदशककृतेन विप्रलंभोपायेन निरुद्धवनप्रयाणकुतूहलं कृष्णकिशोरं नानाविधकुसुमालंकृतशिरस्कं दिदृक्षमाणा यशोदा चम्पकवल्ली दमनक सुरपुन्नागमागधी मालती प्रभृतीनि सद्योविकस्वराणि प्रसूनानि समाहृत्य "वत्स कृष्ण ! पुष्पाण्येतानि धारयितुं समागच्छ तावदिह" इत्यर्थयतेस्म । तदिदं दशभिर्गाथाभिः कथयति .... .... .... .... * विष्णुचित्त सूरावहमस्मि भक्तिमान् ॥

इति श्रीभट्टनाथसूक्ते द्वितीयशतके सप्तमं दशकमवसितम् ॥
श्रीविष्णुचित्तसूरिदिव्यचरणावेव शरणम् ॥

---

॥ श्रीरस्तु ॥

श्रीभट्टनाथसूक्ते द्वितीयशतके अष्टमं दशकम्

## ॥ इन्दिरनोडु ॥

अवतारिका—भगवती यशोदा कृष्णकिशोरस्याभिषेकम् केशप्रसाधनं पुष्पधारणं च सुष्ठु विरचय्य अथ दृष्टिदोषपरिहृतये नीराजनां कर्तुं कामयमाना "वत्स कृष्ण ! त्वं सायंसन्ध्यासमयेऽस्मिन् चत्वारादिस्थलेषु मास्म तिष्ठः; गृहाद्बहिः कुत्रापि मास्म गच्छः; क्षिप्रमिह समायाहि; मयाऽधुना करिष्यमाणं मङ्गलदीपाभ्यर्हणं स्वीकुरु" इत्याजुहाव । तदिदमाह्वानं श्रीविष्णुचित्तो मुनिः चोलमण्डलस्थ-तिरुवेळ्ळरैसमाख्याविश्रुतश्रीश्वेताद्रि-दिव्यदेशपतिं श्रीपुण्डरीकाक्षं भगवन्तमेव नन्द नन्दनत्वेन विभाव्य तत्सन्निधे विज्ञापयामास । यतो ह्यधुना अर्चावतार एव अनुभवयोग्यता वर्तते । तथाच दशकमिदं श्रीकृष्णकिशोरमुद्दिश्य रक्षादीपस्वीकरणप्रार्थनात्मकं निबध्यत इत्युक्तं भवति ॥ *

(गाथा.) इन्दिरनोडु पिरमनीशनिमैयवरेल्लाम् * मन्दिर मामलर्कोण्डु मरैन्दुवराय् वन्दुनिन्रार् *
शन्दिरन् मालिगै शेरुं शदुरर्कळ् वेळ्ळरैनिन्नाय् * अन्दियम्बोदिदुवाहुम् अळगने काप्पिड वाराय् ॥

चन्द्रमण्डलावगाहिसौधवृन्दाञ्चितं विद्वदधिष्ठितं च श्वेताद्रिनामकं दिव्यदेशमधितिष्ठन् भगवन् सुन्दर-कृष्ण ! पुरुहूतविरिञ्चपार्वतीपतिप्रभृतयो देवाः सर्वेऽपि मन्त्रपूतपुष्पाञ्जलिपाणयस्सन्तो नातिदूरे निलीना वर्तन्ते । कृष्ण ! सायंसन्ध्याकाले बहिरटनमपहाय समायाहि, मया सज्जीकृतं रक्षादीपं स्वीकर्तुम् (इति कथयति यशोदा)॥

(गाथा.) कन्दुकलिङ्गं पुहुन्दु कदरुकिन्र पशुवेल्लाम् *
निन्रोलिन्देनुन्नैक्काणि नेशमेलोन्नुमिलादाय् *
मन्निल्ल निल्लेलन्दिप्पोदु मदिल्तिरुवेळ्ळरैनिन्नाय् *
नन्नुकण्डायेन्दन् शोल्लु नानुन्नै काप्पिड वाराय् ॥ २ ॥

प्राकारपरिवृतश्वेताद्रिमधितिष्ठन् भगवन् ! मयि प्रीतिलेशमप्यनुद्वहन् कृष्ण ! अहं चिरादेव त्वदाह्वान-तत्पराऽवर्तिषि । अत एव धेनवो वत्ससमीपं स्वयमेवोपसृप्य क्रोशन्ति । सायंसन्ध्यासमयेऽधुना त्वं चत्वरेषु मास्म तिष्ठः । मद्वचनादरणं तव श्रेयसे स्यात् । तदायाहि मदीयरक्षादीपस्वीकृतये ॥ .... (२)

(गाथा.) शेप्पोदुमेन्मुलैयार्गळ् शिरुशोरु मिलूलुं शिदैत्तिट्टु *
अप्पोदु नानुरप्पप्पोय् अडिशिलुमुण्डिलै याळ्वाय् *
मुप्पोदुं वानवरेत्तुं मुनिवर्गळ् वेळ्ळरैनिन्राय् *
इप्पोदु नानोन्नुं शेय्येन् एम्बिरान् काप्पिडवाराय् ॥ ३ ॥

स्वामिन् मुकुन्द ! त्रिसन्ध्यमपि स्तुवद्भिर्मुनिभिर्भरितं श्वेताद्रिदिव्यदेशमधितिष्ठन् भगवन् ! वालिकाभिः क्रीडया परिकल्पितं सिकतान्नं सैकतसद्म च शिथिलीकृत्य मत्कोपपात्रभूतो यदाह्यभूस्त्वं तदाऽपसृत्य भोजनमप्य-कुर्वाणो वर्तसे ; नाहमधुना त्वां तर्जनभर्त्सनादिदण्डगोचरं करिष्यामि । स्वामिन् समायाहि रक्षादीपस्वीकृतये ॥ ३ ॥

(गाथा.) कण्णिलूमणलकोडुतूवि क्कालिनाल्पायुन्दनैयेन्नेन्नु *
एण्णरुं पिळ्ळैकळ् वन्दिट्टु इवराल् मुरैप्पडुकिन्नार् *
कण्णने वेळ्ळरैनिन्नाय् कण्डारोडे तीमैशेयूवाय् *
वण्णमे वेलैयतोप्पाय् वळ्ळलेकाप्पिडवाराय् ॥ ४ ॥

श्वेताद्रिनाथ हे गोपालकृष्ण ! सर्वतोऽपि दुश्चेष्टितकारिन् ! जलधिसवर्ण ! महौदार्यनिधे ! भगवन् ! असंख्येया अर्भका अत्रागत्य हन्त तव दुश्चेष्टितान्यधिकृत्य भृशमाक्रोशन्ति । "सिकतामानीय चक्षुषि विक्षिपत्यसौ, पादेन प्रहरति" इत्येवमेवं ते चेष्टा अभिधाय विर्वदन्ति ते, तथाविधदुश्चेष्टितकरणमपहाय समायाहि मदीयरक्षादीप स्वीकृतये ॥ .... .... .... .... .... (४)

(गाथा.) पल्लायिरवरिव्वूरिल् पिळ्ळैकळ् तीमैकळ्शेयूवार् *
एल्लामुन्मेलन्निप्पोकादु एम्बिरान्नीयिङ्गे वाराय् *
नल्लार्गळ् वेळ्ळरैनिन्नाय् ञानच्चुडरे उन्मेनि *
शोल्लारवाळ्त्तिनिन्नेत्ति शोप्पडकाप्पिडवाराय् ॥ ५ ॥

सात्त्विकसज्जनाढ्यश्वेताद्रिक्षेत्रनिवासरसिक विभो ! ज्ञानप्रभाभासुरगोपालकृष्ण ! व्रजेऽस्मिन् धूर्तकृत्य-कारका बालका बहुसहस्रसंख्याससन्ति नाम ; तेते स्वकीयानि दुश्चेष्टितानि त्वय्येवारोपयितुं शक्ताः, अतस्तत्सह-वासं विहाय मदीयमङ्गलाशासनस्तुतिततिसहकृतरक्षादीपस्वीकृतये समायाह्यत्र ॥ .... (५)

(गाथा.) कञ्जन् करुक्कोण्डु निन्मेल् करुनिरच्चेम्मयिर्प्पेयै *
वञ्जिप्पदर्कु विडुत्तानेन्वदोर् वार्त्तैयुमुण्डु *
मञ्जुतवळ् मणिमाडमदिळ् तिरुवेळ्ळरैनिन्राय् *
अञ्जुवन् नी अङ्गुनिर्क अळगने काप्पिडवाराय् ॥ ६ ॥

मेघमण्डलावगाहिरत्नमयहर्म्यप्राकारादिपरिवृतश्वेताद्रिक्षेत्रभूषण भगवन् गोपालकृष्ण ! कंसस्त्वयि भृशं क्रुद्धस्सन् भयानकरूपिणीं पूतनां त्वदुपप्लवाय प्राहैषीदिति किंवदन्ती श्रूयते ; अतस्तव स्वैरविहारं प्रति भृशमहं बिभेमि । सुन्दरकृष्ण ! समायाहि मदीयरक्षादीपस्वीकृतये ॥ .... .... (६)

(गाथा.) कव्वलचकडुमरुदुं कलक्कलिय वुदैशेयूद *
पिळ्ळैयरशे नी पेयैप्पिडित्तु मुलैयुण्डपिन्नै *
उळ्ळवारोन्नुमरियेन् ओळियुडैवेळ्ळरै निन्राय् *
पळ्ळिकोळ्ळ पोदिदु वाहुं परमने काप्पिडवाराय् ॥ ७ ॥

विप्रलम्भविदग्धशकटासुरयमलार्जुनभञ्जननिपुण गोपालडिम्भ ! यदा त्वं पूतनास्तनन्धयोऽभूः, ततः प्रभृति तव याथात्म्यं नाहं वेदितुं प्रभवामि । प्रचुरप्रकाशं श्वेताद्रिक्षेत्रमधिवसन् भगवन् ! निद्राकालो ह्ययं ते समुपस्थितः ; अतो बहिरटनकुतुकमपहाय मदीयरक्षादीपस्वीकृतये समायाहि ॥ .... (७)

(गाथा.) इन्बमदनैयुयर्त्ताय् इमैयवर्केन्नुमरियाय् *
कुम्बकळिरट्ट कोवे कोड्डुञ्जन् नेञ्जिनिल् कूत्ते *
शेम्बोन्मदिळ् वेळ्ळरैयाय् शेल्वत्तिनाल् वळर्पिळ्ळाय् *
कम्बक्कपालिकाणङ्ग कडिदोडिकाप्पिडवाराय् ॥ ८ ॥

स्वकीयविविधचेष्टाभिर्ममानन्दमभिवर्धयन् गोपालकृष्ण ! दिविषदामप्यप्रमेयप्रभाव ! कुवलयापीडनामककुम्भिडम्भसम्भेदनसमर्थ स्वामिन् ! क्रूरकंसचेतसि मृत्युवदवभासमान ! हिरण्मयप्राकारपरिवृतश्वेताद्रिदिव्यदेशाधिनाथ ! संपत्कुमार ! यत्र त्वमधुना विहरसि तत्र भयानकदुर्गा वर्तत इति विद्धि । विहाय तत्रावस्थितिं सरभसमायाहि मदीयरक्षादीपस्वीकृतये ॥ .... .... .... ... (८)

(गाथा.) इरुकोडुनीर् शङ्गिल्कोण्डिट्टु एळिल्मरैयोर्वन्दुनिन्नार् *
तरुकेल् नम्बिशन्दि निन्रु ताय् शोल्लुक्कोळ्ळाय्शिलनाळ् *
तिरुक्काप्पु नानुन्नैचात्त तेशुडै वेळ्ळरैनिन्राय् *
उरुक्काट्टुमन्दिविळक्कु इन्नोळिकोळ्ळवेत्तुहेन् वाराय् ॥ ९ ॥

तेजःपुञ्जाञ्चितश्वेताद्रिदिव्यदेशपते भगवन् गोपालकृष्ण ! परमवैदिकाः साधवः पुरुषसूक्तादिमन्त्रपूत तीर्थं शङ्खे समाहृत्य तव रक्षायै समुपस्थिता इह सन्ति । वत्स ! कतिपयदिनावधि जननीवचनेष्वादरं कलय । अद्य तव रक्षामाकलयितुं त्वद्दिव्यमङ्गलविग्रहशोभापुष्टिकरं प्रदीपं प्रज्वलयामि ; समायाहि कृष्ण ॥ .... (९)

(गाथा.) पोदमर्शेल्वक्कोळुन्दु पुणर्तिरुवेळ्ळरैयानै *
मादर्कुयर्न्दवशोदै मकन्तन्नैक्काप्पिट्ट मात्तम् *
वेदप्पयन् कोळ्ळवल्ल विट्टुचित्तन् शोन्नमालै *
पादप्पयन् कोळ्ळवल्ल भक्तरुळ्ळाविनै पोमे ॥ १० ॥

ललनासु उत्तमया यशोदया पुरा स्वात्मजं कृष्णं प्रति रक्षादीपस्वीकृतिविषयकं यदुक्तं तत् वेदार्थविशारदविष्णुचित्तमुनिना श्वेताद्रिदिव्यदेशाधिनाथं कमलनिलयासहचरं भगवन्तमुद्दिश्य प्रोक्तम्। तास्विमासु गाथासु प्रतिचतुर्थचरणं यः खलु रक्षादीपप्रस्तावः कृतः तादृशे कैङ्कर्ये ये निरता भक्तास्ते विधूतदुरिता विलसेयुः—इति फलश्रुत्या समापितमिदं दशकम्॥ .... .... .... ... (१०)

— एतद्दशकसारांशसंग्राहकश्लोक एषः —

पुष्पालंकाररम्यं सुतमतिसुपमं दृष्टिदोषापनुत्त्यै
दीपेनाभ्यर्हणीयं मनसि निदधती भाग्यमूर्तिर्यशोदा।
आगच्छ क्षिप्रमत्र प्रियसुत! न बहिर्याहि कृष्णेत्यवोचत्
तत् श्वेताद्रीश्वरं प्रत्यभिदधदनघो विष्णुचित्तो वरेण्यः॥

यशोदा स्वात्मजं केशवं पुष्पधारणालंकृतमारचय्य अथ दृष्टिदोषपरिहारकृते नीराजनं कर्तुमिच्छन्ती 'वत्स कृष्ण! अधुना त्वं कुत्रापि बहिर्मास्म गमः; सायं सन्ध्यासमयेऽस्मिन् शृङ्गाटकेषु च मास्म तिष्ठः; सत्वरमिह समायाहि; मया समर्प्यमाणं मङ्गलदीपाभ्यर्हणं स्वीकुरुतावत्' इत्याह्वयति स्म; तदिदमाह्वानं भगवन् विष्णुचित्तो मुनिवरो यशोदाभावनया श्रीश्वेताद्रिनामकक्षेत्रनिलयपुण्डरीकाक्षभगवद्विषयकत्वेन निबबन्ध दशकेऽस्मिन्; स एव भक्ताग्रणीः॥

*

इति श्रीभट्टनाथसूक्ते द्वितीयशतके अष्टमं दशकमवसितम्॥
श्रीभट्टनाथदिव्यसूरिदिव्यचरणावेव शरणम्

॥ श्रीरस्तु॥

अथ नवमं दशकम्

## वेण्णेयूविळुङ्गि

अवतारिका—भगवान् कृष्णकिशोरो व्रजे प्रतिगृहं प्रविश्य वनितानामसह्यानि विविधानि स्तेयादीनि चेष्टितान्यकरोदिति तास्ता ललना यशोदान्तिक मुपेत्य कथयन्ति तानि कृष्णचेष्टितानि। तदाकर्ण्य यशोदा श्रुतिसुभगैरुपदेशैर्विनयते कृष्णम्। तदिदमुभयं निबध्यते दशकेऽस्मिन्। कृष्णदुश्चेष्टितान्यभिधाय समाक्रोशन्तीनां वनितानां गाथाः षट्। तदाकर्ण्य "कृष्णकिशोरमुकुन्द! अस्माकमवज्ञास्पदान्येतादृशानि कृत्यानि मास्म कार्षीस्त्वम्; वत्स! मत्सविधमुपेहि; त्वदभिमतानि भक्ष्याण्यहमेव वितराणि ते; अह्नाय समायाहि कुमारक!" इति सानुनयमभिदधानाया यशोदाया गाथाश्चतस्रः इत्येवंरीत्या दशकमिदं निबद्धं वेदितव्यम्॥

*

(गाथा.) वेण्णेयूविळुङ्गि वेरुङ्कलत्तैवेर्प्पिडैयिट्टदनोशै केट्टकुम् *
कण्णपिरान्कत्तकल्वितनै क्काक्ककिल्लो मुन् महनैक्कावाय् *
पुण्णिल्लु पुळिप्पेयूदालोक्कुं तीमै पुरैपुरैयालिवै शेय्यवल्ल *
अण्णर्कण्णानोर् मकनैप्पेत्त अशोदैनङ्गायुन्महनैक्कूवाय्॥ १॥

[ कृष्णचेष्टितमसहमानानां गोपीनामाक्रन्दनं गाथायामस्यां निबध्यते । ] क्षते क्षारमिव धूर्तकृत्यं प्रति गृहं च कुर्वाणं परमसात्त्विक बलरामविसदृशं च पुत्रं प्रसूतवति हे यशोदे! धूर्तं तव सुतमभिरक्ष ; नवनीतमास्वाद्य रिक्तभाण्डमश्मोपरि प्रक्षिप्य तन्निनदश्रवणकुतूहलिनः कृष्णस्य दौर्लल्यं न वयं प्रतिरोद्धुं सोढुं वा प्रभवामः । त्वमेव तं स्वसविधे समाहूय विनयस्व ॥ .... .... .... (१)

(गाथा.) वरुह वरुहवरुह विङ्गे वामन नम्बी वरुहविङ्गे *
करिय कुळल् शेय्यवाय्मुहत्तुकाकुत्तनम्बी वरुहविङ्गे *
अरियनिवनेनक्किनु नङ्गाय् अञ्जनवण्णा अशलहत्तार् *
परिभवम् पेशत्तरिक्किल्लेन् पावियेनुकिङ्ग पोदराये ॥ २ ॥

अथ यशोदाकृतं कृष्णाह्वानमिह निबध्यते । वामन कृष्ण! आयाह्यायाह्यायाहि सरभसमिह । नीलकुन्तल! सरसिजवदन! काकुत्स्थ हरे समायाह्यत्र । "अयि गोपालबालिके कुमारोऽयमद्यमे हन्त सुतरामविधेयो जात" ( इति कामपि गोपिकामुद्दिश्य कथयित्वा पुनरपि कृष्णं प्रत्येव कथयति । ) अये अञ्जनवर्णमुकुन्द! इतरैर्जनैः कथ्यमानानि त्वद्विषयकपरिभववचांसि नाहं सोढुमीशे । पापिन्या मम वचनमादृत्य समायाह्यत्र वासुदेव ॥ ... .... .... .... .... (२)

(गाथा.) तिरुवुडैप्पिळ्ळैतान् तीयवारु तेक्कमोन्रुमिलन् तेशुडैयन् *
उरुहवैत्त कुडत्तोडुवेण्णेय् उरिञ्जियुडैत्तिट्टुप्पोन्दुनिन्रान् *
अरुहिरुन्दार्तम्मैयनियायम् शेय्वदुदान् वळक्कोयशोदाय् *
वरुहवेन्रुन्महन् तन्नैक्कूवाय् वाळवोट्टान् मदुशूदनने ॥ ३ ॥

( पुनरपि कृष्णचेष्टितान्यमिदधतीनां गोपीनामाक्रन्दनमिह निबध्यते । ) अयि यशोदे तव श्रीमान् कुमारो दुश्चेष्टितकरणे न मनागपि संकोचभाग्भवति । दुश्चेष्टाकरणमेव स्वस्य तेजस्करं मन्यत इव । शृणु तावत् ! अग्नौ निहितं नवनीतभाण्डमपहृत्य नवनीतं समास्वाद्य भाण्डं तु हन्त भञ्जयित्वा गतः । त्वद्गृहान्तिकनिवासिनीनामस्माकमेवं नाम बाधनं किमहो न्याय्यम्? मधुसूदनोऽयं नास्मान् जीवयति । नन्ददयिते त्वदात्मजमिमं सरभसमायाहीत्याकारयेथाः ॥ .... .... .... .... (३)

(गाथा.) कोण्डल्वण्णा इङ्गेपोदराये कोयिल्पिळ्ळायिङ्गे पोदराये *
तेण्डिरैशूळ् तिरुप्पेर्किडन्द तिरुनारणा इङ्गेपोदराये *
उण्डुवन्देनम्ममेन्रुशोल्लि योडियहम्बुह आयूचितानुम् *
कण्डेदिरेशेन्रेडुत्तुक्कोळ्ळ कण्णपिरान् कत्त कल्वितानै ॥ ४ ॥

[ अथ यशोदया कृतं कृष्णाह्वानमिह निबध्यते पूर्वार्धेन ; उत्तरार्धेन तु तस्या हर्षप्रकर्षोऽभिधीयते । ] नीलमेघनिभकृष्ण! आयाह्यत्र, श्रीरङ्गेशय वत्स! आयाह्यत्र ; स्वच्छतरवीचिमालासंकुलसह्यजापरिवृतं (अप्पक्कुडत्तान् सन्निधिरिति सुप्रसिद्धं ) तिरुप्पेर्नगर्नामकं दिव्यदेशमधिशयान श्रीमन्नारायण समायाह्यत्र । ( यशोदया

समाहूतः कृष्णः स्तन्यपानार्थमेव मामियमाह्वयतीति मत्वा प्राह—) मातः! नाहंक्षुधितोऽस्मि, पूर्णकुक्षिरेवास्मि इति, एवमुक्त्वा प्रधाव्य गृहान्तःप्रविशन्तं कृष्णकिशोरमभ्युद्गम्य यशोदा निजकटितटमधिगमय्य परमानन्दकन्दलितस्वान्ता बभूव। तत्तादृशं कृष्णस्य वैदग्ध्यं हन्त! वाचामभूमिः इति विष्णुचित्तमुनेः स्वकीयभाषितसंनिवेशः) ॥ .... .... .... ... .... (४)

(गाथा.) पालैक्करन्दडुप्पेरवैत्तु प्पलुवळैयाळेन्मह्ळिरुप्प *
मेलैयहत्तेनेरुप्पुवेण्डिचेन्तु इरैप्पोळुदङ्गे पेशिनिन्रेन् *
शाळग्रिरामम्मुडैय नम्बी शायुत्तुप्परुहिट्टुप्पोन्दुनिन्रान् *
आलैक्करुम्बिन् मोळियनैय अशोदै नङ्गायुन्मकनैक्कूवाय् ॥ ५ ॥

(गोपीनामाक्रन्दनम्) इक्षुरससदृक्षमधुरभाषिते यशोदे! सौभाग्यवती मम दुहिता दुग्धं दुग्ध्वा तद्भरितभाण्डं चुल्ल्यां निधाय तस्थौ। तदात्वे तावदहम् अग्न्यानयनार्थं प्रतीच्यगृहं गत्वा तत्रक्षणं संभाषमाणा अवर्तिषि। तस्मिन्नेवावकाशे हन्त साळग्रामाधिनाथस्तत्र तनयो मद्दुहितुरवस्थितिस्थानमुपेत्य दुग्धभाण्डमुच्छोल्य दुग्धं च निपीय यत्किमप्यजानन्निव बहिरागत्यावातिष्ठत। आः केयंनीतिः? साध्वि! आकारयेथा अमुमात्मीयमात्मजम् ॥ (५)

(गाथा.) पोदर्हण्डायिङ्गे पोदर्हण्डाय् पोतरेनेन्नादे पोदर्हण्डाय् *
एतेनुश्चोल्लियशलहत्तार् एतेनुम्पेश नान्केट्कमाट्टेन् *
कोतुहलमुडैकुट्टनेयो कुन्नेडुत्ताय् कुडमाडुकूत्ता *
वेदप्पोरुळे एन्वेङ्कडवा वित्तहने इङ्गेपोदराये ॥ ६ ॥

(यशोदाकृतं कृष्णाह्वानम्) लीलाकुतूहलभरित बालक! गोवर्धनधर! घटनर्तक! वेदवेद्य वेंकटाधीश! विदग्धवासुदेव! विहाय गृहान्तरगमनोत्कण्ठामत्रायाहि; नाहमागच्छेयमित्यनुक्त्वा वत्स! समागच्छ। इतरैर्जनैस्त्वद्विषयमुच्यमानमवाच्यं वचो नाहमाकर्णयितुं प्रभवामि; क्षिप्रमायाहि वत्स! ॥ .... (६)

(गाथा.) शेन्नेलरिशिशिरुपरुप्पुश्चे शेयूदवकारं नरुनेयूपालाल् *
पन्निरण्डुतिरुवोणमट्टेन् पण्डुमिप्पिळ्ळै परिशरिवन् *
इन्नमुहप्पन् नानेन्तुशोल्लि एल्लाम् विळुङ्गिट्टुप्पोन्दु निन्रान् *
उन्महन्दन्नै अशोदै नङ्गाय् कूविक्कोळ्ळाय् इवैयुम्शिलवे ॥ ७ ॥

(गोपीनामाक्रन्दनम्) साध्वि यशोदे! सांवत्सरिकश्रोणानक्षत्रोत्सवव्रताङ्गतया घृतदुग्धपक्वं शाल्यन्नमुद्रान्नपायसादिकमहं सज्जीकृतवती। त्वदीयकुमारस्यास्य प्रकृतिं चिरादहं जाने। सोऽयमधुना, व्रतार्थं सज्जीकृतं तदखिलमपि भक्ष्यं निश्शेषमुपभुज्य तावताऽप्यतृप्तस्सन् पुनः पुनरपि बुभुक्षां प्रदर्शयन्नवतिष्ठते। एतादृशदुश्चेष्टितावकाशो यथा नस्यात्तथा त्वत्पुत्रमाकारयेथाः। एवं नाम पुत्रस्य स्वच्छन्दचर्यानुमोदनं किमहो न्याय्यं तव ॥ .... .... .... .... .... - (७)

(गाथा.) केशवने इङ्गे पोदराये किल्लेनेन्नादिङ्गे पोदराये *
नेशमिलादारहत्तिरुन्दु नी विळैयाडादे पोदराये *
तूशनम् शोल्लुम् तोळुत्तैमारुम् तोण्डरुम् निन्नविडत्तिल् निन्नु *
ताय् शोल्लुकोळ्वदु तन्मम् कण्डाय् दामोदरा इङ्गे पोदराये ॥ ८ ॥

(यशोदाकृतं कृष्णाह्वानम्) अये केशव ! समायाह्यत्र, नाहमागच्छेयमित्यनुक्त्वा सरभसमायाह्यत्र; प्रेमरिक्तानां गृहेष्ववस्थाय विहरसि हन्त नैतदुचितं ते । त्वद्विषयकदूषणैककथनसक्तानां नीचानामवस्थितिस्थले वासं विहाय समायाह्यत्र । जननीवचनादरणं ते परमो धर्मः खलु; दामोदर ! आयाह्यत्र ॥ .... (८)

(गाथा.) कन्नलिलड्डुवत्तोडु शीडै कारेळ्ळिलुण्डै कलत्तिलिट्टु *
एन्नहमेन्नु नान् वैत्तुप्पोन्देन् इवन्पुक्कवत्तैप्पेरुत्तिप्पोन्दान् *
पिन्नुमहम्पुकुरियै नोक्कि पिरंगोळिवेण्णेयुम् शोदिक्किन्नान् *
उन्महन्तन्नै यशोदैनङ्गाय् ! कूविक्कोळ्ळायिवैयुम् शिलवे ॥ ९ ॥

(गोपीनामाक्रोशनम्) साध्वि यशोदे ! इक्षुरसपाकाढ्यं लड्डुकम् अपूपं तिलभक्ष्यं च तत्तत्पात्रेषु प्रपूर्य, अस्मदीयं गृहमेव खल्वित्यमिमानेन विशेषतो रक्षामकृत्वा शिक्येषु निक्षिप्य बहिरहमगाम् । तदात्वे त्वदीयोऽयं कुमारः अन्तः प्रविश्य तानि भक्ष्याणि स्वीकृत्य यत्किमप्यजानन्निव बहिराययौ । हन्त ! तावताऽप्यतृप्तस्सन् पुनरपि गृहान्तः प्रविश्य शिक्येषु नवनीतगवेषणमारचयति हन्त । आः किमिदं नाम, न खलु न्याय्यमित्थं तव पुत्रपोषणम् । यशोदे ! आकारयेथा आत्मीयमात्मजम् ॥ .... .... .... (९)

(गाथा.) शोल्लिलरशिप्पडुदि नङ्गाय् ! शूळलुडैयनुन् पिळ्ळै ताने *
इल्लम् पुहुन्देन्महळैक्कूवि कैयिल्वळैयै कळत्तिक्कोण्डु *
कोल्लैयिल् निन्नुं कोणर्न्दु वित्त अङ्गोरुत्तिक्कव्वळैकोडुत्तु *
नल्लन नावल्पळङ्गळ् कोण्डु नानल्लेनेन्नु शिरिक्किन्नाने ॥ १० ॥

अयि देवि यशोदे ! त्वदात्मजदुश्चेष्टितानि यथायथमभिदधतीष्वस्मासु त्वं तावत्कोपमुद्वहसि, अतीव विप्रलम्भकः खलु ते तनयः । शृणु तावदेकमदसीयमपचेष्टितम्, सोऽयं कितवो मद्गृहान्तः प्रविश्य मम दुहितरं नामोक्त्या समाहूय प्रसभं तस्याः करवलयं निष्कास्य, उपवनाज्जम्बूफलान्यादाय विक्रेत्र्यै कस्यैचन किरातक्यै तद्वलयप्रदानपूर्वकं स्वादूनि तानि फलानि गृहीत्वा 'नाहं वलयतस्करः' इति स्वयमेव कथयन् हसति हन्त ! ॥

(गाथा.) वण्डुकळित्तिरक्कुम्पोळिल् शूळ्द वरुपुनल्काविरि त्तेन्नरङ्गन् *
पण्डवन् शेय्द किरीडैयेल्लाम् पट्टर्पिरान् विष्णुचित्तन् पाडल् *
कोण्डिवै पाडि क्कुनिक्कवल्लार् गोविन्दन् तन्नडियार्हळाहि *
एण्डिशैक्कुं विळक्काहि निर्पारिणैयडि एन् तलैमेलनवे ॥ ११ ॥

मधुपानमुदितभृङ्गझंकारसंकुलैरुपवनैः परिवृतम्, प्रवाहभरितहेमापगया परिवेष्टितं च श्रीरङ्गमधिशयानो मुकुन्दः पुरा यद्यत्क्रीडितमारचयतिस्म, तत्सर्वं श्रीभट्टनाथमुनीन्द्रोपगीतगाथाभिरिमाभिरनुसंधाय हर्षप्रकर्षपारवश्येन ससंभ्रमनृत्तं कुर्वन्तस्सन्तो गोविन्दभक्ताग्रेसरास्सन्तः मच्छिरोभूषायितनिजपदकमलाश्च सर्वास्वपि दिक्षु प्रदीपवत्प्रकाशेरन् (इति फलकीर्तनेन समापितमिदं दशकम् ॥ .... .... .... (११)

— एतद्दशकसारांशसंग्राहकश्लोकद्वयमिदम् —

गेहे गेहे च गव्यान्यसकृदपहरन् भाण्डभङ्गंच कुर्वन्
मुष्णन् भक्ष्याणि कन्यावलयमपहरंस्ते तनूजोऽतिधूर्तः ।
कृत्यान्येतस्य सोढुं न वयमिह मनागप्यहो शक्नुमो भो
मान्ये धन्ये यशोदे! झटिति तव सुतं शिक्षयेति अङ्गनासु ॥
आक्रोशन्तीपु माता प्रमुदितहृदया कृष्णदामोदर! त्वं
मैवं कार्षीरवज्ञास्पदचरिततर्ति वत्स! मायाह्युपेहि ।
तुभ्यं भक्ष्याणि हृद्यान्यहमिह वितराण्येहि मत्पार्श्वमाश्विति
आहूयाश्लिष्यतिस्मेत्यभिदधति महायोगिनि स्वां प्रपन्नः ॥

कृष्णः प्रतिगृहं गव्यस्तेयं नवनीतरिक्तभाण्डभञ्जनं भक्ष्याणां मोषणं कन्यकाकरवलयानामपहरणं च कुर्वन् गोपीरतिमात्रमबाधत; तद्बाधामसहमानास्ता यशोदान्तिकमुपेत्य तस्य दुश्चेष्टितानि विविच्य प्रोच्य, ईदृशं दुश्चेष्टितकारिणं तव तनयं शिक्षस्वेति कथयन्तिस्म; तदाकर्णनेन, एवंविधचेष्टितकरणनिपुणः खल्वस्मदीय आत्मज इति हर्षप्रकर्षमापुषी यशोदा 'वत्स त्वदभीष्टानि भक्ष्याण्यहमेव वितराणि, अन्यत्र गत्वा मा कुरु दुश्चेष्टितानि, मत्सविधमुपेहि' इति सानुनयममिधाय सप्रेमभरमाह्वयतिस्म, अथ सन्निहितं कृष्णकिशोरमाश्लिष्य हृष्यतिस्म च । तदिदमत्यद्भुतगाथाभिः कथितवति भट्टनाथमुनावहमस्मि प्रपन्नः ॥ *

इति श्रीभट्टनाथसूक्ते—द्वितीयशतके—नवमं दशकमवसितम् ॥

---

अथ दशमं दशकम्

## ॥ आत्तिलिरुन्दु ॥

(अवतारिका) पूर्वदशके—व्रजसदनेपु वासुदेवेन विरचितानि धूर्तचेष्टितान्यधिकृत्य यशोदान्तिके गोपीनामाक्रन्दितमभ्यधायि । अथ कृष्णो व्रजाद्बहिर्यमुनासरित्प्रान्तप्रभृतिप्रदेशेषु वल्लवीवस्त्रभूषणाद्यपहरणमाततानेति तदिदमसहनीयदुःखं प्रकाशयामासुर्यशोदान्तिके ताः, तदिदं निबध्यते दशकेऽस्मिन् ॥ *

(गाथा.) आत्तिलिरुन्दु विळैयाडुवोङ्गळै *
शेचालेरिन्दु वळै तुहिलुं कैक्कोण्डु *
कात्तिल्कडियनायोडि अहम्पुक्कु *
मात्तमुम् तारानालिन्नु मुत्तम् वळैत्तिरम् पेशानालिन्नुमुत्तम् ॥ १ ॥

[कृष्णेन पीडिता गोपालबालिकाः कथयन्ति] कलिन्दनन्दिनीसैकतेषु निषद्य विहरन्तीनामस्माकं वपुषि पङ्कपुञ्जं प्रक्षिप्य अस्मदीयं करवलयवसनादिकमपहृत्य वायुजंत्रवेगेन प्रधाव्य निजगृहान्तः प्रविश्य, द्वारि आक्रन्दन्तीरस्मान्प्रति वाचमप्यप्रयच्छता कृष्णेन बत! वयं हताः स्मः, स्वापहृतकरवलयादिप्रत्यर्पणमधिकृत्य किञ्चिदप्यकथयता केशवेनाद्य बत हताःस्मः, (बाधातिशयं प्रापितास्स्म इत्ययमेवार्थो हतास्स्म इत्युक्त्या कथ्यत इति विभाव्यम् ॥) .... .... .... .... .... (१)

(गाथा.) कुण्डलम् ताळ कुळल् ताळ नाण् ताळ *
एण्डिशैयोरुमिरैञ्जि तोळुदेत्त *
वण्डमर्पूङ्कुळलार् तुहिल् कैक्कोण्डु *
विण्डोय् मरत्तानालिन्नु मुत्तुम् वेण्डवुम् तारानालिन्नु मुत्तुम् ॥ २ ॥

अंसावलम्बिकुण्डलकुन्तलम् आनाभिलम्बिकण्ठाभरणं सर्वत्र च मुनिभिर्देवैः प्रणतैः स्तूयमानकीर्तिपुञ्जं च यथा तथा सुकेशिनीनामस्माकं वासांस्यपहृत्य व्योमस्पृशमनोकहमधिरोहता कृष्णेन वयमद्य हा हतास्स्मः, अस्माभिरत्यर्थमर्थितेनापि तान्यप्रयच्छता कितवेनाद्य हा बत हतास्स्मः ॥ .... .... (२)

(गाथा.) तडम्पडु तामरैप्पोयूहै कलक्कि *
विडम्पडु नागत्तै वालपत्ति यीर्त्तु *
पडम्पडु पैन्दलै मेलेळ प्पायुन्दिट्टु *
उडम्बै यशैत्तानालिन्नु मुत्तुम् उच्चियिल् निन्नानालिन्नु मुत्तुम् ॥ ३ ॥

विपुलं कमलसंभृतं च ह्रदं कलुषीकृत्य विषमुद्गिरन्तं कालियनागं बालग्राहं गृहीत्वा तदीयफणमण्डलोपर्यवस्थाय दिव्यताण्डवमारचयता कृष्णेन वयमद्य हा हतास्स्मः, चिरं तच्छिरसि तस्थुषा कृष्णेन हतास्स्मः ॥ (३)

(गाथा.) तेनुहनावि शेहुत्तु पनङ्कनि *
तानेरिन्दिट्ट तडम्पेरुम् तोळिनाल् *
वानवर्होन् विड वन्द मळै तडुत्तु *
आनिरै कात्तानालिन्नु मुत्तुम् अवै युय्यक्कोण्डानालिन्नु मुत्तुम् ॥ ४ ॥

धेनुकासुरं प्राणैर्वियोजयितुं तमसुराविष्टतालफलोपरि प्रक्षिप्तवता भुजेन गोवर्धनाद्रिमुद्धृत्य वासवप्रेरितवर्षबाधां विनिवार्य गोकुलं रक्षितवता गोपालेन हा वयं हतास्स्मः ॥ .... .... (४)

(गाथा.) आय्च्चियर्शेरि अळै तयिर्पालुण्डु *
पेर्त्तवर्कण्डु पिडिक्कप्पिडियुण्डु *
वेय्त्तडन्दोळिनार्वेण्णेय् कोळ्माट्टादु * अङ्गु
आप्पुण्डिरुन्दानालिन्नु मुत्तुम् अडियुण्डळुदानालिन्नुमुत्तुम् ॥ ५ ॥

व्रजे स्तेनवृत्त्या दधि च दुग्धं चोपभुज्य अथ गोपालबालिकाकृतग्रहणवशाद्दाम्ना निबन्धमवापुषा कृष्णेन हा वयमद्य हतास्स्मः; तासां हस्तैः प्रताडितेन दामोदरेणाद्य हतास्स्मः ॥ .... (५)

(गाथा.) तळ्ळित्तळर्न्दैयिट्टु इळम्पिळ्ळैयाय् *
उळ्ळत्तिनुळ्ळे अवळै युर नोक्कि *
कळ्ळत्तिनाल्वन्द पेय्च्चि मुलैयुयिर् *
तुळ्ळच्चुवैत्तानालिन्नु मुत्तुम् तुवक्कर वुण्डानालिन्नु मुत्तुम् ॥ ६ ॥

शैशवोचितस्खलितगतिकरणदशायामपि, छलवृत्त्या जननीवर्ष्मणा समुपनतां पूतनां हृदा समवलोक्य तदीयस्तन्यपानमिषेण तां मारितवता यशोदास्तनन्धयेन वयमद्य हतास्स्मः, स्वापायगन्धविधुरमास्वादितवताऽद्य हतास्स्मः ॥ .... .... .... .... .... (६)

(गाथा.) मावलि वेळ्वियिल् माणुरुवाय्च्चेन्नु *
मूवडि तावेन्निरन्द इम्मण्णिनै *
ओरडियिट्टिरण्डामडि तन्निले *
तावडियिट्टानालिन्नु मुत्तुम् तरणियळन्दानालिन्नु मुत्तुम् ॥ ७ ॥

महाबलियज्ञवाटे वामनवटुरूपेणोपगम्य पदत्रयपरिमेयभूतलं भिक्षित्वा विक्रमद्वितयमात्रेण रोदसी स्वायत्तीकृतवता भगवता वयमद्य हतास्स्मः, धरण्याक्रमणदक्षिणेन त्रिविक्रमेण हा हतास्स्मः ॥ (७)

(गाथा.) ताळै तण्णाम्बल् तडम्पेरुम् पोय्हैवाय् *
वाळुमुदलै वलैप्पट्टु वादिप्पुण् *
वेळम् तुयर्हेड विण्णोर्पेरुमानाय् *
आळिपणि कोण्डानालिन्नु मुत्तुम् अदक्करुळ् शेय्दानालिन्नु मुत्तुम् ॥ ८ ॥

केतकीकैरवादिकुसुमविभूषितं पृथुतटाकमधितस्थुषा ग्राहेण गृहीतस्य परमापदमापन्नस्य गजेन्द्रस्य खेदमपहन्तुं हेतिराजं प्रयुक्तवता देवाधिदेवेन हा वयमद्य हतास्स्मः, तस्मिन् गजराजे परमकृपां प्रकाशितवता परेण पुंसा हा हतास्स्मः ॥ .... .... .... .... (८)

(गाथा.) वानत्तेळुन्द मळै मुहिल्पोल् * एङ्गुम्
कानच्चु मेयून्दु कळित्तु विळैयाडि *
एनत्तुरुवा यिडन्द इम्मण्णिनै *
तानत्ते वैत्तानालिन्नु मुत्तुम् तरणियिडन्दानालिन्नु मुत्तुम् ॥ ९ ॥

विपुलव्योमविसृत्वरवर्षुकवलाहकसन्निभदिव्यवराहरूपमास्थाय कानने विहृत्याथ भूम्यपहारकहिरण्याक्ष-दैत्यहननपूर्वकं भूमिं तां यथास्थानं स्थापितवता कुहनापोत्रिणा भगवता हा वयमद्य हतास्स्मः, दंष्ट्राग्रोद्धृतधरणीकेन हरिणा हा हतास्स्मः ॥ .... .... .... ... (९)

(गाथा.) अङ्गमलक्कण्णन्तन्नै यशोदैक्कु * मङ्गै नल्लार्हळ् ताम् वन्दु मुरैप्पट्ट *
अङ्गवर्शोल्लै पुदुवैक्कोन्पट्टन् शोल् * इङ्गिवै वल्लवर्क्कुवै एदमोन्रिल्लैये ॥ १० ॥

सुन्दरसरोरुहसन्निभविलोचनशालिकेशवकृतदुश्चेष्टिताक्रन्दनपरामिर्वल्लवबालिकामिर्यशोदान्तिके यदाक्रुष्टं तत्तथैव भट्टनाथमुनिवरः प्राह ; ता इमा गाथाः कीर्तयन्तस्सन्तो हतावद्या भवितारः ॥ (इति फलश्रुत्या समापितमिदं दशकम् । ) .... ... .... .... (१०)

— एतद्दशकसारांशसंग्राहकश्लोक एषः —

कृत्वा गेहेषु चेष्टामथ रवितनयामापगामेत्य तत्र
स्त्रीणां नेत्रेषु पङ्कप्रकरमवकिरन् केशवो मङ्क्षु हृत्वा ।
वासोभूषादि तासामथ रुदितवचांस्युद्गमय्य प्रहृष्टः
तद्गोपीक्रन्दनानि प्रवदति भगवद्भट्टनाथेऽस्मि भक्तः ॥

अयि यशोदे ! नद्यां विहरन्तीष्वस्मासु पङ्कप्रकरमवकीर्य करवलयचेलादिकमपहृत्य सजवं प्रधाव्य सदनान्तः प्रविश्य मौनशालिना कृष्णेन वयमवसन्नास्स्मः, कदाचिदस्मदीयं सर्वस्वमपहृत्य समुत्तुङ्गशाखिशाखास्थितेन कृष्णेन वयमुत्सीदामः ; कालियभुजगमर्दनं कृत्वा कृतमहोपकारः कृष्णो हन्त भृशमस्मानवसादयति, धेनुकासुरमर्दनपूर्वकं गोवर्धनाद्रिमुद्धृत्य गोगोपीजनरक्षणदाक्षिण्यं प्रदर्शितवता कृष्णेन वयमद्य विषादितास्स्मः, दधिदुग्धनवनीतादिस्तेयनिमित्तेन प्रापितोद्खलबन्धो मुकुन्दोऽस्मानुत्सादयति, पूतनास्तन्यपानेन व्रजं सनाथीकृतवानच्युतोऽस्मान् विह्वलयति ; त्रैविक्रमक्रमकृताक्रान्तत्रिलोको भगवान् दुःखापयति हन्तास्मान्, विनोचितग्राहेण गजेन्द्रेण स्तुतो भगवान् बत मारयत्यस्मान् ; दिव्यवराहवेषधृत्वा भूदेवीं यथास्थानं स्थापितवान् भगवानद्य नः प्रणाशयति हन्तेत्येवमुच्चावचमाक्रन्दुर्गोपालकुमारिका इति तद्भावभावनया कथितवति विष्णुचित्तसूरावहमस्मि भक्तः ॥ *

इति श्रीभट्टनाथसूक्ते द्वितीयशतके दशमं दशकमवसितम् ॥
श्रीभट्टनाथदिव्यसूरिदिव्यचरणौ शरणम् ॥

---

द्वितीयं शतकं समाप्तम् ॥

---

इति
श्री काञ्ची प्रतिवादिभयंकर अण्णङ्गराचार्यविरचितायां
श्री भट्टनाथसूक्तसमाख्य दिव्यप्रबन्धव्याख्यायां
द्वितीयं शतकमवसितम् ॥

---

॥ श्रीरस्तु ॥

श्रीशठकोप रामानुज वरवरमुनीन्द्रेभ्यो नमः ।

## श्रीकाञ्ची प्रतिवादिभयङ्कर-अण्णङ्गराचार्य विवर्तिते श्रीभट्टनाथसूक्ते तृतीयशतकप्रारम्भः ॥

# ॥ प्रथमं दशकम् — तन्नेरायिरम् ॥

**अवतारिका**—एतावता कालेन, तदा तदा कृष्णकिशोरमाहूय स्तन्यं पाययन्ती यशोदा अधुना तस्मिन् कृत्ये स्वात्मनोऽतिमात्रमुदितां भीतिं प्रख्यापयितुमुपक्रमते ॥ "हे कृष्ण! त्वामहं वेद्मि, तुभ्यं स्तन्यं प्रदातुं चकिताऽस्मि" इति दशकृत्वः कथयति । वत्स! त्वामहं साक्षात्सर्वेश्वरमभिजाने, त्वं साधारणो बालो न भवसि, नानाविधानि दिव्यतमानि खलु चेष्टितानि त्वं कलयसि, प्रतिक्षणमपि तावकानि तानि सर्वाण्यपि अत्यद्भुतचेष्टितानि प्रेक्षमाणैव खल्वहं वर्ते । पूतनायाः स्तन्येन सह प्राणानपि तस्याः पीतवानसि, शकटमप्यसुरं क्षणेन भञ्जयामासिथ स्तन्यार्थी प्ररुदन्निव; समुत्पादितबन्धमुदूखलमप्याकृष्य व्रजन् यमलार्जुनभङ्गमप्यकरोः । एवमेव सुबहून्यतिमानुषचेष्टितानि कृतवन्तं च त्वामहं साक्षान्नारायणमभिजाने । अतस्तुभ्यमितःपरं स्वपुत्रधिया स्तन्यं दातुं भृशं भीताऽस्मीत्यसकृदाह । तदिदं निबध्यते दशकेऽस्मिन् तद्भावभावनाभाजा विष्णुचित्तमुनिवरेण ॥

(गाथा.) तन्नेरायिरं पिळ्ळैकळोडु तळर्नडैयिट्टु वरुवान् *
पोन्नेयू नेय्योडु पालमुदुण्डु ओरु पुळ्ळुवन् पोय्ये तवऴुम् *
मिन्नेर् नुण्णिडै वञ्जमगळ् कोङ्गैतुञ्ज वायूवैत्त पिराने *
अन्ने उन्नै अरिन्दुकोण्डेन् उनक्कु अञ्जुवन् अम्मं तरवे ॥ १ ॥

समानवयस्कैस्सहस्रसंख्यैर्गोपालबालकैस्सह सविभ्रमगत्या समागच्छन् वत्स! स्वादु घृतं दुग्धं च चौर्येण पीत्वा किमप्यजानन्निव कपटं भावयन् कृष्ण! विप्रलम्भवैदग्ध्यशालिन्याः पूतनायाः स्तन्यं निपीय तां विनाशितवन् भगवन्! एतावता कालेन अस्मदीयोऽयं कुमारक इति भावितं भवन्तमद्याहं यथायथमज्ञासिषम्, अतस्ते स्तन्यं दातुम् अहह! बिभेमि ॥ [इति यशोदा प्राह] .... .... (१)

(गाथा.) पोन्पोल् मञ्जनमाट्टि अमुदूट्टिप्पोनेन् वरुमळविप्पाल् *
वन्पारच्चकटमिरच्चाडि वडक्किलहं पुक्किरुन्दु *
मिन्पोल् नुण्णिडैयाळोरुकन्नियै वेत्तुरुवं शेयूदुवैत्त *
अन्वा उन्नै अरिन्दुकोण्डेन् उनक्कु अञ्जुवन् अम्मं तरवे ॥ २ ॥

अयि दामोदर! सुवर्णसच्छायविग्रहं त्वां स्नपयित्वा भोजयित्वा च यमुनां प्रति गतवत्या मम प्रतिनिवृत्त्यवकाशे बलिष्ठं कर्कशं च शकटं पादघातेन शिथिलीकृत्य तत उदीच्यगृहं च प्रविश्य कामपि कन्यकां विकृतां कृतवन् प्रेमभरित भगवन्! भवन्तमहमज्ञासिषम्, स्तन्यं ते प्रदातुमहह बिभेमि ॥ [शकटभञ्जनवृत्तान्तस्तावदतिशैशवे समभूत्, तदात्वे उदीच्यगृहं प्रविश्य कस्याश्चन कन्यकाया विकृतत्वकरणोक्तिः कथं घटत इति माभूदिह शङ्का, यदाकदाऽपि वा कृतानां तच्चेष्टितानामनुसंधानमात्रमेवात्र विवक्षितं वेदितव्यम् ॥ .... (२)

(गाथा.) कुम्मायत्तोडु वैण्णेयूविलुङ्गि कुडत्तयिर् शायुत्तुप्परुहि *
पोयुम्मायमरुदान अशुररैप्पोन्नुवित्तु इन्नु नी वन्दायू *
इम्मायं वल्ल पिळ्ळैनम्बी उन्नै एन्महनेयेन्वर् निन्नार् *
अम्मा उन्नै अरिन्दुकोण्डेन् उनक्कु अञ्जुवन् अम्मं तरवे ॥ ३ ॥

हे गोपालकृष्ण ! सुपक्वं सूपं नवनीतं च समास्वाद्य भाण्डस्थितं दधि सकलमपि पीत्वा असुराविष्ट-यमलार्जुनभङ्गमप्याकलय्य समागतोऽसि, एतादृशचेष्टितकरणपाटवशालिनं त्वां ममैव औरसं पुत्रमाचक्षते तटस्था-जनाः, अहं तु न तथा मन्ये; तव याथात्म्यमहमजानाम्, अतस्ते स्तन्यं दातुं बिभेमि हन्त । [यमलार्जुनवृक्षे असुराविष्टत्वं पुराणप्रतिपन्नं यद्यपि न भवति, तथाऽपि एतद्दिव्यसूरिवरगिरा प्रतिरात्रं निरवद्यमेव। व्रजे प्रायस्सर्वा-ण्यपि वस्तुवृन्दानि कंसप्रेरितदैत्याविष्टान्यासन्निति मङ्गलाशासनपराणाम् अस्थाने भयशङ्किनां दिव्यसूरिवराणा-मनुसन्धानम् । ] .... .... .... .... .... (३)

(गाथा.) मैयार् कणूमडवायूच्चियर् मक्कळै मेय्यन्मै शेय्दु अवर् पिन्पोय् *
कोय्यार् पून्दुहिल् पत्तित्तनिनिन्नु कुत्तं पलपल शेय्दाय् *
पोय्या उन्नैप्पुरंपल पेशुव पुत्तहत्तुळ केट्टेन् *
अय्या उन्नै अरिन्दुकोण्डेन् उनक्कु अञ्जुवन् अम्मं तरवे ॥ ४ ॥

अञ्जनाञ्चितदृशां वल्लवीनां हृदि व्यामोहमुत्पाद्य तासां चेलानवलम्ब्य रहसि गत्वा भूयिष्ठानपराधान-कार्षीः कृष्ण ! अये अनृतकथनकुशल मुकुन्द ! त्वद्विषयकानपवादान् बृहत्तरपुस्तकलेखनार्हानहमश्रौषम् । स्वामिन् ! त्वामहमज्ञासिषम्, स्तन्यं ते प्रदातु महह बिभेमि ॥ .... .... (४)

(गाथा.) मुप्पोदुं कडैन्दीण्डिय वेण्णेयिनोडु तयिरुं विळुङ्गि *
कप्पालायर्हळ् काविल्कोणर्न्द कलत्तोडु शायुत्तुप्परुहि *
मेयूप्पालुण्डळु पिळ्ळैकळ्पोल नी विम्मि विम्मियळुहिन्न *
अप्पा उन्नै अरिन्दुकोण्डेन् उनक्कु अञ्जुवन् अम्मं तरवे ॥ ५ ॥

त्रिसन्ध्यमपि मथित्वा सज्जीकृतं नवनीतं दधि च स्तेयेन समास्वाद्य, गोपैर्महता प्रयासेन समानीतं दुग्धादिकं च पात्रमात्रावशेषं यथातथा निपीय, अस्यामप्यवस्थायां क्षुधामभिनीय स्तन्यपानलिप्सया प्रबलरोदनं कुर्वन् स्वामिन् ! भवन्तमहमज्ञासिषम्, स्तन्यं ते दातुं बत बिभेमि ॥ .... .... (५)

(गाथा.) करुम्बार् नीळ्वयल् काय् कदिर्चेन्नेलै कत्तानिरै मण्डित्तिन्न *
विरुम्बाक्कन्नोन्कोण्डु विळङ्गनिवीळ एरिन्द पिराने *
शुरुम्बार् मेन्कुळल् कन्नियोरुत्तिक्कु शूळ्वलै वैत्तुत्तिरियुम् *
अरम्बा उन्नै अरिन्दुकोण्डेन् उनक्कु अञ्जुवन् अम्मं तरवे ॥ ६ ॥

विपुले इक्षुवने धान्यखादननिरतैर्वत्सैस्सह संयुज्य स्वयमपि धान्यखादनाभिनयं कुर्वाणं कंसप्रेरितासुरत्वेशविशिष्टं वत्सं कपित्थफलोपरि प्रहृतवन् भगवन् सुचारुचिकुरां कामपि कन्यकां स्वाधीनयितुं कटाक्षपातं प्रसार्य संचरन् धूर्त ! त्वामहं वेद्मि भोः, स्तन्यं ते दातुमहं बिभेमि ॥ .... .... (६)

(गाथा.) मरुट्टार् मेन्कुळल्कोण्डु पोळिल्पुकु वायूवैत्तु अव्वायर्तम्वाडि *
शुरुट्टार् मेन्कुळल् कन्नियर्वन्दुन्नै शुत्तुन्तोळ निन्नशोदी *
पोरुट्टायमिलेन् एम्बेरुमान् उन्नैप्पेत्तकुत्तमल्लाल् * मत्तिङ्ङु
अरट्टा उन्नै अरिन्दुकोण्डेन् उनकु अञ्जुवन् अम्मं तरवे ॥ ७ ॥

श्रोतृजनव्यामोहनविचक्षणनिनदशालिनीं मुरलीं गृहीत्वा उपवनेषु प्रविश्य तन्निनदसमुत्थापनसमसमय एव ससंभ्रममुपागताभिर्वल्लवकन्यकाभिः परितः परिवेष्टित ! तेजस्विन् भगवन् । 'एतादृशधूर्तकृत्यकरणनिपुणं कुमारं खलु त्वं प्रसूतवती' इति सर्वाभिर्गोपाङ्गनाभिरहमधिक्षिप्ता भवामि, न पुनरन्यत्किमपि फलमनुभवामि, भगवन् त्वा महमज्ञासिषम्, स्तन्यं ते प्रदातुमहं बिभेमि ॥ .... .... (७)

(गाथा.) वाळावाहिलुं काणकिल्लार् पिरमक्कळै मेय्यन्मैशेयुदु *
तोळालिट्टु अवरोडुतिळैत्तु नी शोल्लप्पडातन शेयुदाय् *
केळार् आयर्कुलत्तवर् इप्पळि केट्टेन् वाळ्विल्लै * नन्द-
कोळा ! उन्नै अरिन्दुकोण्डेन् उनकु अञ्जुवन् अम्मं तरवे ॥ ८ ॥

वत्स कृष्ण ! धूर्तकृत्यमकुर्वाणे स्थिते सत्यपि त्वयि अपवादारोपणसज्जाः खलु वर्तन्ते अत्रत्या जनाः । त्वं तु परवनिताम् इङ्गितादिभिर्व्यामोह्य ताभिस्सह स्वैरविहारं च हन्त वाचामगोचरं वितनोषि; एतादृशानपवादानिह गोपवृद्धा नैव सहेरन् । पापिन्यहं कर्णकटूनि वचनानि त्वद्विषये शृणोमि हन्त : साऽहमस्मिन् व्रजे जीवितुं न शक्नोमि; हे नन्दनन्दन ! त्वामहमजानाम्; स्तन्यं ते प्रदातुं वन बिभेमि ॥ .... (८)

(गाथा.) तायुमार् मोर् विर्कप्पोवर् तमप्पन्मार् कत्तानिरैप्पिन्बुपोवर् *
नी आयूप्पाडि इळङ्कन्निमार्गळै नेर्पडवे कोण्डुपोति *
कायूवार्कु एन्नुमुहप्पनवे शेयुदु कण्डार् कळरत्तिरियुम् *
आया उन्नै अरिन्दुकोण्डेन् उनकु अञ्जुवन् अम्मं तरवे ॥ ९ ॥

गृहरक्षणाय बालिकाः स्थापयित्वा जनन्यस्तक्रविक्रयणाय बहिर्निस्सरन्ति, पितरस्तु गोचारणाय गवां पृष्ठतो व्रजन्ति । तदात्वे कृष्ण ! त्वं व्रजयुवतीः स्वच्छन्दमन्यत्र नीत्वा रमसे । त्वयि मात्सर्यशालिनां जनानां सन्तोषावहमेव कृत्यवर्गं कुरुषे । अनुकूलानां निर्वेदकरस्सन् विचरसि हन्त ! गोविन्द ! त्वामहमभिवेद्मि, स्तन्यं ते दातुमहं चकिताऽस्मि ॥ .... .... .... .... (९)

(गाथा.) तोत्तार् पूम्कुळल् कन्नियोरुत्तियै शोलैत्तडं कोण्डु पुकु *
मुत्तार् कोङ्गै पुणर्न्दु इरानाळिगै सूवेलुशेत्तपिन् वन्दाय् *
ओत्तार्कु ओत्तनपेशुवर् उन्नै उरप्पवे नानोन्नुम् माट्टेन् *
अत्ता उन्नै अरिन्दुकोण्डेन् उनकु अञ्जुवन् अम्मं तरवे ॥ १० ॥

मम नाथ ! कुसुमालंकृतचिकुरप्रकरां कामपि कन्यकां ह्यो नक्तमुद्यानवनं नीत्वा मौक्तिकमालामण्डिते तस्या वक्षसि परिरम्भं च कृत्वा चतुर्थे यामे गृहमागतोऽसि, एतादृशकार्यकारिणं त्वामधिकृत्य तेते तथातथा नाम. प्रवदन्ति, अबलाऽहं त्वां शिक्षितुं न मनागपि प्रभवामि । त्वामहमज्ञासिषम्, स्तन्यं ते दातुमतिभीताऽस्मि ॥ (१०)

(गाथा.) कारार् मेनिनिरत्तेम्भिरानै कडिकमळ् पूम्कुललाचि *
आरा इन्नमुदुण्णत्तरुवन् नान् अम्मं तारेनेन्नमात्तम् *
पारार् तोल् पुहलान् पुतुवैमन्नन् पट्टर् पिरान् शोन्नपाडल् *
एरारिन्निशै मालै वल्लार् इरुडीकेशनडियारे ॥ ११ ॥

वर्षुकवलाहकसन्निभं कृष्णकिशोरमुद्दिश्य सुरभिकुसुमाञ्चितचिकुरबन्धया यशोदया पुरा प्रोक्तम्— "स्तन्यदाननिरताऽहम् अधुना स्तन्यं ते दातुं बिभेमि" इति; तदिदं यशस्विना भट्टनाथमुनीन्द्रेण तद्भावभावनया कथितम् । ता इमा गाथाः कीर्तयन्ति ये ते हृषीकेशभक्ताः । [इति फलश्रुत्या समापितमिदं दशकम् ] ॥ (११)

— एतद्दशकसारांशसंग्राहकश्लोक एषः —

श्रीकृष्णो बालकस्सन्नपि च बहुविधा दिव्यचेष्टास्तनोती-
त्येकैकस्मिन् क्षणेऽपि प्रचुरविभवया दृष्टवत्या जनन्या ।
हेकृष्ण! त्वामहं वेद्मचनुपमम् अथ ते स्तन्यदाने च भीता-
ऽस्मीत्युक्तं तत्तथैवाभिहितवति मुनौ विष्णुचित्ते रमेऽहम् ॥

इति श्रीभट्टनाथसूक्ते तृतीयशतकस्य प्रथमदशकं समाप्तम् ॥

॥ श्रीरस्तु ॥

## अथ द्वितीयं दशकम् - अञ्जनवण्णनै ॥

**अवतारिका**—श्रीकृष्णे स्वपुत्रत्वप्रतिपत्तिप्रहाणं परमात्मताप्रतिपत्तिद्रढिमानं च प्राक्तनदशके प्रकाशितवती यशोदा अथ तद्विस्मृत्य पुनरपि तस्मिन् पुत्रताधियमधिवहन्ती जात्युचिततया तं सुतं प्रभाते गोचारणार्थमरण्यं प्रति प्रेषितवती तदनु तद्विश्लेषमसहमाना भृशं दूयमाना व्रजवासकाले तेन तदातदा क्रियमाणानि स्थितानि धूर्तचेष्टितानि स्मृत्वा कथयित्वा च "हा हन्त व्रजे एवं नाम धूर्तकृत्यकरणेन विहर्तुमहं मम कुमारम् अतिकर्कशहृदयाऽहम् अतितीक्ष्णकण्टकसंचयपाषाणखण्डदन्तुरं काननं प्रापयम्! बतबत पापिनी खल्वहम्" इति स्वात्मानमतिमात्रमधिक्षिप्तवती । तदिदं निबध्यते दशकेऽस्मिन् तद्भावनाजुषा भट्टनाथमुनीन्द्रेण ॥

(गाथा.) अञ्जनवण्णनै आयर्कोलक्कोलुन्दिनै *
मञ्जनमाट्टि मनैकळ् तोरुं तिरियामे *
कञ्जनैकायॢन्द कळलडि नोव कन्निन्पिन् *
एन्शेय पिळ्ळैयैप्पोकिनेन् एल्लेपावमे ॥ १ ॥

अञ्जनसवर्णदिव्यगात्रं गोपालकृष्णं हा हन्त प्रत्यूषे स्नपयित्वा काननमहं प्रैषयम्, कंसप्रहारार्हदिव्य-पादतलं तदीयं कर्कशकाननसंचारेण व्यथां प्राप्नुयात् खलु; हा हन्त किमर्थमहं पापिनी तं प्रैषयम्, स तावदत्रैव स्थित्वा प्रतिगृहं प्रविश्य धूर्तचेष्टितानि यथा कुर्यात्तथा ह्यवकाशमप्रदाय हा बत काननं प्रेषितवती साऽहम्। (इति कथयन्ती यशोदा दूयते ॥) .... .... .... (१)

(गाथा.) पत्तु मज्जन्नु पूशि पावैमारोडु पाडियिल् *
शित्तिल् शिदैत्तेङ्गुम् तीमै शेय्दु तिरियामे *
कच्चुत्तूळियुडै वेडर्हानिडै कन्निनूपिन् *
एत्तुकेन् पिळ्ळैयै प्पोक्किनेन् एल्ले पावमे ॥ २ ॥

व्रजेऽस्मिन् मम गोपालकृष्णो हारिद्रालेपविभ्रासुरविग्रहस्सन् इतस्ततो ललनाभिस्सह विहरेत् खलु; सैकतसम्भभञ्ज-नादि धूर्तचेष्टितानि कुर्वाणो विचरेत् खलु, हा हन्त तदवकाशमप्रदाय गोधूलिशबलं व्याधसंचारघोरं विपिनं प्रति प्रैषयमहं तं गवां पृष्ठतः, हा हन्त! किमर्थमेवं कृतवती पापिन्यहम् ॥ .... (२)

(गाथा.) नन्मणि मेखलै नङ्गैमारोडु नाडोरुम् *
पोन्मणि मेनि पुळुदियाडि त्तिरियामे *
कन्मणि निन्नदिर् कानदरिडै कन्निनूपिन् *
एन्मणिवण्णनै प्पोक्किनेन् एल्ले पावमे ॥ ३ ॥

नवरत्नाञ्चितमेखलालंकृतललनाभिस्सह सदा विहरन् खलु वर्तेत व्रजे पांसुप्रदिग्धदिव्यकमनीयवपुः मम गोपालकृष्णः; तथा नाम विहर्तुमहं मणिविडम्बिदिव्यवपुषं वत्समहं पापिनी घोरध्वनिभयानकं विपिनं प्रापयं हन्त ॥ (३)

(गाथा.) वण्णकरुङ्गुळल् मादर् वन्दलर् तूत्तिड *
पण्णिप्पलशेय्दु इप्पाडियेङ्गुम् तिरियामे *
कण्णुक्किनियानै कानदरिडै कन्निन्पिन् *
एण्णर्करियानैप्पोक्किनेन् एल्ले पावमे ॥ ४ ॥

स्पृहणीयचिकुरप्रकरा ललनास्समागत्य यथा विविधानपवादान् कथयेयुस्तथा नाम बहूनि धूर्तचेष्टितानि कुर्वन् व्रजे सर्वत्र विचरेत् खलु नयनभोग्यवपुः कृष्णः; तथाविधानां विहाराणामवकाशमप्रदाय हा हन्त! अप्रमेयवैभवं तं कुमारमहं पापिनी वत्ससंचारणाय काननं प्रैषयम् ॥ ... .... .... (४)

(गाथा.) अव्वव्विडम् पुक्कु अव्वायर् पेण्डिर्क्कु अणुकनाय् *
कोव्वैक्कनिवाय् कोंडुत्तु क्कूलैमै शेय्यामे *
एव्वम् शिलैयुडै वेडर्कानिडैक्कन्निन्पिन् *
दैवत्तलैवनै प्पोक्किनेन् एल्ले पावमे ॥ ५ ॥

देवाधिदेवो मम कुमार इह व्रजे तत्र तत्र गत्वा गोपालबालिकानामन्तरङ्गप्रेमगोचरो भूत्वा स्वकीयबिम्बाधरमधु तासामास्वाद्यं प्रयच्छन् धूर्तचर्याश्चरेत् खलु; तथा नाम विहर्तुमवकाशमप्रदाय भयानकधनुर्धरव्याधवृन्दसनाथे कानने वत्सानां चारणाय पापिन्यहं प्रेषितवती हा हन्त ॥ .... .... (५)

(गाथा.) मिडरु मेळुमेलुत्तोड वेण्णेय् विळुङ्गिप्पोय् *
पडिरु पलशेय्दु इप्पाडियेङ्गुम् तिरियामे *
कडिरु पलतिरि कानदरिडैकन्निन्पिन् *
इडर एन्पिळ्ळैयैप्पोकिनेन् एल्ले पावमे ॥ ६ ॥

मम कुमारः परमभोग्यं नवनीतमास्वाद्य व्रज इह सर्वत्र पर्यटन् भूयांसि धूर्तचेष्टितानि कुर्वाणः खलु वर्तेत; हा हन्त! तथाविधानां विहाराणामवकाशमप्रदाय वन्यगजसंचारघोरं विपिनं प्रति खलु वत्सचारणेन श्रान्तिप्राप्तये प्रैषयमहं हा हन्त पापिनी ॥ .... .... .... .... (६)

(गाथा.) वळ्ळि नुडङ्गिडै मादर्वन्दलर्तूत्तिड *
तुळ्ळिविळैयाडि त्तोळरोडु तिरियामे *
कळ्ळियुणङ्गु वेङ्कानदरिडैकन्निन्पिन् *
पुळ्ळिन् तलैवनैप्पोकिनेन् एल्ले पावमे ॥ ७ ॥

गरुडध्वजो मम कुमारः अत्रैव व्रजे निवसन् वल्लीतुल्यवलग्नशालिनीनां मुखादपवादभाषितान्युत्पादयन् उच्छृङ्खलं क्रीडन् वयस्यैस्सह विचरेत् खलु; तदवकाशमप्रदाय अतिशुष्कतीक्ष्णकान्तारमार्गे खलु तं पापिन्यहं प्रैषयं धिग्माम् ॥ .... .... .... .... .... (७)

(गाथा.) पन्निरु तिङ्गळ् वयित्तिल्कोण्ड अप्पाङ्गिनाल् *
एन्निलम् कोङ्गै अमुदमूट्टि येडुत्तु यान् *
पोन्नडि नोवप्पुलरिये कानिल् कन्निन्पिन् *
एन्निळम् शिङ्गत्तै प्पोकिनेन् एल्ले पावमे ॥ ८ ॥

सिंहशावसमानं मम कृष्णकिशोरं द्वादशमासान् खल्वहं गर्भे धृतवती; तत्तादृशमहिमानुगुणतया स्तन्यदानेन तमिमं संवर्ध्य हा हन्त अद्य प्रभात एव कानने वत्सानां पृष्ठतः प्रैषयम्; हन्त तच्चरणव्यथामपि न व्यमृशं पापिन्यहम्, हा हन्त धिग्माम् ॥ .... .... .... .... (८)

(गाथा.) कुडैयुम् शेरुप्पुम् कोडादे दामोदरनै नान् *
उडैयुम् कडियन ऊन्नु वेम्परल्कळुडै *
कडियवेङ्कानिडै कालडि नोव कन्निन्पिन् *
कोडियेन् एन्पिळ्ळैयैप्पोकिनेन् एल्ले पावमे ॥ ९ ॥

हा हन्त मम कुमारमतिकर्कशाश्मखण्डसंकुलं काननं प्रेषितवती पापिन्यहं छत्रपादुका अपि हि न तस्मै प्रादाम्; अतिकठोरहृदया साऽहं तदीयपादबाधामप्यपरामृश्य गवां पृष्ठतो व्यगमयम्। हा बत धिङ्माम्॥ .... (९)

(गाथा.) एन्नुमेनक्किनियानै एन्नमणिवण्णनै *
कन्निन्पिन् पोक्किनेनेन्नु अशोदै कळरिय *
पोन्तिहळ्माड प्पुदुवैयर् कोन् भट्टन् शोल् *
इन्तमिळ् मालैहळ् वल्लवर्क्कु इडरिल्लैये॥ १०॥

मम सदा परमभोग्यं मणिवर्णं मम कुमारं हा हन्त वत्सानां पृष्ठतः काननं प्रैषयमिति दूयमानमानसया यशोदया यत्कथितं तत्तथैव कथयामास सौवर्णसौधाञ्चितश्रीधन्विनव्यनगराधिनाथो भट्टनाथो मुनिः; ता इमाः परमभोग्या गाथाः ये कीर्तयन्ति ते दुःखगन्धरहिता भवितारः। [इति फलश्रुत्या समापितमिदं दशकम्]॥ .... (१०)

— एतद्दशकसारांशसंग्राहकश्लोक एषः —

प्रत्यूषे बालकृष्णं मणिनिभवपुषं गोपजात्यर्हकृत्या-
नुष्ठानार्थं वनं प्रत्यतिकठिनहृदा प्रेषयन्त्या जनन्या।
पश्चात्तत्रत्यरूक्षस्थितिमपि बहुशस्संमृशन्त्या सखेदं
प्रालापीत्यूचिवान्मे मनसि विजयते विष्णुचित्तो महात्मा॥

पेरियाळ्वार्तिरुमोळि—तृतीयशतके द्वितीयं दशकमवसितम्॥

---

॥ श्रीरस्तु॥

## ॥ ३-३. अथ तृतीय दशकम्—शीलैक्कुदम्बै॥

अवतारिका—गोचारणार्थं वनं गतवान् कृष्णस्सायं व्रजं प्रतिनिववृते, तदात्वे मातुर्यशोदाया यानि बभूवुरद्भुतभाषितानि तानि दशकेऽस्मिन् अतिरमणीयप्रक्रियया निबध्यन्ते विष्णुचित्तमुनिवरेण तद्भावभावनाजुषा॥

(गाथा.) शीलैक्कुदम्बै ओरुकादोरुकादु शेन्निर मेल्तोन्निप्पू *
कोलप्पणैक्कच्चुम् कूरैयुडैयुम् कुळिर्मुत्तिन्कोडालमुम् *
कालिप्पिन्ने वरुकिन्न कडल्वण्णन् वेषत्तै वन्दु काणीर् *
ञालत्तुप्पुत्तिरनैप्पेत्तार् नङ्गैमीर् नाने मत्तारुमिल्लै॥ १॥

वामकर्णाभरणमन्यत् दक्षिणकर्णाभरणमन्यदित्येवं रीत्या वैजात्येनार्पितं कर्णभूषणमुद्वहन् रमणीयनीवीबन्धाञ्चित-चारुवस्त्रं वसानो मौक्तिकग्रैवेयकालंकृतो मदीयः पुत्रो मुकुन्दो गोगणानां पृष्ठत आयाति भोः सख्यः!; चक्षु-ष्मत्यस्सर्वास्समागत्य वीक्षध्वम्। सत्यं वच्मि; अहमेकैव भुवने प्रसूतपुत्राऽस्मि; मद्व्यतिरिक्तास्सर्वा अपि ललना वन्ध्या एव, न संशयः॥ .... .... .... .... (१)

(गाथा.) कन्निनन्मामदिळ् शूळ्तरु पूम्बोलिल् काविरित्तेन्नरङ्गम् *
मन्नियशीर् मदुशूदना केशवा पावियेन् वाळ्वुहन्दु *
उन्नै इळङ्कन्तु मेय्क शिरुकाले यूट्टटि ओरुप्पडुत्तेन् *
एन्निल् मनं वलियाळ् ओरुपेणूइलै एन्कुट्टने मुत्तंता ॥ २ ॥

शाश्वतप्राकारपरिवेष्टितं रम्योपवनपरिवृतसद्मजालंकृतं श्रीरङ्गक्षेत्रमधिशयान! श्रीमन्मधुसूदन केशव, पापिन्यहं गोसंचारणफलभूते जीवने कामनया त्वां प्रत्यूष एव भोजयित्वा वत्सानां पृष्ठतः प्रयाहि वत्सेत्यकथयम्; त्वद्विरह-व्यसनसहनसामर्थ्यशालिनी कठिनहृदया मत्तः काचिदन्या वनिता नैवास्ति भुवने; वत्स! देहि मह्यमधरसुधाम् ॥ .... .... .... .... .... (२)

(गाथा.) काडुहळूडु पोय् कन्नुहळ् मेयूत्तु मरियोंडि * कार्कोंडल् पू-
च्चूडि वरुकिन्न दामोदरा कत्तुत्तूळिकाणू उन्उडम्बु *
पेडैमयिल् शायल् पिन्नैमणाळा! नीराट्टमैत्तु वैत्तेन् *
आडि अमुदुशेयू अप्पनुमुण्डिलन् उन्नोडुडनेयुण्बान् ॥ ३ ॥

बहुकाननमध्ये पर्यटन् विविधललितसंचारैर्वत्सानां चारणं कृत्वा वन्यकुसुमान्यवतंसपदे निधाय समागच्छन् दामोदर! गोधूलिधूसरितं हि ते गात्रम्; शिखिनीसच्छायनीलादेवीवल्लभ! स्नानीयं सज्जीकृतवती वर्तेऽहम्; स्नात्वा भुङ्क्ष्व; त्वया सह भोक्तुकामस्तव तातोऽपि नाभुङ्क्त ॥ .... .... (३)

(गाथा.) कडियार् पोलिलणि वेङ्कडवा करुम्पोरेरे * नीयुकक्कुम्
कुडैयुम् शेरुप्पुम् कुळलुम् तरुविक्क कोळ्ळादे पोनाय् माले *
कडिय वेङ्कानिडै कन्निन्पिन्पोन शिरुक्कुट्टचेङ्कमल
अडियुम्वेदुम्बि * उन् कण्कळ् शिवन्दाय् अशैन्दिट्टाय् नी एम्पिरान् ॥ ४ ॥

सौरभसंभृतोद्यानपरिवृतश्रीवेङ्कटाद्रीश्वर! नीलवर्ण समरपुङ्गव! मुग्धकृष्ण भगवन्! त्वदीयस्पृहाविषयभूतच्छत्रपाद-त्राणमुरलीस्त्वमगृहीत्वैव हन्त वनं गतोऽसि; अतिकर्कशकानने गवां पृष्ठतो गतवतो बालकस्य तव पादारविन्दे हन्त! परितप्ते; नयने च तव रक्ते अभूताम्; हा बत म्लानतनुश्चासि ॥ .... (४)

(गाथा.) पत्तार् नडुङ्ग मुन् पाञ्चशन्नियत्तै वाय्वैत्तपोरेरे * एन्
शित्तायर् शिङ्गमे शीदैमणाळा शिरुक्कुट्टचेङ्गणूमाले *
शित्ताडैयुम् शिरुप्पत्तिरमुम् इवै कट्टिलिन्मेल् वैत्तुप्पोय् *
कत्तायरोडु नी कन्नुहळ् मेय् त्तु कलन्दुडन् वन्दाय् पोलुम् ॥ ५ ॥

पाञ्चजन्यनिनदेन वैरिव्रातावलेपलोपनकुशल रणपुङ्गव! मदीयगोपालसिंह! सीतापते! अर्भक पुण्डरीकाक्ष!, त्वं तु प्रभाते गमनत्वरया शाटीं छुरिकां च खट्वायां निधाय गतवानसि; तत्र गोपालबालकैस्सह गाश्चारयित्वा तैस्सह संप्रति समागतोऽसि ननु ॥ .... .... .... .... (५)

(गाथा.) अञ्जुडराळि उन्कैयहत्तेन्दुम् अळहा नी पोय्हैं पुक्कु *
नञ्जुमिळ् नागत्तिनोडु पिणङ्गवुम् नान् उयिर्वाळ्न्दिरुन्देन् *
एन्शेय्य एन्नै वयिरु मरुकिनाय् एदुमोरच्चमिल्लै *
कञ्जन् मनत्तुक्कु उहप्पनवे शेय्दाय् कायाम्बू वण्णम् कोण्डाय् ॥ ६ ॥

चक्रपाणे सुन्दरकृष्ण ! त्वं कालियविषधरविषदूषितं ह्रदं प्रविश्य तेन भुजङ्गमेन सह स्पर्धां चकर्थ ! हन्त प्राणापायशङ्काबीजमीदृशं साहसं त्वया कृतमाकर्ण्यापि प्राणान् धारयामि खल्वहमतिकठोरचेताः । अस्त्वेतत्; अतसीकुसुमसुकुमार अर्भक, एवंविधैस्तावकैस्साहसैः कंसस्य हृदि महीयानानन्दो हि जायते; ययाकयाऽपि विधया अत्याहितं ते प्रतीक्षमाणस्य तस्य संतोषं मम च निर्वेदं जनयन् हन्त किमर्थमेवं चेष्टसे ? .... (६)

(गाथा.) पन्निरुमामैयुम् मीनमुमाहिय पार्कडल्वण्णा उन्मेल् *
कन्निनुरुवाहि मेय्पुलत्ते वन्द कळ्ळवशुरन्तन्नै *
शेन्नु पिडित्तु चिरुक्कैहळाले विळङ्गायेरिन्दाय् पोलुम् *
एन्नुम् एन्पिळ्ळैक्कुत्तीमैहळ् शेय्वार्हळ् अङ्ङनमावर्क्कळे ॥ ७ ॥

दिव्यवराहकमठमत्स्याद्यवतारकारिन् ! क्षीरसागरसवर्ण कृष्ण ! कंसप्रेरितो दैत्यः कोऽपि वत्सरूपी सन् विपिने समागत इव; तमुद्धृत्य त्वं कपित्थोपरि क्षिप्तवानिव; एतदपि ते सुमहत्साहसम् । अस्तु तत्; भो लोकाः ! वत्सासुरः कपित्थासुरश्चेत्युभाविमौ कृतसंकेतौ खलु समागतौ मत्पुत्ररत्नप्राणापायचिकीर्षया; एवमन्येऽपि येये दौरात्म्यं वहन्ति, क्षणेन ते वत्सकपित्थायोर्गतिमेव लभन्ताम् ॥ .... .... (७)

(गाथा.) केट्टरियादन केट्किन्रेन् केशवा कोवलरिन्दिरक्कु *
काट्टिय शोरुम् करियुम् तयिरुम् कलन्दुडनुण्डाय् पोलुम् *
ऊट्ट मुदलिलेन् उन्तन्नैकोण्डु ओरुपोदुम् एनक्करिदु *
वाट्टमिलाप्पुहळ् वासुदेवा उन्नैयञ्जुवन् इन्नुतोट्टुम् ॥ ८ ॥

वत्स केशव ! इयता कालेन मया कुत्राप्यनाकर्णितां कामपि चर्यां हन्ताद्य श्रृणोमि; यथासमुदाचारं गोपालकैर्वासवाय समर्पितं दधिघृतदुग्धशाकसूपान्नादिकमशेषं त्वमेकाकी क्षणमात्रे अशितवानिव; एवं नाम पृथुतरोदरभरितं त्वामहं कथमिवभोः प्राशयेयम् ? अन्यादृश इव ते कुक्षिरधोक्षज ! त्वदीयैतादृशविचित्रविचेष्टितश्रवणतः प्रभृति अहह ! भृशमहं चकिताऽस्मि ॥ .... .... .... (८)

(गाथा.) तिण्णार् वेण् शङ्गुडैयाय् तिरुनाळ् तिरुवोणमिन्रेळुनाळ् * मुन्
पण्णेर् मोळियारैक्कूवि मुळैयट्टि पल्लाण्डु कूरुवित्तेन् *
कण्णालं शेय्य करियुमू कलत्तदरिशियुमाक्किवैत्तेन् *
कण्णा नी नाळैत्तोट्टु कन्निन् पिन्पोहेल् कोलम्शेय्दु इङ्गेयिरु ॥ ९ ॥

शत्रुनिरसननिपुणनिनदभरितपाञ्चजन्यपाणे कृष्ण ! इतस्सप्तमेऽहनि श्रोणानक्षत्रोत्सवस्ते भविता; एतदर्थमद्य सर्वा अपि गोपीस्समाहूय अङ्कुरारोपणमहोत्सवं मङ्गलाशासनगाथापारायणसनाथमकारयम्। प्रस्तुतशुभकार्यनिर्वहणाय शाकतण्डुलादिकं च भाण्डसंभृतमकरवम्। अतस्त्वं श्वःप्रभृति मास्म गच्छः काननं प्रति; सर्वथा विधेयस्सन् इहैव वर्तेथाः प्रियपुत्ररत्न गोविन्द ! ॥ .... .... .... (९)

(गाथा.) पुत्तरवल्कुल् अशोदै नल्लाय्चि तन्पुत्तिरन् गोविन्दनै *
कत्तिनम् मेय्त्तु वरकण्डुहन्दु अवळ् कर्पित्त मात्तमेल्लाम् *
शेत्तमिलादवर् वाल्तरु तेन्पुदुवै विष्णुचित्तन् शोल् *
कत्तिवै पाड वल्लार् कडल्वण्णन् कळलिणै काण्बर्हळे ॥ १० ॥

अतिसुभगनितम्बशालिनी यशोदा, गोसंचारणकृत्यं परिसमाप्य सायं समायातं स्वपुत्रं गोविन्दं समीक्ष्य सन्तुष्य यद्यदूचे तत्सर्वं श्रीविष्णुचित्तो दिव्यसूरिस्तद्भावभावनया प्राह; ता इमा दिव्यगाथा ये कीर्तयन्ति ते भगवत्पादयुगलनित्यसेवानिरतास्स्युः। [इति फलश्रुत्या समापितमिदं दशकम्] ॥ .... (१०)

— एतद्दशकसारांशसंग्राहकश्लोका अमी अष्टौ —

वृन्दारण्ये वयस्यैस्सह बहुलतरान् गोगणांश्चारयित्वा
सायं कृष्णस्समायात्यनुपमसुषमः पृष्ठतो गोगणानाम्।
वन्यालंकारधन्यं तमिममनुकलं वीक्षमाणा यशोदा
सानन्दं यद्यदूचे तदिदमनिशमावर्तते मानसे मे ॥ १ ॥

वैलक्षण्येन कर्णाभरणमुपवहन् चारु वासो वसानः
मुक्तास्रग्भूषणाढ्यो मम तनयवरः पृष्ठतो गोगणानाम्।
आयातीक्षध्वमेतं नयनशतसहस्रावलोकार्हवेषं
सत्यं सर्वाः स्त्रियोऽस्मिन् जगति मदितरा हन्त वन्ध्या हि सख्यः ! ॥ २ ॥

कल्ये प्रोत्थाप्य कृष्णं प्रियसुततिलक ! त्वामहं भोजयित्वा
वत्सानां चारणार्थं सुकठिनहृदया प्रैषयं प्रत्यरण्यम्।
छत्रं पादूं च नादां किमहमकरवं बुद्धिहीना वराकी
तत्र क्लेशानुभूतीस्तव तु बहुविधाश्चिन्तयन्ती विदूये ॥ ३ ॥

म्लाने पादारविन्दे, नयनकमलमप्याप भूयोऽरुणत्वं
श्रीमन् गोविन्द ! तेऽभूद्वपुरपि बहुशो गोरजोभिः परीतम्।
स्नानीयं सुष्ठु सज्जीकृतमिह, कलितस्नान आयाहि भोक्तुं
साकं कृष्ण ! त्वयैवाशितुमुपवसति प्रेमधन्यः पिता ते ॥ ४ ॥

वत्स ! श्रीकृष्ण ! दामोदर जलदरुचे यामुने नीरपूरे
तुङ्गात्कुन्दान्निपत्योरगशिरसि चकर्थातिघोरं हि युद्धम् ।
हाहन्तैतन्निशम्याप्यहमिह न लभे जीवितस्य व्यपायं
कस्मात् कंसस्य चित्ते मुदमुपजनयन् क्रीडसीत्थं कठोरम् ॥ ५ ॥

वत्सात्मा कोऽपि दैत्यस्समुपगत इवारण्यकोणे तमेनं
प्रोद्धृत्य त्वं कपित्थे व्यसृज इति कथा काचिदाकर्णिता भोः ।
सद्यस्सत्यं शपेऽहं मम तनयमणेर्ये सृजन्त्यापदस्ते
सोऽयं वत्सः कपित्थोऽप्यलभत यदहो तच्छमेरन् क्षणेन ॥ ६ ॥

लोके कुत्राप्यनाकर्णितमिह किमपि श्रूयते साद्य कृष्ण !
प्रत्तं गोपैर्मघोने दधि घृतमखिलं शाकसूपान्नमिश्रम् ।
निश्शेषं त्वं समाश्ना इति, ननु भगवन् प्राशयेयं कथं त्वाम्
अद्यारभ्यातिभीताऽस्म्यहह मधुरिपो कुक्षिरन्याद्दशस्ते ॥ ७ ॥

कृष्ण ! श्रोणोत्सवस्ते सुतवर ! भविता सप्तमेऽह्न्येतदर्थं
सर्वासां वल्लवीनां पुर इह विदधाम्यङ्कुरारोपणं च ।
तस्मान्मा याह्यरण्यं परदिनत इहैवावतिष्ठस्व भव्यो
गोविन्देत्याह माता तदिदमभिदधद्विष्णुचित्तोऽतिधन्यः ॥ ८ ॥

श्रीभट्टनाथसूक्ते तृतीयशतकस्य तृतीयदशकं समाप्तम् ॥

---

॥ श्रीरस्तु ॥

## ॥ ३-४. अथ चतुर्थं दशकम् — तळैहलुं तोङ्गलुम् ॥

**अवतारिका**—अधस्तनदशके नवमगाथायां यशोदया कथितं खलु—'प्रियपुत्ररत्न गोविन्द ! त्वं श्वः प्रभृति मास्म गच्छः काननं प्रति; सर्वथा विधेयस्सन् इहैव वर्तेथाः' इति । तां मातुराज्ञामनुसृत्य कृष्णः श्रोणोत्सवावसानपर्यन्तं (सप्तदिनानि) स्वगृह एव स्थितवान् । अथ यथापूर्वं गोसंचारणाय काननं प्रति गत्वा तत्र गोसंचारणजनितहर्षप्रकर्षेण स्वात्मानं विविधैरतिरमणीयैरलङ्कारैरलङ्कृतं कृत्वा परममधुरमुरलीनिनदसनाथं विविधानि गीतानि च कुर्वन् स्वकीयैरपरिमितैर्वयस्यैस्सह वृन्दशो व्रजं प्रति निवर्तते ; तदात्वे अस्य अस्पृष्टचिन्तापदमाभिरूप्यमवेक्ष्य गोपाङ्गना अतिमात्रं व्यामोहमवापुरित्यमुं विषयं भगवान् विष्णुचित्तो मुनिवरस्तासां भावनया भाषते दशकेऽस्मिन् । अत्र प्रथमगाथा केवलं स्ववाचा निबध्यते ॥ *

(गाथा.) तळैहल्लुम् तोङ्गलुम् ततुम्बि एङ्गुम् तण्णुमै एकम्मत्तळि ताळ्पीलि *
कुळल्हल्लुम् गीतमुमाहि एङ्गुम् गोविन्दन् वरुहिन्र कूट्टम् कण्डु *
मळैकोलो वरुहिन्रदेन्नु शोल्लि मङ्गैमार् शालहवाशल् पत्ति *
नुळैवनर् निर्पनराहि येङ्गुम् उळ्ळम्विट्टु ऊण् मरन्दोळिन्दनरे ॥ १ ॥

विविधानि वर्हिवर्हातपत्राणि परितः प्रकाशन्ते, मृदङ्गमद्दलादिवाद्यनिनदश्च श्रुतिसुभगो विजृम्भते। पिञ्छविनिर्मितानि व्यजनानि च वहूनि विराजन्ते; मुरलीनिनदगानध्वनिविशेषाश्च सर्वत्र प्रसृमरा मनांसि हरन्ति; एतादृशेनाद्भुतसन्निवेशेन सह गोविन्दो भगवान् सुमहत्तरवालवृन्दान्वितस्समायाति काननात्, तामिमां दृष्टिचित्तापहारिणीं गोष्ठीमवलोक्य व्रजयुवतयः 'किमहो! जीमूतपोत एव धरायां समायाति' इत्युल्लिखन्त्यः गवाक्षान्तिकेऽवतिष्ठमानाः व्यामोहातिशयेन वहिस्समागच्छन्त्यः, गुरुजनभीत्या स्तब्धाश्च भूत्वा श्रीकृष्णयात्रोत्सवे तस्मिन्नेव चित्तं समर्प्य अशनमपि व्यस्मरन्नहह ॥ .... .... .... .... (१)

(गाथा.) वळ्ळि नुण्णिदळन्न आडैकोण्डु वशैयर त्तिरुवरै विरित्तुडुत्तु *
पळ्ळिनुण् पत्ताह उडैवाळ् शात्ति पणैक्कच्चुन्दि प्पलतळैनडुवे *
मुल्लैनल् नरुमलर् वेङ्गैमलरणिन्दु पल्लायर् कुळाम्नडुवे *
एल्लियम्पोदाह प्पिळ्ळै वरुम् एदिर्निन्नु अङ्गिनवळै इळवेन्मिने ॥ २ ॥

नन्दनन्दनः कृष्णो भगवान् कल्पकवल्लीसमुत्थसुकुमारदलसदृशं दिव्यं वसनं वसानः तद्वस्त्रोपरि नीवीवन्धालङ्क्रियां च दधानः तदुपरि छुरिकां च सुदृढं विभ्राणः वन्यकुसुमविनिर्मितां मालां वक्षसि धारयन् परस्सहस्रगोपालवालकगोष्ठीमध्ये विविधवर्हातपत्रच्छायायां सायं समायाति वीथ्यामस्याम्; अयि भो गोपालवालिकाः! तत्पुरतः स्थित्वा मा नाम व्यथामनुभवत। (इति काचन ललना अन्या ललनाः प्रति कथयति॥) .... (२)

(गाथा.) शुरिहैयुम् तेरिविल्लुम् शेण्डुकोलुम् मेलाडैयुम् तोळनुमार् कोण्डोड *
ओरुकैयाल् ओरुवनृतन् तोळैयून्नि आनिरैयिनम् मीळ क्कुरित्त शङ्गम् *
वरुहैयिल् वाडिय पिळ्ळै कण्णन् मञ्जळुम् मेनियुम् वडिवुम् कण्डाळ् *
अरुहे निन्राळ् एन्पेण् नोक्किकण्डाळ् अदुकण्डु इव्वूरोन्नु पुणर्किन्रदे ॥ ३ ॥

कृष्णस्य सखायो वालकाः छुरिकां धनुर्लतां लीलायष्टिम् उत्तरीयं च अपेक्षासमयेषु कृष्णाय दातुं हस्ते धारयन्तस्सन्तः अनुसरन्ति; कृष्णस्तु स्वकीयेनैकेन पाणिना प्राणनिर्विशेषस्य कस्यचिद्वयस्यस्य भुजमवलम्बमानः, अन्येन पाणिना गोवृन्दाह्वानसाधनं शङ्खं गृह्णन् व्रजं प्रति निवर्तते; तदात्वे तस्य कृष्णकिशोरस्य ग्लानिरम्यां हरिद्रालिप्तां च तनूं मम दुहिताऽद्राक्षीत्; तद्दिव्यावयवलावण्यं चापश्यत्, अथ तस्य समीपतश्च गत्वा अतिष्ठत्। तदनु अपूर्ववस्तुविलोकनविस्मयभूम्ना सोत्कण्ठं चापश्यत्। तदिदमवलोकितवन्तो व्रजस्थास्सर्वेऽपि तस्य चास्याश्च विलक्षणः कोऽपि प्रेमवन्धो वर्तत इति हन्त कल्पयितुमुपचक्रमिरे। (इति कस्याश्चन गोपालवालिकाया जननी कथयति) ॥ .... .... .... .... (३)

(गाथा.) कुन्नेडुत्तु आनिरै कात्तपिरान् कोवलनाय् कुळलूदियूदि *
कन्नुहळ् मेय्नुत्तन् तोळरोडु कलन्दुडन् वरुवानै त्तेरुविल् कण्डु *
एन्नुमिवनै योप्पारै नङ्गाय् कण्डरियेन् एडि वन्दु काणाय् *
ओन्नुम् निल्ला वळै कळन्नु तुहिलेन्दिळमुलैयुम् एन् वशमल्लवे ॥ ४ ॥

गोवर्धनाद्रिसमुद्धरणेन संरक्षितगोबृन्दो मृदुमधुरमुरलीनिनदं मुहुर्मुहुः कुर्वन् वत्सान् चारयित्वा स्वकीयैर्वयस्यैस्समेतस्सन् वीथ्यां समायाति, अयि प्रियसखि ! एतादृशममिरूपं कुमारं नाहं कदाऽपि कुत्रापि दृष्टवती, आः ! किमिति त्वमन्तरवतिष्ठसे ; बहिरत्रागत्य साधु समवलोकय । शृणु सखि मम दशाम् ; कृष्णकिशोरस्यास्य दर्शनसमक्षण एव सर्वाङ्गीणं कार्श्यमहमनुभवामि ; कुचौ च मे न स्वाधीनौ तिष्ठतः । (इति काचन गोपाङ्गना कथयति) ॥ .... .... .... .... .... (४)

(गाथा.) शुत्तिनिन्नु आयर् तळैहळिड शुरुट्पङ्गि नेत्तिरत्तालणिन्दु *
पत्तिनिन्नायर् कडैत्तलैये पाडवुमाडक्कण्डेन् * अत्तिप्पिन्
मत्तोरुवर्क्केन्नैप्पेशलोट्टेन् मालिरुम्शोलै एम्मायर्क्कल्लाल् *
कोत्तन्नुक्कित्वळामेन्नेण्णि कोडुमिन्गळ् कोडीराहिल् कोळम्बमे ॥ ५ ॥

गोपालबालकाः परितः स्थित्वा बर्हिबर्हातपत्राणि धारयन्ति, कृष्णस्तु स्वकीयमलकबन्धं पिञ्छावतंस परिकर्मितं कृत्वा गोपालबालगोष्ठ्यां पुरतः स्थित्वा गानविशेषान् नृत्तविशेषांश्च कुर्वन् समायाति, अयमेव 'तिरुमालिरुञ्शोलै' समाख्यातवनाद्रिक्षेत्रपतिरिति कथयन्ति । इममन्तरेण नान्यं कमप्यहं भर्तृपदे कल्पयेयम् । 'इयमस्यैव जाया भूयात्' इति संकल्प्य मां तस्मै कृष्णाय प्रयच्छत ; अन्यथा तु ध्रुवं महती मनोवैयाकुली स्यात् । (इति काचन गोपाङ्गना कथयति) ॥ .... .... .... .... (५)

(गाथा.) शिन्दुरमिलङ्ग तन्तिरुनेत्तिमेल् तिरुत्तिय कोरम्बुम् तिरुक्कुळलुम् *
अन्दरमुळवत्तण् तळैक्काविन्कीळ् वरुमायरोडु उडन्वळैक्कोल्वीशा *
अन्दमोन्निल्लाद आयप्पिळ्ळै अरिन्दरिन्दु इव्वीदि पोदुमाहिल् *
पन्दुकोण्डानेन्नु वळैत्तुवैत्तु पवळवाय् मुरुवलुम् काण्बोम् तोळी ॥ ६ ॥

अयि सखि ! स्वकीये ललाटे सिन्दूरालंकारं दिव्यतिलकं च बिभ्राणः विलक्षणचिकुरबन्धपरिकर्मितः व्योमस्पृशं वाद्यनिनदमुज्जृम्भयन् सुशीतलबर्हातपत्रच्छायायां स्वमित्रवृन्दैस्सह लीलायष्टिमुत्क्षिपन् कृष्णस्समायाति ; निरवधिकसौन्दर्याञ्चितस्सोऽयं गोपालकृष्णः मदीयमुत्कण्ठातिशयं स्वस्य तदभावं च विदित्वाऽपि यद्यस्यां वीथ्यामागन्ता, अयमस्मदीयकन्दुकचोर इति कमप्यवादमुत्पाद्य मार्गरोधं कृत्वा तदीयं विद्रुमनिभमधरं मन्दस्मितं च निरीक्षिषीमहि । (इति काचन वल्लवी स्वसखीमाह) ॥ .... .... .... (६)

(गाथा.) शालप्पल् निरैप्पिन्ने तळैक्काविन्कीळ् तन्तिरुमेनि निन्नोलि तिहळ *
नीलनन्नरुञ्जि नेत्तिरत्तालणिन्दु पल्लायर् कुळाम् नडुवे *
कोलच्चेन्दामरैकण् मिळिर कुळलूदि यिशैपाडिक्कनित्तु * आयरोडु
आलित्तुवरुहिन्न वायप्पिळ्ळै अळगुकण्डु एन्महळयर्क्किन्नदे ॥ ७ ॥

असंख्येयगोवृन्दपृष्ठभागे बर्हातपत्रच्छायायां स्वकीयदिव्यवपुस्सुषमामवभासयन् स्वकीयं सौगन्ध्याञ्चितं मेचककुन्तलबन्धं पिञ्छाञ्चितमारचय्य बहुगोपालवृन्दमध्ये स्वकीयं पुण्डरीकाक्षत्वं प्रकाशयन् सन् मुरलीनिनदं तदनुरूपगीतध्वनिम् तदनुगुणनर्तनं च वितन्वन् कृष्णकिशोरस्समायाति खलु। हा तस्य दिव्यसौन्दर्यमवलोक्य मम दुहिता व्यामुह्यति। (इति काचन वृद्धा गोपी वदति)॥ .... .... .... (७)

(गाथा.) शिन्दुरप्पोडिक्कोण्डु शेन्नियप्पि त्तिरुनाममिट्टङ्गोरिलैयन्तन्नाल् *
अन्दरमिन्नित्तनेरिपङ्क्तियै अळगिय नेत्तिरत्तालणिन्दु *
इन्दिरन्पोल् वरुमायप्पिळ्ळै एदिर्निन्नङ्ङिनवळै इळवेलेन्न *
शन्दियिल्निन्दु कण्डीर् नङ्गै तन् तुहिलोडु शरिवळै कळल्किन्नदे॥ ८॥

स्वकीयं मस्तकं सिन्दूरचूर्णपरिकर्मितमाकलय्य, ऊर्ध्वपुण्ड्रं च धृत्वा चिकुरबन्धमभिरामपिञ्छावतंससनाथं कृत्वा साक्षाद्देवेन्द्र इव गोपालकृष्णस्समायाति; तत्पुरतः अवस्थाने सति वपुषः कार्श्यमेव भवेत्, अतस्तत्रावस्थानं नोचितमित्युक्तवतीं मामनादृत्य हन्त मम दुहिता व्यामोहभूम्ना तत्रैवावस्थाय प्रच्युतसर्वस्वा ताम्यति बत। (इत्यन्या काऽपि गोपाङ्गना गदति।)॥ .... .... .... .... (८)

(गाथा.) वलङ्कादिन् मेल् तोन्निप्पू वणिन्दु मल्लिहै वनमालै मौवल्मालै *
शिलिङ्गारत्ताल् कुळल्ताळविट्टु त्तीङ्गुलल् वायुमडुत्तूदियूदि *
अलङ्कारत्ताल् वरुमायप्पिळ्ळै अळगुकण्डु एन्महल् आशैप्पट्टु *
विलङ्गिनिल्लादेदिर् निन्नु कण्डीर् वेळ्वळै कळन्नु मेय्म्मेलिहिन्नदे॥ ९॥

दक्षिणकर्णे वन्यकुसुमविशेषालंकारमारचय्य, वक्षसि वनमल्लिकाकुसुमं च धारयित्वा अतिसुन्दरान् कुन्तलान् अंसावलम्बिनः कृत्वा मुहुः परममधुरमुरलीगानमुत्पाद्य सुचारु समागच्छतो गोपालकृष्णस्य अस्पृष्टचिन्तापदमाभिरूप्यमवलोक्य समुत्कण्ठिता मम दुहिता हा हन्त अभिमुखी स्थिता सती प्रच्युतकरवलया कार्श्यमनुभवति। (इति काचन गोपी कथयति।)॥ .... . .... .... .... (९)

(गाथा.) विण्णिन्मीदु अमरर्हळ् विरुम्बित्तोळ मिरैत्तायर्पाडियिल् वीदियूडे *
कण्णन् कालिप्पिन्ने एळुन्दरुळक्कण्डु इळवायुक्कन्निमार् कामुत्त
वण्णम् * वण्डमर्पोळिल् पुदुवैयर्होन् विष्णुचित्तन् शोन्न मालैपत्तुम् *
पण्णिन्बम् वरप्पाडुम् भक्तरुळ्ळार् परमान वैकुन्दम् नण्णुवरे॥ १०॥

दिव्ये धाम्नि नित्यसूरिषु सदा सेवमानेषु सत्स्वपि तान् वञ्चयित्वा व्रजमुपगम्य गोपालवीथिकायां गवां पृष्ठतस्समागच्छन्तं गोपालकृष्णमवेक्ष्य गोपालबालिका व्यामुह्यन्ति स्मेत्यमुं विषयमधिकृत्य, भृङ्गझंकारसंकुलदिव्योद्यानपरिवृतश्रीधन्विनव्यपुराधिनाथविष्णुचित्तमुनिवरेण प्रोक्ता इमा दिव्यगाथास्सानन्दं ये गायन्ति भक्तास्ते श्रीवैकुण्ठप्राप्तिभाग्यभाजस्स्युः; [इति फलश्रुत्या समापितमिदं दशकम्]॥ .... .... (१०)

— एतद्दशकस्य सारांशसंग्राहका अमी श्लोकाः —

नानाबर्हातपत्रैस्सह सह च गवां भूरिवृन्दैर्दिनान्ते
सानन्दं गोकुलं प्रत्युपगतमुचितालङ्कृियं नन्दसूनुम् ।
दर्शंदर्शं विमुग्धैर्व्रजयुवतिगणैर्यत्कृतं पारवश्यात्
यच्च प्रेम्णाऽभ्यधायि प्रणिहितमनसां योगिनामप्यगम्यम् ॥ १ ॥

कट्यां कृष्णस्य भातं किसलयरुचिरं कोमलं दिव्यवस्त्रं
तस्योर्ध्वं खड्गबन्धो दृढतरघटितस्तत्र पट्टोपबन्धः ।
वन्यालङ्कारधन्या तनुरुचिरतुला गोपबालौघमध्ये
सायं सोल्लासयानं कथमिदमधुना मादृशां चिन्तनार्हम् ॥ २ ॥

लीलायष्टिं कृपाणं धनुरतिकमनीयोत्तरीयं च मित्रे-
ष्वादायाग्रे प्रयातेष्वथ परमसुहृद्दलमंसेऽवलम्ब्य ।
आयान्तं नन्दसूनुं बत मम तनया वीक्ष्य सौन्दर्यमग्ना
गाढं दृष्ट्वा च पार्श्वे न्यविशत, जनताश्चक्षतेऽलापवादम् ॥ ३ ॥

हाहा नाहं कदाऽपीदृशसुभगतनुं प्रैक्षिपीत्याह काचित्
नाहं चेदस्य भार्या न खलु मम भवेज्जीविताशेति काचित् ।
काचिद्ब्रूते स सोऽयं यदि मम भवनप्रान्तमायाति तर्हि
प्रोच्य स्तेयं परीत्य प्रसभमथ निरीक्षेय वद्वक्त्रहासम् ॥ ४ ॥

सर्वालङ्काररम्यस्सकलजनमनोहारिरूपोऽत्र गोपः
कश्चित्सोल्लासमायात्यमुमिह सुभगे मास्म दर्शः कथञ्चित् ।
इत्युद्घोषे कृते सत्यपि मम दुहिता तस्थुषी चत्वराग्रे
प्रापत्कार्श्यं क्षणेनेत्यचकथदतिनिर्वेदतः काऽपि वृद्धा ॥ ५ ॥

सालङ्कारं सवेणुध्वनिरचनमुपायाति कृष्णे सुता मे
तिष्ठन्त्यग्रेऽविवेकादभजत सहसा प्रच्युतिं कङ्कणानाम् ।
इत्यूचे काऽपि गोपीत्यतिमधुरवचोराशिभिर्गोपकन्या-
प्रेमावेशं मुकुन्दे विशदमभिदधद्विष्णुचित्तस्सुधन्यः ॥ ६ ॥

इति श्रीभट्टनाथसूक्ते तृतीयशतकस्य चतुर्थं दशकं समाप्तम् ॥

॥ श्रीरस्तु ॥

# ॥ ३-५. अथ पञ्चमं दशकम्—अट्टुक्कुविशोत्तु ॥

अवतारिका—व्रजे प्रतिसंवत्सरं महेन्द्रपूजां निर्वर्तयन्तो गोपालास्तदर्थं पुरस्तादेव बहुशकटपरिमित-शाकसूपादिसमेतबृहदन्नकूटसज्जीकरणे प्रवर्तन्ते ; एवं नाम बहोः कालात् प्रचलति। एकस्मिन् वत्सरे तु कृष्णस्त-दिदमन्नकूटसज्जीकरणमवलोक्य किमप्यजानन्निव तान् गोपानप्राक्षीत्—किमर्थमेवमपरिमितान्नसन्नाहः क्रियत इति। पृष्टाश्च ते प्रत्यूचुः 'वत्स कृष्ण! किं न जानासि त्वम्? प्रतिसंवत्सरं खल्वेवं संभ्रियते देवेन्द्रसमाराधनाय। अस्मत्कुलधनभूतानां गवां वत्सानां च सलिलयवसादिवस्तुप्रदानेन महोपकारको महेन्द्रः खलु ; स चावश्यमस्माभि-स्संतर्पणीय इति चिरादेवमनुष्ठानं संपद्यते' इति। तदाकर्ण्य भगवान् कृष्णः 'परदेवभूतस्य मम पुरतो देवतान्तर-समाराधनमिदं कथमिव सह्यम्! यथाकथञ्चिन्निरसनीयमेवैतत्' इति मनसि कृत्वा प्रोवाच तान् प्रति—"अयि भो गोपवृद्धाः। असौ गोवर्धनाद्रिरेव खल्वस्माकं गवां वत्सानां च धारकपोषकभोग्यवस्तुप्रदानेन परिपालकः; प्रत्यक्षदेवं परित्यज्य अनुपकारकस्य परोक्षस्य चेन्द्रस्य समाराधनं न खलु न्याय्यम्, * यो वै स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति * इति भगवती श्रुतिश्च प्राह ; तत्सर्वथाऽप्यनुचितं देवेन्द्राराधन-मिह" इति। तदिदमाकर्णितवन्तो गोपास्सर्वोऽपि युक्ततरमेवेदं वच इति प्रतिपद्यमानाः उपहारराशिस्सर्वोऽपि गोवर्धनाचलतल्लजायैव समर्पणीय इत्यवधारयन्तस्तथैव समार्पिपन्! अथ भगवान् कृष्ण एव * अहं गोवर्धनोऽस्मीति तत्सर्वं स्वयमाश्नात्। अथ क्रुद्धो वासवः पुष्कलावर्तकादिपर्जन्यगणान् नियुज्य सुमहत्तरवृष्टिबाधामुदपादयत्। अथ गोगोपगोपीजनसंचये सुदुस्सहवृष्टिबाधयाऽनया भृशं व्याकुले विह्वले च सति भगवान् भक्तवत्सलोनन्दनन्दनः स्वयं यमचलं रक्षकमाचचक्षे पुरा, तेनैवाचलेन रक्षां विधित्सुः तमेव गोवर्धनाद्रिं छत्रमिवोद्धृत्य सप्तरात्रं बिभर्ति स्म ; अथ भृशमपत्रपयाऽभिभूतो बिडौजा अपचारक्षामणेन पूतो बभूवेति सुप्रथित इतिहासः ; एतत्कथाप्रपञ्चनपूर्वकं भगवन्तं कृष्णं गोवर्धनाद्रिं च दशकेनानेन परमभोग्यसूक्तिनिकरेण स्तौति विष्णुचित्तो मुनिवरः ॥ .... *

(गाथा.) अट्टुक्कुवि शोत्तु प्परुप्पदमुम् तयिर्वावियुम् नेय्यळरुमडङ्ग
पोट्टत्तुत्ति * मारिप्पहै पुणर्त्त पोरुमा कडल्व् वण्णन् पोरुत्तमलै *
वट्टत्तडङ्गण्णू मडमान् कन्निनै वलैवायू पत्तिक्कोण्डु * कुरमहळिर्
कोट्टैत्तलैप्पाल्व् कोडुत्तु वळर्क्कुम् गोवर्धनमेन्नुम् कोत्तक्कुडैये ॥ १ ॥

आराधनाय पक्त्वा संभृतमन्नमयं पर्वतं दधिमयीं वापीं घृतमयं जम्बालं च साकल्येन एककबलात्मना निगीर्य देवेन्द्रकोपमुत्पाद्य अथ तेन वासवेन घनवृष्टिसमुत्पादनरूपां विपदं संकल्पितवता भगवता जलधिवर्णेन कृष्णेन यश्शैल उद्धृतः स क इति चेत्,—रमणीयनयनशालिहरिशावान् जालतो गृहीत्वा तान् स्वामिमानपात्रीकृत्य कार्पासपुञ्जिकाग्रेण क्षीरं पाययित्वा वर्धयन्तीभिः भिल्लपुरन्ध्रीभिः परीतो गोवर्धनाभिधानो जैत्रातपत्रविशेषः। (ध्वन्यर्थविवरणम्।) ज्ञानविकासशालिनस्सच्छिष्यान् सदुपायविशेषेण स्वाभिमानपात्रतां प्रापय्य परममधुरदिव्यार्थ-भोगप्रदानेन तान् शिष्यान् वर्धयद्भिरत्यन्तपारतन्त्र्यभरितैराचार्यवर्यैः परीतोऽयं दिव्यदेश इत्युक्तं भवति ॥ (१)

(गाथा.) वळ्ळवोन्तुमिळ्ळाचेयूहै वानवर्कोन् वलिप्पट्टड्ड मुनिन्दु विड्डक्कप्पट्ट *
मळैवन्देळ्ळनाळ् पेय्दु मात्तड्डप्प मधुसूदन् एड्डत्तु मरित्तमलै *
इळवु धरियाददोरीत्तुप्पिडि इळञ्जीयम् तोडन्र्दु मुड्डहुदलुम् *
कुळवि यिडैक्कालिट्टेदि्ं पोरुम् गोवर्धनमेन्तुम् कोत्तक्कुडैये ॥ २ ॥

निरवद्यसाधनानुष्ठानेन दिव्यपदवीपतिष्ठां प्राप्तवना देवेन्द्रेण सक्रोधं प्रेरितेषु पर्जन्येषु सप्तरात्रं घनवर्षाभिमुखेषु सत्सु गवां महत्युपरोधे संजाते मधुसूदनेन भगवता यश्शैल उद्धृ: स क इति चेत् ? स्वशिशुना सह वर्तमाना करिणी स्वेन सह योद्धुमागतं सिंहशावमभिभवितुमारभमाणा तदात्वे स्वकीयं शिशुं स्वपादान्तराले निगुह्य यत्र स्पर्धते स गोवर्धनाभिधानो जैत्रातपत्रविशेषः। (ध्वन्यर्थविवरणम्।) स्वकीयाभिमानान्तर्भूतस्य शिष्यस्य विश्लेषं सोढुमशक्नुवन्नाचार्यः तं शिष्यमभिभवितुमारभमाणानां वासनारूपमर्मग्रन्थीनां निरसनाय प्रयतत इति प्रोक्तं भवति ॥ (२)

(गाथा.) अम्मैत्तडङ्कण् मडवायुच्चियरुम् आनायरुम् आनिरैयुमलरि *
एम्मैचरणेन्तु कोळ्ळेन्निरप्प इलङ्गालिक्कै एन्दै एड्डत्तमलै *
तम्मैचरणेन्न तम्पावैयरै प्पुनमेयूकिन्न मानिनं काणूमिनेन्तु *
कोम्मैप्पुयक्कुन्नर् शिलै कुनिक्कुम् गोवर्धनमेन्तुम् कोत्तक्कुडैये ॥ ३ ॥

अञ्जनालंकृतचारुनयनासु गोपीषु गोपालेषु च वर्षबाधया भृशमाकुश्य 'हे गोपाल बाल! अस्माकं रक्षको भूयाः' इति प्रार्थितवत्सु चक्रपाणिना भगवता कृष्णेन तद्रक्षणार्थमुद्धृतश्शैलः क इति चेत्, अंसलभुजा भिल्लाः स्वकीयवनितासु मृगाक्षीषु मृगशावभ्रान्तिमधिवहन्तः "अस्मदीयसस्यभक्षणनिरताः खल्वमी हरिणशावा" इति धिया तज्जिघांसया यत्र चापव्यापारणसज्जा भवन्ति स गोवर्धनाभिधानो जैत्रातपत्रविशेषः। (ध्वन्यर्थविवरणम्।) महोदार आचार्यः स्वात्मनि सर्वथा परतन्त्रं शिष्यं विषयव्यासङ्गरहितमपि * अतिस्नेहः पापशङ्की * इति न्यायेन विषयव्यासङ्गोऽस्य भवितेति धिया प्रणवार्थोपदेशधन्यं करोतीति कथितं भवति ॥ .... (३)

(गाथा.) कडुवाय् शिनवेङ्गण् कळित्तुनुक्कुक्क् कवळमेड्डत्तुक्क् कोडुप्पानवन्पोल् *
अडिवायुरक्कैयिट्टु एळप्परित्तिट्टमरपेरुमान् कोण्डुनिन्नमलै *
कडल्वायू चेन्तु मेघम् कविळिन्दरङ्गि कदुवायुप्पड नीर् मुहन्देरि * एङ्गुम्
कुडवायुप्पड निन्तु मळै पोळियुम् गोवर्धनमेन्तुम् कोत्तकुडैये ॥ ४ ॥

मत्तगजाय तद्भक्ष्यकवलमुपगृह्य प्रयच्छन्नाधोरण इव अधःपातालतस्समुद्धृत्य मधुसूदनो भगवान् पर्वतरूपं कवलविशेषं मेघमण्डलाय प्रयच्छति नूनमित्युल्लेखार्हतया भगवता धृतश्शैलः क इतिचेत्, आकण्ठपीतसागरसलिलैः पर्जन्यैरभिवृष्यमाणवृष्टिको गोवर्धनाभिधानो जैत्रातपत्रविशेषः। (ध्वन्यर्थविवरणम्) क्षारमपि सागरसलिलं मेघाः स्वयमुपगृह्य यथा मधुरं वर्षन्ति, तथा कटुभूतानपि शास्त्रार्थान् स्ववाचा परममधुरीकृत्य शिष्यसस्यनिवहेषु वर्षन्त आचार्याः उपदेष्टारोऽत्र दिव्यदेशे विराजन्त इति कथितं भवति। पूर्वार्धे रूपकविन्यासश्चारुतरः; कृष्णेन समुद्धृतो गोवर्धनाद्रिः गजभक्ष्यकवलत्वेन रूपितः। कृष्णस्तावत् तत्कवलप्रदातृगजपालस्थाने रूपितः, कवलप्रदानविषयभूतगजस्थाने व्योमवर्ति मेघमण्डलं ग्राह्यम् ॥ .... .... (४)

(गाथा.) वानत्तिलुळ्ळीर् वलियीरुळ्ळीरेल् अरैयो वन्दु वाङ्गुमिनेन्नवन्पोल् *
एनत्तुरुवाहिय ईशनेन्दै इडवनेळवाङ्गि एडुत्तमलै *
कानक्कळियानै तन्कोम्बिळन्दु कदुवाय् मदम्शोर त्तन्कैयेडुत्तु *
कूनल् पिरैवेण्डि अण्णान्दुनिर्कुम् गोवर्धनमेन्नुम् कोत्तक्कुडैये ॥ ५ ॥

पुरा वराहवपुषाऽवतीर्णो भगवानधुना कृष्णकिशोरो भूत्वा "अयि भो दिविषदः! यदि यूयमपि वलिष्ठास्तर्हि अत्रागत्य धारयत भूधरमिमम्" इति कथयन्निव स्थित्वा यं पर्वतं मृत्पिण्डमिव अनायासमेव बिभर्ति स्म, स क इति चेत्, वप्रक्रीडासु दन्तभङ्गं प्राप्तवान् वन्यदन्ती स्रवन्मदजलस्सन् स्वशुण्डादण्डमुन्नमय्य, नभसि विराजमानां चन्द्रकलां स्वकीयदन्तत्वेन भ्रमित्वा तल्लाभाय प्रयतते यत्र, स गोवर्धनामिधानो जैत्रातपत्रविशेषः। (अथ ध्वन्यर्थविवरणम्।) संसारमरुकान्तारे हर्षप्रकर्षेण पर्यटन् जीवात्मा कदाचित् स्वकीयममकारप्रच्युतिं प्राप्य मदमात्सर्याद्यपक्षयं चासाद्य सत्त्वगुणाभिवृद्धिं च प्रतिपद्य बद्धाञ्जलिपुटस्सन् प्रकृत्यात्मविवेकादितत्त्वज्ञानलिप्सुस्सन् ऊर्ध्वगतिनिष्ठो बोभवीतीति सूचितं भवति ॥ .... .... .... .... .... (५)

(गाथा.) शेप्पाडुडैय तिरुमालवन्दन् शेन्दामरैक्कै विरलैन्दिनैयुम् *
कप्पाह मडुत्तु मणिनेडुन्दोळ् काम्बाकक्कोडुत्तु कवित्तमलै *
एप्पाडुम् परन्दु इळितेळ्ळरुवि इलङ्गुमणिमुत्तु वडम् पिरळ *
कुप्पायमेन निन्नु काट्चि तरुम् गोवर्धनमेन्नुम् कोत्तक्कुडैये ॥ ६ ॥

आर्जवगुणाभिरामेण श्रीधरेण भगवता कृष्णेन सरसिजोपमेयस्वकीयकरतलस्थमङ्गुलिपञ्चकमपि छत्रधारकवेत्रपञ्चक-निभं विकास्य निजभुजं छत्रदण्डत्वेन संयोज्य धृतः पर्वतः क इति चेत्, मुक्ताहारवदवभासमानान् सर्वत्र प्रसृमरान् निर्झराम्भःप्रपातान् श्रीकृष्णकिशोरार्थं सज्जीकृता मौक्तिकवारबाणा इत्येत्युल्लेखार्हान् बिभ्राणो गोवर्धनाभिधानो जैत्रातपत्रविशेषः ॥ .... .... .... .... .... (६)

(गाथा.) पडङ्गळ् पलवुमुडैप्पाम्बरैयन् पडर् भूमियैत्ताङ्गि किडप्पवन् पोल् *
तडम्कै विरलैन्दुम् मलरवैत्तु दामोदरन् ताङ्गु तडवरैतान् *
अडङ्गचेन्नु इलङ्गैयै यीडळित्त अनुमन् पुहळ्पाडि त्तम्कुट्टन्कळै *
कुडम्कैक्कोण्डु मन्दिहळ् कण्वळर्त्तुम् गोवर्धनमेन्नुम् कोत्तक्कुडैये ॥ ७ ॥

सहस्रफणाञ्चित आदिशेषो यथा हि विस्तीर्णां पृथिवीं स्वफणमण्डलतो बिभर्ति, तथा नाम दामोदरः स्वकीय-कराङ्गुलिपञ्चकं व्याकोच्य यं शैलमधारयत् स क इतिचेत्; यत्र वानर्यो लङ्कामशेषतो निर्दग्धवतो हनूमतः कीर्तिविशेषान् गायन्त्यः स्वकीयान् शावान् करतलमधिशायितान् निद्रापयन्ति स गोवर्धनाद्रिनामा जैत्रातपत्र-विशेषः ॥ (ध्वन्यर्थस्तु) कपटचेष्टितानामाकरभूतानीन्द्रियाणि निगृहीतवतां ज्ञानानुष्ठानसंपन्नानां भागवतोत्तमानां दिव्यवैभवानि स्वाधीनशिष्यवर्गायोपदिश्य प्राकृतविषयवैमुख्यमुत्पादयन्तो महानुभावा अत्र विलसन्तीत्युक्तं भवति ॥ .... .... .... .... .... (७)

(गाथा.) शलमामुहिल् पल्कणप्पोर् कळत्तु शरमारिपोलिन्दु एङ्गुम् पूशलिट्टु *
नलिवानुर केडहम् कोण्पवन् पोल् नारायणन् मुनृमुहम् कात्तमलै *
इलैवेयूक्कुरम्बै त्तवमामुनिवर् इरुन्दार् नडुवे शेन्नु अणार्शोरिय *
कोलैवायूच्चिनवेङ्गैहळ् निन्नुरङ्गुम् गोवर्धनमेन्नुम् कोत्तक्कुडैये ॥ ८ ॥

व्रजे सर्वत्रापि सलिलभरभरितकालमेघवृन्देन समराङ्गणं शरवर्षनिर्विशेषं तुमुलगर्जनेन सह सलिलधारा अभिवृष्य सर्वजन्तुजातबाधायां समुत्पादितायां सत्याम्, नारायणः कृष्ण आयुधविशेषं हस्ते बिभ्राण इव यमद्रिं धृत्वा ररक्ष, स क इतिचेत्; यत्र शरारवः शार्दूलविशेषा उटजनिवासितपक्षिगोष्ठ्यां प्रविश्य तैर्मुनिवरैः कृतया कण्ठखर्जूपरिहृत्या सुसुखं निद्राविवशा भवन्ति, स गोवर्धनाभिधानजैत्रातपत्रविशेषः ॥ (ध्वन्यर्थस्तु—) कामक्रोधमदमात्सर्यादिदुर्गुणवशंवदेषु संसारिषु श्रीमन्नाथयामुनयतिपतिसञ्चर्ममहाचार्यसविधमुपेत्य सनिर्वेदमवतिष्ठमानेषु अथ ते परमकृपया उज्जीवनोपायभूतानर्थविशेषान् हृदयंगमानुपदिश्य प्राकृतविषयवैमुख्यमुत्पाद्य ब्रह्मानन्दभाजस्तान् कुर्वन्तीत्युक्तं भवति ॥ .... .... .... .... .... (८)

(गाथा.) वन्पेय् मुलैयुण्डदोर्वायुडैयन् वन्तूणेन निन्नदोर् वनूपरत्तै *
तन्पेरिट्टुक्कोण्डु धरणितन्निल् दामोदरन् ताङ्गु तडवरैतान् *
मुन्पेवलिकाट्ट मुशुक्कणङ्गळ् मुदुहिल् पेय्दु तम्मुडैकुट्टनूगळै *
कोम्बेत्तियिरुन्दु कुदिपयित्तुम् गोवर्धनमेन्नुम् कोत्तक्कुडैये ॥ ९ ॥

पूतनास्तनंधयेन वलवत्तरभारधारिस्तम्भनिर्विशेषं तस्थुषा दामोदरेण (गोवर्धन इति) स्वकीयनामकरणपूर्वकं धरण्यां सर्वसाक्षात्कारार्हतया धृतो महानद्रिः कीदृश इतिचेत्; यत्र मर्कटगणाः स्वशावानां शाखाप्लवनकलाशिक्षणाय तान् स्वपृष्ठतलनिविष्टान् विरचय्य अथ विटविटपेष्वधिरोप्य शाखाक्रीडितानि सुशिक्षितानि कुर्वन्ति, स गोवर्धनाभिधानजैत्रातपत्रविशेषः ॥ (ध्वन्यर्थस्तु—) वेदशाखासंचरणसमर्थाःसदाचार्याः स्वामिमानभाजनभूतान् बालशिष्यान् सप्रेमभरं स्वीकृत्य तेषां सन्मार्गसंदिदर्शयिषया वेदशाखा अध्याप्य तास्वेव तेषां बुद्धिसंचारं संपादयन्तो महोपदेशका देशिका अत्र निवसन्तीत्युक्तं भवति ॥ .... .... .... (९)

(गाथा.) कोडियेरु शेन्दामरै कैविरल्हळ् कोलमुम् अलिन्दिल वाडित्तिल *
वडिवेरु तिरुवुहिर् नोन्दुमिल मणिवण्णन् मलैयुमोर् शम्विरदम् *
मुडियेरिय मामुहिर्पल्गणङ्गळ् मुनेत्ति नरैत्तन पोल * एङ्गुम्
कुडियेरि इरुन्दु मळै पोळियुम् गोवर्धनमेन्नुम् कोत्तक्कुडैये ॥ १० ॥

अच्युतस्य भगवतः अतिरमणीयसुकुमारपाणितलम् अङ्गुलयश्च सप्तरात्रमद्रिभरणेनाप्यप्रच्युतसौन्दर्या अनधिगतग्लानयश्चासन् । सुन्दराणां नखानां च बाधालेशोऽपि न जातः; अतश्च मणिवर्णकृष्णकिशोरकृतमिदमद्रिधारणं किमहो इन्द्रजालम्! इत्युल्लेखार्हं जातम् । एतादृशोऽयं शैलविशेषः क इतिचेत्; यत्र शिखरारूढा जीमूतगणाः परिपूर्णवृष्टिप्रदानेन शुक्लभावं गताः पलितपाण्डरचिकुरप्रकरधियमुत्पादयन्ति, स एष गोवर्धनाद्रिनामा जैत्रातपत्रविशेषः ॥ (ध्वन्यर्थस्तु—) वेदान्तनिष्णाता महाचार्या अत्र स्वशिष्यततये रसघनानर्थानुपदिशन्तः शुद्धस्वरूपा विराजन्त इति ॥ .... .... .... .... (१०)

(गाथा.) अरविल् पळ्ळिकोण्डु अरवं तुरन्दिट्टु अरवप्पहैयूर्दियवनुडैय *
कुरविकोंडिमुळ्ळैहळ् निन्नुरङ्गुम् गोवर्धनमेन्नुम् कोत्तक्कुडैमेल् *
तिरुविपोंलि मरैवाणर् पुत्तूर् तिहळ् पट्टर्पिरान् शोन्न मालैपत्तुम् *
परवु मन नन्गुडै प्पत्तरुळ्ळार् परमान वैकुन्दं नण्णुवरे ॥ ११ ॥

भोगिभोगशयनीयशायिना कालियभुजंगमावलेपलोपकृता गरुडध्वजेन च कृष्णेन धृतं वनस्पतिवल्लीविततिविलसितं गोवर्धनाद्रिमधिकृत्य श्रीवैष्णवाग्रेसराधिष्ठितश्रीधन्विनव्यपुराधीशश्रीभट्टनाथमुनीन्द्रेण प्रोक्तमिदं गाथादशकं कीर्तयन्तः परमभक्ताः काले परमं धाम प्राप्नुयुः—इति फलश्रुत्या समापितमिदं दशकम् ॥ .... (११)

— एकादशकसारांशसंग्रहकश्लोकद्वयमेतत् —

प्रत्यब्दं गोकुले यद्भवति दिविषदां पत्युराराधनं तत्
दृष्ट्वा कृष्णः कदाचित्तदिदमनुचितं भूधरायैव देयम् ।
इत्युक्त्वा दापयित्वा तदखिलमुपभुज्याशु वृष्टिं गरिष्ठां
सुत्रामक्रोधसृष्टामरुणदनुपदं छत्रमद्रिं दधानः ॥

इत्येवं शस्यमानं निरुपमविभवं दिव्यगोवर्धनाद्रिं
स्तोतुं प्रक्रम्य नन्दात्मजहरिचरितं दिव्यभोग्यं प्रशंसन् ।
साक्षाद्द्रष्टेव दिव्यं सुभगमनुभवं दिव्यसूक्त्या प्रयच्छन्
वेदान्ताम्भोधिमन्थाचल इव विलसन् विष्णुचित्तो गतिर्नः ॥

इति श्रीभट्टनाथसूक्ते तृतीयशतके पञ्चमं दशकमवसितम् ॥

---

## ॥ ३-६. अथ षष्ठं दशकम् - नावलम्पेरियतीविनिल्वाळुम् ॥

(कृष्णस्य वेणुनादवैदग्ध्यवर्णनम्) ।

अवतारिका—दशकेऽस्मिन् मुकुन्दस्य मुरलीगानवैदग्ध्यमतिमात्रमुपवर्ण्यते । वृन्दावनान्ते तस्य वेणुनिनदमाकर्ण्य रम्भोर्वशीमेनकाद्यप्सरस्समुदयो दिवि लज्जाभिभूतो निजगाननर्तनादिकृत्यवर्गं मुमोच विमोहात् । घासग्रहणतत्परतया स्थितो हरिणवर्गोऽपि विस्मृतस्वकृत्यो भित्तिलिखितचित्रसधर्मा बभासे । वृक्षाश्च चैतन्यभाजः कृष्णपार्श्वे समुपसर्पन्तो मधूनि कुसुमानि चावाकिरन् । एवंनाम कृष्णस्य अप्रमेयात्यद्भुतमद्वितीयमतिमधुरमुरलीगानं जम्बूद्वीपवासिजनतानां विलक्षणश्रोत्रभाग्यमिति अस्मादृशामतिकठोरतरं हृदयमपि जडीकुर्वतीभिर्दिव्यसूक्तिभिरनुगृह्णाति विष्णुचित्तमुनिर्दिव्यसूरिवरः ॥ .... .... .... .... *

(गाथा.) नावलम् पेरिय तीविनिल् वाळुम् नङ्गैमीर्हळ् इदोरद्भुतम् केळीर् *
तूवलम्पुरियुडैय तिरुमाल् तूयवायिल् कुळलोशैवळिये *
कोवलर् शिरुमियर् इळम्कोङ्गै कुतुहलिप्प उडलुळविळ्न्दु * एङ्गुम्
कावलुम् कडन्दु कयिरु मालैयाहि वन्दु कविळ्न्दु निन्ऱनरे ॥ १ ॥

चारुतरविपुलजम्बूद्वीपनिवासिन्यो भों ललना:। काश्चिदिमामद्भुतवार्तामाकर्णयत। श्रिय:पतिर्वासुदेव: पावन-पाञ्चजन्यधारी भगवान् स्वकीयपवित्राधरपुटे वेणुं विन्यस्य दध्मौ। अथ तन्निनदाध्वना गोपालबालिका: कुतूहलभरितकुचकुड्मलास्सत्यो वपुषि च संजातशैथिल्याश्च सत्य: श्वश्रूश्वशुरादीनां निर्बन्धमप्यतिलंध्य बृन्दशस्स-मागत्य दामबद्धपुष्पविततिवदवतस्थिरे। अथ कृष्णावलोकनजनितलज्जया नम्रवदनाश्च ता अभूवन्॥ .... (१)

(गाथा.) इडवणरै इडत्तोळोडु शायृत्तु इरुकै कूडप्पुरुवम् नेरिन्देर *
कुडवयिरुपड वायू कडैकूड गोविन्दन् कुळलूकोडूदिनपोदु *
मडमयिल्हळोडु मान्पिणैपोले मङ्गैमार्हळ् मलर्कून्दलविळ *
उडैनेहिळ ओर्कैयाल् तुहिल्पत्ति ओल्हियोडरिकणोड निन्ननरे॥ २॥

गोविन्दो भगवान् स्वचुबुकसव्यभागं सव्यभुजाभिमुखमाकलय्य पाणिद्वयमपि वेणुसक्तं विरचय्य विलक्षणभ्रूभङ्ग-मप्याधाय, वायुपूरणेन जठरं कुम्भसमं कृत्वा अधरोष्ठसन्निवेशमपि संकुचितमाधाय वेणुगानमकरोत्। तदात्वे मृगीदृशो मयूरीसमाश्च वल्लववनिता: प्रशिथिलकचबन्धा: प्रस्खलितवाससश्च सत्य: एकेन पाणिना चेलं परिगृह्य श्रान्तिविक्लवा भूत्वा कृष्णैकगोचरकटाक्षपाता अभूवत्॥.... .... .... (२)

(गाथा.) वानिळवरशु वैकुन्दक्कुट्टन् वासुदेवन् मदुरैमन्नन् * नन्दर्-
कोनिळवरशु कोवलर् कुट्टन् गोविन्दन् कुळल् कोडूदिनपोदु *
वानिळम्पडियर् वन्दुवन्दीण्डि मनमुरुहि मलर्कणूकळ् पनिप्प *
तेनळवु शेरिकून्दलविळ चेन्निवेर्प्प चेविशेर्त्तु निन्ननरे॥ ३॥

श्रीवैकुण्ठे युवराजतयाऽवस्थित: शेषशेषाशनगरुडप्रमुखनित्यसूरीणां।परमप्रेमपात्रभूतो वासुदेवो मथुराधिनाथो नन्दात्मजो गोपालकृष्णो गोविन्दो यदा वेणुगानमतानीत्तदा स्वर्वनिता: श्रीवृन्दावने वृन्दशस्समेत्य द्रवीभूतहृदया आनन्दाश्रुभरितदृश: श्लथचिकुरबन्धा: प्रस्विन्नफालशालिन्यश्च सत्यस्तस्मिन्नेव वेणुगाने दत्तश्रवस: स्तिमितास्तस्थु:॥ ........(टिप्पणी - वैकुण्ठेऽपि युवराजतयाऽवस्थितिकथनम्—तत्र नित्यसूरीणामेव प्राधान्यं दत्त्वा स्वस्य तत्पार-तन्त्र्याभिनयनिबन्धनम्; स्तोत्ररत्ने भगवद्यामुनाचार्यैरनुगृहीते * त्वदीयभुक्तोज्झितशेषभोजिना त्वया निसृष्टात्मभरेण यद्यथा। प्रियेण सेनापतिना न्यवेदि तत्तथाऽनुजानन्तमुदारवीक्षणै: * इत्येतत्पद्यरत्नमिहानुसन्धेय सव्याख्यानम्।)

(गाथा.) धेनुकन् पिलम्बन् काळियनेन्नुम् तीप्पप्पूडुहळडङ्ग उळकि *
कानहम्पडि उलावियुलावि करुञ्चिरुक्कन् कुळलूदिनपोदु *
मेनकैयोडु तिलोत्तमै अरम्बै उरुप्पशियरवर् वेळ्हि मयङ्गि *
वानहम् पडियिल् वायुतिरप्पिन्नि आडलूपाडलवै मारिनर्तामे॥ ४॥

धेनुकप्रलम्बकालियादिदुष्टसत्त्वनिश्शेषनिबर्हणपूर्वकं बृन्दारण्यप्रान्ते चारु पर्यटन् गोपालकृष्णो यदा वेणुगानमत-नोत्तदा मेनकातिलोत्तमारम्भोर्वशीप्रभृतय: स्वर्ललनास्तद्वेणुगानश्रवणेन व्यामुग्धा व्रीडिताश्च सत्यो दिवि च भुवि च मौनभाजो नटनं गानं च स्वयमेव विजह्रु:॥ .... .... .... (४)

(गाथा.) मुन् नरशिङ्गमदाहि अवुणनुमुकियत्तै मुडिप्पान् मूवुलहिल्
मन्नर्ङ्गुम् * मधुसूदनन् वायिल् कुळलिनोशै शेवियैप्पत्तिवाङ्ग *
नन्नरम्बुडैय तुम्बुरुवोडु नारदनुम् तम्तम् वीणैमरन्दु *
किन्नरमिधुनङ्गळुम् तम्तम् किन्नरम् तोडुहिलोमेन्ननरे ॥ ५ ॥

पुरा नृसिंहरूपी सन् हिरण्यकशिपोरवलेपं विलोपितवान् त्रैलोक्यवासिनामपि राज्ञां भयंकरश्च मधुसूदनो वेणुगानमकार्षीद्यदा, तदा तन्निनदाकृष्टकर्णा वैणिकवरिष्ठास्तुम्बुरुनारदादिमहर्षयः स्वस्ववीणादण्डस्पर्शमपि व्यस्मार्षुः, किन्नरमिथुनानि च स्वस्वकिन्नरवाद्यस्पर्शं शपथपूर्वकं विजहतिस्म ॥ .... .... (५)

(गाथा.) शेम्पेरुम् तडङ्कण्णन् तिरळ्तोळन् देवकिशिरुवन् देवर्कळ् शिङ्गम् *
नम्परमनिन्नाळ् कुळलूदकेट्टवर्हळ् इडरुत्तन केळीर् *
अम्बरम् तिरियुम् कान्दप्परेल्लाम् अमुदगीतवलैयाल् शुरुक्कुण्डु *
नम्परमन्नेन्नु नाणि मयङ्गि नैन्दुशोर्न्दु कैम्मरित्तु निन्ननरे ॥ ६ ॥

रक्तपृथुलनयनशाली वलिष्ठभुजशाली देवकीनन्दनो देवसिंहोऽस्मत्प्रभुः कृष्णोऽद्य वेणुगानं चक्रे; तन्निनदं ये श्रुतवन्तः, तैरनुभूतान् क्लेशान् वच्मि निशमयत । व्योमचारिणो गन्धर्वास्सर्वेऽपि अमृतनिर्विशेषवेणुगानजालबद्धास्सन्त इतः परं गानकृत्यं नास्माकं भर इति प्रोच्य व्रीडाविह्वलाः प्रशिथिलस्वान्ता निश्चेष्टितहस्तास्तस्थुः ॥ (६)

(गाथा.) पुवियुळ् नान् कण्डदोरद्भुतम् केळीर् पूणिमेय्क्कुमिळङ्गोवलर् कूट्टत्तवैयुळ् * नाहत्तणैयान् कुळलूद अमरलोकत्तळवुम् शेन्निशैप्प *
अवियुणा मरन्दु वानवरेल्लाम् आयर्पाडि निरैय प्पुहुन्दीण्डि *
शेवियुणाविन् शुवैकोण्डु महिळ्न्दु गोविन्दनैत्तोडर्न्दु एन्नुम् विडारे ॥ ७ ॥

भूतले मयाऽवलोकितं किमप्यद्भुतं वच्मि निशमयत । गोपालबालकसंघमध्ये शेषशायिना कृष्णकिशोरेण कृतस्य वेणुगानस्य ध्वनिरमरलोकमस्पृशत् । आकर्णिततन्निनदास्सर्वेऽपि दिविषदो विस्मृतहविर्भुक्तयो व्रजभूमिमुपसृप्य स्वकीयश्रवोरसनया परममधुरमुरलीनिनदरसमास्वाद्य प्रहृष्टमनसः कृष्णमेवानुसृत्य क्षणमात्रमपि तं न विजहुः ॥(७)

(गाथा.) शिरुविरल्कळ् तडविप्परिमार शेङ्गणूकोडचेय्यवाय् कोप्पळिप्प *
कुरुवेयर्प्पुरुवम् कूडलिप्प गोविन्दन् कुळल्कोडूदिनपोदु *
परवैयिन् गणङ्गळ् कूडुतुरन्दु वन्दु शूळ्न्दु पडुकाडु किडप्प *
करवैयिन् गणङ्गळ् काल्परप्पिट्टु कविळ्न्दिरंगि चेवियाट्ट किल्लावे ॥ ८ ॥

मृदुतराङ्गुलिषु मुरलीरन्ध्रव्यापृतासु, रक्ताब्जसदृशे नयने च वक्रभावमापुषि, वदने च वायुपूरिते, प्रस्विन्नभ्रूलतायां च कुटिलायां गोविन्दो मुरलीगानमाततान । तदात्वे श्रुततन्निनदाः पक्षिगणाः कुलायतो निर्गत्य कृष्णान्तिकमुपेत्य विलूनपतितवनराजिवदतिष्ठन् । धेनूनां ततिरप्यवनमितशिरस्का स्तब्धचरणा कर्णचालनमप्यसह्यं मन्यमाना तस्थौ ॥ .... .... .... .... .... (८)

(गाथा.) तिरण्डेलु तळैमळै मुहिल्वण्णन् शेङ्कमलमलर् शूळ् वण्डिनम्पोले *
शुरुण्डिरुण्ड कुळल् ताळ्न्द मुहत्तान् ऊदुकिन्र कुललोशै वळिये *
मरुण्डु मान्गणंगळ् मेय्है मरन्दु मेयून्द पुल्लुम् कडैवाय् वळिशोर *
इरण्डुपाडुम् तुलुङ्गा पुडैपेयरा एळुदु शित्तिरंगळ् पोल निन्रनवे ।। ९ ।।

वर्षुकवलाहकसमुदयसधर्मा गोपालकृष्णः कमलकुसुमावगाहिभ्रमरविततिनिभकुन्तलप्रकरभासुरललाटस्सन् वेणुगानं व्यतानीत् । तन्निनदेनावृष्टा हरिणगणा व्यामुग्धा घासजग्धिमपि विस्मृत्य, चर्वणार्थं वक्त्रेण गृहीतचराणां घासानां क्रमशो मुखात्पतनमप्यजानन्तः पदात्पदं चालयितुमप्यशक्नुवन्तः सर्वथा च स्तब्धावयवा आलेख्यार्पिता इवावतस्थिरे ॥ .... .... .... .... .... (९)

(गाथा.) करुङ्कणूतोहै मयिल्पीलियणिन्दु कट्टिनन्गुडुत्त पीतहवाडै *
अरुङ्कलवुरुविनायपेरुमान् अवनोरुवन् कुळल्दिनपोदु *
मरंगल्निन्रु मधुधारैकळ् पायुम् मलर्हळ् वीळुम् वळर्कोम्बुकळ् ताळुम् *
इरंगुम् कूम्बुम् तिरुमाल् निन्र निन्र पक्कम् नोक्कि अवैशेय्युम् गुणमे ।। १० ।।

बर्हिवर्हावतंसी सुदृढधृतपीताम्बरः सर्वाभरणालंकृतदिव्यगात्रो गोपालकृष्णो यदा वेणुगानं चक्रे, तदानीमचेतना अनोकहा अपि द्रवीभूतास्सन्तो मधुधाराः स्नावयन्तिस्म, पुष्पाण्यपि पातयामासुः, ऊर्ध्वं वर्धिष्णून् विटपानप्यवनमयामासुः । किं बहुना? अवनतविटपविततिभिः कृताञ्जलय इव ते तरवः कृष्णपार्श्वमेवानुसरन्तो बभूवुरहह । आः किमितोऽपि विस्मयनीयमस्ति ! ॥ .... .... .... .... (१०)

(गाथा.) कुळलिरुण्डु शुरुण्डेरिय कुञ्जि गोविन्दनुडैय कोमळवायिल् *
कुळल्मुळञ्जुकळिनूडु कुमिळ्त्तु कोळित्तळुन्द अमुदप्पुनल् तन्नै *
कुळल्मुळवम् विळम्बुम् पुदुवैक्कोन् विष्णुचित्तन् विरित्त तमिळ्वल्लार् *
कुळलै वेन्र कुळिर्वायिनराहि साधुगोष्ठियुळ् कोळ्ळप्पडुवारे ।। ११ ।।

नीलकुटिलालकभासुरगोपालकृष्णकोमलवक्त्रपरिगृहीतमुरलीरन्ध्रोदञ्चदमृतधारां वेणुगानवत् परमभोग्यामनुभूतवतो भट्टनाथस्य विष्णुचित्तमुनीन्द्रस्य वाग्विलसितानि द्राविडपद्यानि ये कीर्तयन्ति ते मुरलीनिनदजैत्रवागुक्तिभरास्सन्तः साधुगोष्ठीनिविष्टा भवितारः । ( इति फलश्रुत्या समापितमिदं दशकम् । ) .... (११)

— एतद्दशकसारांशसंग्राहकश्लोकद्वयमेतत् —

श्रुत्वा कृष्णस्य वेणुध्वनिममृतमयं मेनकाद्यप्सरस्त्री-
संघो व्रीडाभिभूतो दिवि बत! विजहौ स्वस्वकृत्यं विमोहात् ।
घासग्राही मृगौघोऽप्यचलितदशनो भित्तिचित्रायितोऽभूत्
वृक्षाश्चैतन्यभाजो मधु सुममकिरन् संगताः कृष्णपार्श्वे ॥

जम्बूद्वीपेऽद्वितीयाद्भुतमिदमहह! श्राव्यमित्यच्युतस्य
श्रीकृष्णस्याप्रमेयं मधुरमुरलिकागानवैदग्ध्यमुक्त्वा।
अस्मादृक्कर्कशान्तःकरणमपि जडीकुर्वता विष्णुचित्ते-
नात्यन्तश्लाघ्यवाचाऽस्म्यहमपि कलितस्साधुगोष्ठीं प्रविष्टः॥

इति श्रीभट्टनाथसूक्ते तृतीयशतके षष्ठं दशकमवसितम्॥

॥ श्रीरस्तु ॥

श्रीभट्टनाथ दिव्यसूरि दिव्यचरणावेव शरणम्॥

## ॥ ३-७. अथ सप्तमं दशकम् - ऐयपुळुदि ॥

अवतारिका—दिव्यसूरिरयमेतावता प्रबन्धेन कृष्णावतारचेष्टितविशेषानत्यद्भुतप्रक्रियया षष्ट्यधिकद्विशतसंख्याभिर्गाथाभिरनुभूय प्राचीकशत्। सत्यमेवंविधोऽनुभवः पराशरपाराशर्यशुकप्रभृतीनां महर्षीणामपि नाभूत्। पराङ्कुशपरकालादीनामितरेषां दिव्यसूरीणामपि न नाभूत्। अतिविलक्षणोऽयं मदीयोऽनुभव. कृष्णावतारविषयको व्यतीतः। अथ चास्मिन्दिव्यप्रबन्धे अवशिष्टेषु अष्टादशसु दशकेषु उच्चावचा भगवदनुभवास्संपद्यते। तत्रैतस्मिन्दशके विष्णुचित्तमुनिवरोऽसौ भगवति स्वकीयमभिनिवेशातिशयं स्त्रीभावनया प्रथयति। श्रीशठकोपसूरिकलिवैरियोगिकुलशेखरसूरीणामपि दिव्यप्रबन्धेषु मध्येमध्ये स्त्रीभावनयाऽपि श्रीसूक्तयोऽवतरन्ति। तत्रापि सन्ति तिस्रो विधाः— दुहितृवाक्यम् मातृवाक्यं सखीवाक्यमिति। अत्र तु मातृवाक्यापदेशेन श्रीविष्णुचित्तनायिका भगवति स्वानुरागभरम् अप्रमेयमाविष्करोति। विष्णुचित्तसूरिरधुना कन्यकास्थानमधितिष्ठतीति यावत्। अस्या जननी स्वदुहितृवृत्तं वक्तीति अनया प्रक्रियया दशकमिदं निबध्यते।

ननु पुरुषपुंगवतयाऽवतीर्णस्य सूरेरियं स्त्रीभावना कथं जाता? किमर्थं जातेति शङ्कां परिहरामः। भक्तिरेव कदाचित् शृङ्गारवृत्त्या परिणामं भजते। ततश्च पुंस्त्वप्रच्युतिपूर्वकस्त्रीभावधारणेन कथनं सम्पद्यते। सत्यमन्यादृशी सेयं वैखरी। स्वकीयाया दुहितुरच्युते भगवत्यतिमात्रप्रावण्यं बहुभिः प्रकारैः प्रथयन्त्या मातुर्वचनभङ्ग्या स्वप्रिये लक्ष्मीनाथे स्वकीयप्रेमभूमैव प्रकटीकृतो भवतीति वेदितव्यम्। तथाच अस्मिन्दशके विष्णुचित्तसूरिः जननीभूमिकां बिभ्राणस्सन् तदुक्त्यपदेशेन भगवति वासुदेवे स्वकीयमवगाहनभरं विरहासहिष्णुताम् अन्यदन्यच्च प्रकटयति। विष्णुचित्ताभिधाना मम तनया यद्यपि बालिकैव तथाऽपि लक्ष्मीनाथे भगवति गाढरूढदृढानुरागा सततं तस्यैव कथाः कथयति; तदायुधेषु शंखचक्रादिषु व्यामोहातिशयमाविष्करोति निजम्; अतिबाल्य एव एवं भगवद्विषये अतिमात्रप्रावण्यमावहन्तीमिमामधिकृत्य किमहं करवै किं वा कथयेयम्! इति जननीवचनविन्यासं वितनोति विष्णुचित्तसूरिः॥

— अवतारिकासंग्राहकश्चैष श्लोकः —

भक्तेः शृङ्गारवृत्त्या परिणतिरिह चेज्जायते तर्हि पुंस्त्वच्युत्या
स्त्रीवेषधृत्या प्रकथनसरणिः काचिदन्यादृशी स्यात्।
मातुः पुत्र्यास्सखीनामपि वचनमिषात् प्रेयसि श्रीसहाये
स्वप्रेमाविष्कृतिस्स्याद्, इह तु मुनिवरो गाहते मातृवेषम्॥

(गाथा.) ऐय पुळुदि उडम्बळैन्दु इवळ् पेचुमलन्दलैयाय् *
शेय्यनुलिन् शित्ताडै शेप्पनुडुक्कवुम् वल्लळल्लळ् *
कैयिनिल् शिरुत्तूदैयोडु इवळ् मुत्तिल् पिरिन्दुमिलळ् *
पैयरवणैप्पळ्ळियानोडु कैवैत्तु इवळ् वरुमे ॥ १ ॥

[माता कथयति ।] पांसुक्रीडार्हे वयसि वर्तमाना अन्वितभाषणेऽप्यसमर्था सेयं मम दुहिता कन्यका कटितटे वस्त्रमपि सुष्ठु धारयितुमसमर्था वर्तते । लीलोपकरणान्यपि सेयं न जहाति क्षणमात्रमपि । हन्त! एतादृश्यामप्य-वस्थायामियं श्रीमता शेषशायिना भगवता सह संश्लेषसुखमनुभवति ॥

[तुलस्यास्सौरभमिव विष्णुचित्तसूरेरस्य भगवद्भक्तिर्नैसर्गिकी, नतु आगन्तुकी इति प्रतिपादनमेव परमतात्पर्यमस्या गाथायाः । उपरितनगाथास्वप्येवमवगन्तव्यम् ॥ ] .... .... (१)

(गाथा.) वायिल् पल्लुमेळुन्दिल मयिरुम् मुडि कूडिच्चिल *
शाय्विलाद कुरुन्दलै शिल पिळ्ळैकळोडिणंगि *
तीयिणक्किणङ्गाडिवन्दु इवळ् तनन्न शेम्मै शोल्लि *
मायन् मामणिवण्णनूमेल् इवणू मालुरुकिन्नाळे ॥ २ ॥

अस्या मम कुमार्या दन्ताङ्कुरोद्भेदोऽपि नाजनि । चिकुरप्रकरा अपि ग्रथनयोग्या न संपन्नाः । एवंविधे वयसि वर्तमाना सेयं कुमारी कतिपयाभिरविधेयबालिकाभिस्सह सख्यबलात् रहसि भगवन्तमुपभुज्य समागच्छन्ती "इयन्तं कालं कुत्रानैषीः? किमकार्षीः?" इति पृष्टा सती आर्जवेन प्रत्युत्तरमनुक्त्वा कुटिलोक्तीः कथयन्ती सती अद्भुतचरित्रे मणिनिभे भगवति व्यामुह्यति हन्त ॥

[अविधेयबालिकापदेनात्र विवक्षिताः—संसारिजनैस्सह संगतिमसहमानाः परमभागवता एव । * मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् । कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च * इति भगवद्गीतोक्तरीत्या वर्तमानैर्भागवतैस्सह मिलित्वा भगवदनुभवकरणं प्रतिपादितं भवति । भगवदनुभवो मया कृत इति तत्त्वार्थे कथिते सति संसारिणः कुप्येयुरिति भिया तदपलापकरणं च युज्यते ॥ ] .... .... (२)

(गाथा.) पोङ्गुवेण्मणल्कोण्डु शिर्चिलुम् मुत्तर्त्तिलैक्कलुरिल् *
शङ्गु शक्करम् तण्डुवाळ् विल्लुमल्लदु इलैक्कलुराळ् *
कोंगै इन्नम् कुविन्देळुन्दिल गोविन्दनोडिवळै *
शंगैयाहि एन्नुळ्ळम् नाळ्तोरुम् तट्टुळुप्पाहिन्नदे ॥ ३ ॥

सेयं मम कुमारिका गृहाङ्गणे निषद्य सिकताभिः कृत्रिमसद्म निर्मातुमारभमाणाऽपि शंखचक्रगदासिशार्ङ्गाख्यपञ्चा-युधीमन्तरेण नान्यत्किमपि चित्रं विन्यसितुमुत्सहते । स्तनोद्भेदोऽपि नाभूदस्याः । एतादृशी बालिका सेयं गोविन्द-भगवत्संश्लेषशङ्कास्पदभूता सती सततं मम मनो व्यथयति हन्त ॥

[ गृहनिर्माणार्थं मिष्टकासिकतादिकं यत्र प्रक्षिप्यते तत्र बालाः स्थित्वा कृत्रिम लघुगृहसृष्ट्या विहर्तुं प्रयतन्त इति तदिदमद्यापि सर्वत्र ननु समीक्ष्ते । तादृशविहारोचितवयस्यपि शंखचक्रादिभगवल्लाञ्छनानुराग एव स्वस्य वर्तत इति कथनेन अनागन्तुकस्वाभाविकभगवद्भक्तिसम्पत्समृद्धिः कथिता भवतीति वेदितव्यम् । भोगोपकरणभूतस्तनशब्दो भगवदनुभवोपकरणभूतज्ञानभक्तिपरः । तथाच ज्ञानभक्तिपरीपाकोऽपि नाभूदित्युक्तं भवति । परमभक्तिदशा क्रमेण हि भवित्री ॥ ] .... .... .... .... (३)

(गाथा.) एलैपेदै ओर् वालकन् वन्दु एन् पेणूमहळै येल्हि *
तोळिमार् पलर् कोण्डुपोय्च्चेयूद शूळ्च्चियै यार् कुरैकेन् *
आळियानेन्नुमाळमोळैयिल् पायूचि अहप्पड्डुत्ति *
मूळै युप्परियाददेन्नुम् मूदुरैयुमिलळे ॥ ४ ॥

चापलेन अविवेकेन बालभावेन च समृद्धां मम दुहितरं सवयसो भूयस्यःकन्यकास्समुपसृत्य खेलनार्थमागच्छ भो इति विप्रलम्भेनाहूय यत्कैतवकुर्वन् तत् बत केषामन्तिके कथयेयम् । सर्वेश्वरनाम्नि गभीरतरे जलाशये निपात्य तत्रैव चावगाढामिमामकार्षुरहह । इयं तु बालिका "दर्वी रसज्ञानयोग्यताविहीना" इत्येवंविधस्वल्पविवेकेनापि विधुरा । एतस्याः खल्वेवंविधोऽनुभवः ! ॥

[ * सत्सङ्गाद्भवनिस्स्पृहो गुरुमुखाच्छ्रीशं प्रपद्यात्मवान् * इति वात्स्यवरदार्योक्तरीत्या सत्सङ्गस्यैव सकलश्रेयोनिदानत्वात् तादृशसत्सङ्गेनैव स्वस्य भगवत्प्रावण्यमुद्भूदिति प्रतिपादितं भवति । * करचरणसरोजे कान्तिमन्नेत्रमीने श्रममुपि भुजवीचिव्याकुलेऽगाधमार्गे । हरिसरसि विगाह्य * इति मुकुन्दमालासूक्तिविदां भगवत्स्तटाकतादात्म्यं सुगमम् । सर्वतापापहं भगवति विगाहनं तटाकावगाहननिर्विशेषं हि । * एव ब्रह्म प्रविष्टोऽस्मि ग्रीष्मे शीतमिव ह्रदम् * इत्येतद्वचनमप्यत्रानुसन्धेयम् ॥ "दर्वी रसज्ञानयोग्यताविहीनेत्येवंविधस्वल्पविवेकेनापि विधुरे" त्युक्तिः स्वस्य प्रापञ्चिकपामरज्ञानवैधुर्योक्तौ पर्यवस्यति ॥ ] .... .... (४)

(गाथा.) नाडुमूरुम् अरियवे पोय् नल्लतुळायलंगल्
शूडि * नारणन् पोमिडमेल्लाम् शोदित्तुळितरुहिन्राळ् *
केडु वेण्डुकिन्रार् पलरुळर् केशवनोडिवळै *
पाडुकावलिडुमिनेन्नेन्नु पार् तडुमारिनदे ॥ ५ ॥

अज्ञप्राज्ञविभागमन्तरेण सर्वेऽपि लौकिका जना यथा जानीयुस्तथा नाम सेयं कन्यका बहिर्निर्गता भगवतो नारायणस्य तुलसीस्रजमवतंसयन्ती सती तमेव हरिं सर्वेष्वपि मन्दिरेषु मार्गमाणा पर्यटति । कुलस्यास्मदीयस्य यत्किमप्यवद्यं बोभवीत्विति कामयमाना जनास्सन्ति नाम भूयांसः । तामिमां कन्यकां केशवेन भगवता सह संयोज्य संरक्षतेति एतदेव वचस्तेते कथयन्ति, हन्त ! .... .... .... (५)

(गाथा.) पट्टम् कट्टि प्पोत्तोडुपेयूदु इवळ् पाडहमुम् शिलम्बुम् *
इट्टमाह वळर्त्तेडुत्तेनुक्कु एन्नोडिरुक्कलुराळ् *
पोट्टप्पोयू प्पुरप्पट्टु निन्नु इवळ् पूवैप्पूवण्णावेन्नुम् *
वट्टवार् कुळल् मंगैमीर् इवळ् मालुरुकिन्राळे ॥ ६ ॥

अयि भोस्सुकेशिन्यो ललनाः! इमां दुहितरमहं ललाटिकालङ्करणेन सौवर्णकर्णिकार्पणेन पादकटकनूपुराञ्चनेन च सानन्दमभ्यवर्धयम्। तथाऽपि सेयं न मया सह वासं कामयते। अथ किंकरोति सेयमिति चेत्; सहसा मां विसृज्य बहिर्निर्गता सती, भो अतसीगुच्छसच्छाय! भगवन्! इत्याक्रोशति। तथा कृतेऽप्याक्रोशने तं भगवन्तमनुपस्थितमवलोक्य व्यामोहशालिनी ताम्यति॥ .... .... .... (६)

(गाथा.) पेशवुम् धरियाद पेण्मैयिन् पेदैयेन् पेदैयिवळ् *
कूशमिन्दि निन्राहैळ्ळ तम्मेदिर् कोल्ककलिन्दान् मूलैयाय् *
केशवावेन्तुम् केडिलीयेन्तुम् किंशुकवायमोळियाळ् *
वाशवार् कुळल् मंगैमीर् इवळ् मालुरुहिन्राळे॥ ७॥

अयिभोः सौगन्ध्याञ्चितकुन्तलास्सख्यः! स्वविषयकस्यापवादस्य गन्धमप्यसहमाना स्थिता शुकवाणी सेयं मम दुहिता अधुना खलु माननीयानां महतां पुरतो निस्संकोचमवतिष्ठते। न केवलमेतावदेव। केशव! अच्युत! इत्येवमेवमाक्रुश्य व्यामोहविवशा च भवति बत॥ .... .... .... (७)

(गाथा.) कारै पूणुम् कण्णाडि काणुम् तनूकैयिल् वळैकुलुक्कुम् *
कूरैयुडुक्कुमयर्क्कुम् तन् कोव्वैचेव्वाय् तिरुत्तुम् *
तेरित्तेरिनिन्तु आयिरम्पेर्त्तेवन् तिरम् पिदत्तुं *
मारिल् मामणिवण्णन्मेल् इवळ् मालुरुहिन्राळे॥ ८॥

सेयं मम दुहिता कण्ठाभरणभरणेन कण्ठतलमलङ्करोति। तज्जनितसुषमा कीदृशीति दर्पणे परीक्षते। करवलयभूषणानि ध्वनयति च। दिव्यमम्बरं परिधत्ते। एतावति कृत्ये तेऽपि, हा! मम नाथो न समागत इति दूयते। पुनरपि प्रत्याशया ताम्बूलचर्वणादिभिरधररञ्जने व्यासक्ता भवति। अतीव प्रसन्नहृदयेव सती सहस्रनाम्नो देवदेवस्य गुणान् प्रजल्पति। एवं खलु सेयं निष्प्रतिद्वन्द्वे मणिवर्णे भगवति व्यामुह्यति॥ ... (८)

(गाथा.) कैत्तलत्तुळ्ळ माडळिय कण्णालङ्गळ् शेयूदिवळै *
वैत्तुवैत्तुक्कोण्डु एन्नवाणिपम् नम्मै वडुप्पडुत्तुम् *
शेयूत्तलैयेळु नाचुप्पोल् अवन् शेयूवन शेयूदुकोळ्ळ *
मैत्तड मुहिलूवण्णन् पक्कल् वळर विडुमिन्गळे॥ ९॥

अस्मदीयकुटुम्बे इयमेकैव खलु दुहितेत्यभिमानेन हस्तस्थितमखिलमपि द्रव्यं व्ययीकृत्य कालेकाले कल्याणतमानि कार्याणि कृत्वा अस्याः कुमार्या गृहेऽभिरक्षणतः किं नाम प्रयोजनं सेत्स्यति? अस्माकमवद्यमेव फलिष्यति। हन्त! किं क्रियताम्? इति जनन्यां विचारविह्वलायां सत्यां बन्धुजना विवेकिनो वदन्ति—वर्षुकवलाहकनिभस्य कृष्णस्य यथा सेयं सर्वथाऽप्युपभोगार्हा स्यात्तथानाम तामिमां तत्सविधे विसृजतेति॥ .... (९)

(गाथा.) पेरुप्पेरुत्त कण्णालङ्गळ् शेयुदु पेणि नम्मिल्लत्तुळ्ळे *
इरुत्तुवानेण्णि नामिरुक्क इवळुमोन्रेण्णुकिन्राळ् *
मरुत्तुवप्पदम् नीङ्गिनाळेन्तुम् वार्तै पडुवदन्मुन् *
ओरुप्पडुत्तिडुमिनिवळै उलककळन्दानिडैक्के॥ १०॥

अस्याः कुमार्या यदायदा यद्यच्छुभकार्यं कर्तव्यं भवति, तदातदा तत्तत्सुष्ठु निर्वर्त्य सादरमस्मत्सद्मन्येव तामिमां स्थापयितुं वयं कामयामहे । एषा तावत् एतदनुकूलमभिप्रायमनुद्वहन्ती विपरीताभिसन्धिशालिनी वर्तते हन्त ! (इति जनन्यां वदन्त्याम्, इतरे बन्धुजनाः कथयंति । ) सेयं स्वच्छन्दचारिणी बभूवेत्यपख्यातिसंभवात्प्रागेव झटिति तामिमां कन्यकां त्रिविक्रमस्य भगवतः कृष्णस्यान्तिकं प्रापयतेति ॥ .... (१०)

(गाथा.) ञालमुचुमुण्डु आलिलैत्तुयिल्ल् नारायणनुक्कु * इवळ्
मालदाहि महिळ्न्दनळेन्नु तायुरै शेय्ददनै *
कोलमार् पोळिल्शूळ् पुदुवैयर्कोन् विष्णुचित्तन् शोन्न *
मालैपत्तुं वल्लवर्हट्कु इल्लै वरुतुयरे ॥ ११ ॥

अशेषमपि जगन्निगीर्य वटदलमधिशयानस्य भगवतो नारायणस्य विषये सेयं कन्यका व्यामुग्धहृदया समेधमानमनोरथा समिन्धे—इति जनन्या प्रोक्तमिति कामपि शैलीं कल्पयित्वा रमणीयोद्यानपरिवृतश्रीधन्विनव्यपुरवासि श्रीवैष्णवाग्रेसरश्रीविष्णुचित्तमुनीन्द्रकथितं द्राविडगाथादशकमिदं ये कीर्तयन्ति तेषां न किमपि दुःखं संभविष्णु । इति फलकीर्तनेन समापितमिदं दशकम् ॥ .... .... .... (११)

— तथाचैतद्दशकसारांशसंग्राहकं पद्यमिदं —

विष्णौ प्रेमप्रकर्षादधिगगवनिताभावनः स्वामवस्थां
मातुर्वाचा विवक्षन् बत! मम दुहिता बालिकैव ह्यथापि ।
श्रीशे रूढानुरागा कथयति सततं तत्कथाः शंखचक्रव्यामुग्धा,
किं नु कुर्यामिति वचनमिपात्सूरिराह स्वभक्तिम् ॥

इति श्रीभट्टनाथसूक्ते तृतीयशतके सप्तमं दशकमवसितम् ।

---

॥ श्रीरस्तु ॥

## ॥ ३-८. अथ अष्टमं दशकम् ॥

॥ नल्लदोर्तामरैप्पोय्है ॥

अवतारिका—जननीवचसा कथनमस्मिन् दशकेऽप्यनुवर्तते । पुनरपि माता कथयति । हन्त ! मदीयां दुहितरं कृष्णो मुष्णातिस्म । अतश्च हिमहतनलिनं सर इव मम गृहं नष्टशोभमभवत् । कृष्णेन गूढं नीता सैषा यशोदायाः स्नुषा समजनि । हन्त ! न जाने सा श्वश्रूर्यशोदा अलभ्यलाभात्मिकामिमां स्नुषां किमु सानन्दमुपलालयिष्यति? अस्या मत्पुत्र्याः श्वश्रूगृहे तु गव्यसमृद्धेरभ्यधिकत्वात् तन्मथनं नक्तंदिवं च कर्तव्यं भवेत् । अबला कृशाङ्गी मम सुता सौकुमार्यनिधिः कथमहो कठोरतरं तत्कर्म कर्तुं क्षमा । इत्येवमुच्चावचं मातृवाचा वदन् स्वात्मनः कृष्णपत्नीत्वं स्थापयति विष्णुचित्तो मुनिवरोऽस्मिन् दशके । तथा चैतद्दशकसारसंग्रहश्लोक एषः—

(गाथा.) नल्लदोर्तामरैप्पोयूहै नाणूमलमेल् पनिशोर *
अल्लियुम् तादुमुदिर् न्दिट्टु अलकलिन्दालोत्तदालो *
इल्लम् वेरियोडिचालो एन्महळै एङ्गुम् काणेन् *
मल्लरै अट्टवन् पिन्पोयू मदुरैप्पुरम् पुकाल्कोलो ॥ १ ॥

हा हन्त ! मदीयं गृहं हिमहतनलिनीनिर्विशेषं नष्टशोभं संजातम् । मम सदनालङ्कारभूतां मम दुहितरं सद्मनि कुत्रापि न पश्यामि हन्त ! मल्लहन्तारं मुकुन्दमनुधाव्य मथुरापुरीनिकटस्थं व्रजं किमु प्रविवेश सैषा कन्यका । (इति माता वदति । ) .... .... .... .... (१)

(गाथा.) ओन्नुमरिवोन्निल्लाद उरुवरै गोपालर्तङ्गल् *
कन्नुकाल् मारुमापोले कन्नियिरुन्दाळैकोण्डु *
नन्नुम् किरिशेयूदु पोनान् नारायणन् शेयूदतीमै *
एन्नुमेमर्हल् कुडिक्कु ओरेच्चु कोलायिड्ङ्गोलो ॥ २ ॥

अविवेकिनो जघन्याश्च गोपालका यथा हि गोस्तेयं कुर्वन्ति तथा नारायणः कृष्णः कन्यकातस्करो बभूव हन्त ! तस्येदमपचेष्टितमस्मदीयकुलस्य शाश्वतिकीमपख्यातिं प्रसूते किमु? इति तावदहं भृशं चकिताऽस्मि । (इति माता वदति । ) .... .... .... .... .... (२)

(गाथा.) कुमरिमणम् शेयूदुकोण्डु कोलम् शेयूदिल्लत्तिरुत्ति *
तमरुम् पिररुमरिय दामोदरर्केन्नु शात्ति *
अमरर् पदियुडैत्तेवि अरशाणियै वळिपट्टु *
तुमिलमेळ प्परैकोट्टि त्तोरणम् नाट्टिड्ङ्गोलो ॥ ३ ॥

कन्यकातस्करो भवतु कामं कृष्णः; तच्चिन्तया किं नु सेत्स्यति । कन्यकादशायां कर्तव्यानि मांगलिककृत्यानि कारयित्वा वस्त्रभूषणादिभिरलंकृत्य विवाहमण्डपे निषाद्य स्वपरविभागमन्तरेण सर्वेऽपि जना यथा जानीयुस्तथा सेयं दामोदराय भगवते प्रदत्तेति घोषणां कारयित्वा, अथ देवदेवदिव्यमहिषीत्वं प्राप्तवतीम् मम तनयां जात्याचारानुसारेण प्रदक्षिणीकृताश्वत्थशाखिकां कारयित्वा भेरीनिनदं च प्रबलमुत्पाद्य मकरतोरणालङ्करणानि च कृत्वा किमहो उपलालयेयुः ॥ (इति माता वदति ॥) .... .... .... .... (३)

(गाथा.) ओरुमहळ् तन्नैयुडैयेन् उलहम् निरैन्द पुहळाल् *
तिरुमहळ् पोल वळर्तेन् शेङ्गण्मालतान् कोण्डुपोनान् *
पेरुमहळाय् कुडिवाळ्न्दु पेरुम्पिळ्ळै पेत्त अशोदै *
मरुमहळै कण्डुहन्दु मणाट्टुप्पुरम् शेय्युङ्गोलो ॥ ४ ॥

प्रसूतैकपुत्रिका साऽहं तामिमां दुहितरं सर्वलोकाभिनन्द्यप्रक्रियया श्रीमहालक्ष्मीनिर्विशेषमभ्यवर्धयम् । एवमभिवर्धितामिमां कन्यकां हन्त ! पुण्डरीकाक्षस्सर्वेश्वरः स्वयमपजहार । किमधुना तच्चिन्तया । अतिगम्भीरकुटुम्बिनी प्रसूतमहिततनया सा यशोदा स्वां स्नुषां (मम तनयाम्) सहर्षमवेक्ष्य वैवाहिकमङ्गलानि सर्वाणि यथायथं कुर्याद्वा ?

श्रीवत्साङ्कगुरौ दिवं प्रयाते सति भगवान् रामानुजो मुनिरिमां गाथां कीर्तयन् प्रललापेति व्याख्यातारो गुरुचरणा अनुगृह्णन्ति । भक्तानां कण्ठधारणाय गाथा सेयं संस्कृतपद्यात्मना च विवर्त्यते :—

श्लो. एकामेव सुतामजीजनमहं त्रैलोक्यपूर्णप्रथां
पुष्णामि स्म रमामिव, अहरदिमां रक्तान्तनेत्रस्स्वयम् ।
गाम्भीर्याढ्यकुटुम्बिनी जनितसत्पुत्रा यशोदाह्वया
दृष्ट्वा हृष्टमनाः स्नुषां, किमु चरेद्वैवाहिकीः प्रक्रियाः ॥ ४ ॥

(गाथा.) तम्मामन् नन्दगोपालन् तळीकोण्डु एन्महळ्तन्नै *
शेम्मान्दिरेयेन्नु शोल्लिचेळ्ळ्ङ्गयर्कण्णुम् शेव्वायुम् *
कोम्मैमुलैयुम् इडैयुम् कोळुम्पणैत्तोळ्हळुम् कण्डिट्टु *
इम्महळैप्पेत्ततायर् इनित्तरियारेन्नुम् कोलो ॥ ५ ॥

मम दुहितुः श्वशुरपदे स्थितो नन्दगोपः स्वकीयां स्नुषां सादरमाश्लिष्य, अथ व्रीडावनतवदनां तां प्रति, 'आर्जवेनावतिष्ठस्व' इत्यभिधाय, तथा नाम तिष्ठन्त्यास्तस्याः चारुशफरोपमेये दृशौ बिम्बाधरं चारुपयोधरौ कटितटमुपमाम् अभिरामभुजरामणीयकं चावलोक्य, "इमां सुन्दरीं प्रसूतवती जननी कथमिवैतस्या विश्लेषं सहते ?' इति कथयेत्किमु ? .... .... .... .... (५)

(गाथा.) वेडर् मरक्कुलम् पोले वेण्डित्तुचेयूदेन् महळै *
कूडिय कूट्टमेयाह कोण्डु कुडिवाळुङ्गोलो *
नाडु नगरुमरिय नल्लदोर्कण्णालम् शेयूदु *
शाडिरप्पायन्द पेरुमान् तकवा कैप्पत्तुङ्गोलो ॥ ६ ॥

शकटभञ्जनप्रख्यातपादाब्जवलो भगवान् कृष्णो व्याधभिल्लादिजवन्यजातीया यथा गान्धर्वादिविवाहतः कृतकृत्या भवन्ति तथा अयमपि कृतकृत्यो भवेत्किमु ? अथवा पण्डितपामरविभागमन्तरेण सर्वजनसुगमतया विलक्षणविवाहोत्सवं प्रवर्त्य पाणिग्रहणमाचरेत्किमु ? .... .... .... .... (६)

(गाथा.) अण्डत्तमरर्पेरुमान् आळियानिन्नेन् महळै *
पण्डप्पळिप्पुकळ् शोल्लि प्परिशर आण्डिडुम् कोलो *
कोण्डु कुडिवाळ्कै वाळ्न्दु कोवलप्पट्टम् कवित्तु *
पण्डैमणाट्टिमार्मुन्ने पाडुकावल् वैक्कुमृकोलो ॥ ७ ॥

नित्यसूरिनिर्वाहकश्चक्रपाणिर्भगवान् मुकुन्दो मम दुहितरि दोषान् कानप्यवेक्ष्य समुद्धाव्य च किमहो अनादरं प्रकाशयेत्! आहोस्वित् सादरं परिगृह्य गोपजातीयासु दिव्यमहिषीषु मध्ये पट्टाभिषिक्तां कृत्वा प्राचीनकलत्रगोष्ठी गरिष्ठामिमां कुर्याद्वा! .... .... .... .... .... (७)

(गाथा.) कुडियिल् पिरन्दवर् शेय्युम् गुणमोन्नुम् शेय्दिलनन्दो *
नडैयोन्नुम् शेय्दिलन् नङ्गाय् नन्दगोपन् महन् कण्णन् *
इडैयिरुपालुम् वणङ्ग इळैत्तिळैत्तु एन्महळेङ्गि *
कडैकयिरे पत्तिवाङ्गि कैतळुम्बेरिडुम् कोलो ॥ ८ ॥

आः प्रियसखि! नन्दनन्दनो भगवान् कृष्णः उत्तुङ्गकुलीनैः कर्तव्येषु कृत्येष्वणुमात्रमपि नान्वतिष्ठत्। अथ साभान्यलौकिकप्रक्रिययाऽपि न किमप्याचरति स्म! अहह! मदीया सुता भर्तृभवनं प्रविष्टा सती नक्तंदिवं गव्यमथनव्यासक्ता अतिमात्रपरिश्रमासहिष्णुः दामकर्षणजनितकिणाङ्कशोभिहस्ता क्लिश्येत किमु॥ .... (८)

(गाथा.) वेण्णिरत्तोय् तयिर् तन्नै वेळ्परॆप्पिन् मुनेळुन्दु *
कण्णुरङ्गादेयिरुन्दु कडैयवुम् तान् वल्लळ्कोलो *
ओण्णिरत्तामरैच्चेङ्कण् उलहळन्दानेन्महळै *
पण्णैया प्पणिकोण्डु परिशर आण्डिडुम्कोलो ॥ ९ ॥

मम खलु दुहिता (भर्तृसद्मनि) नित्यमरुणोदयसमये समुत्थाय निद्रासुखविदूरगा सती गव्यं मथितुं कथमिव शक्नुयात्? चारुतररक्ताब्जलोचनस्त्रिविक्रमो भगवान् दामोदरो मम दुहितरं धर्महानिसहस्सन् जघन्यवृत्तिषु नियुज्य किं ननु तस्या लाघवं जनयेत्? .... .... .... (९)

(गाथा.) मायवन्पिन् वळिशेन्नु वळियिडै माऱ्ऱङ्गळ् केट्टु *
आयर्हळ् शेरियिलुम् पुकु अङ्गुचै माऱ्ऱमुमेल्लाम् *
तायवळ् शोल्लिय शोल्लै त्तण्पुदुवैप्पट्टन् शोन्न *
तूयतमिळ् पत्तुम् वल्लार् तूमणिवण्णनुक्काळरे ॥ १० ॥

जन्मगृहमुपेक्ष्य भर्त्रा सह व्रजन्ती दुहिता मार्गेष्वपूर्ववस्तुदर्शनेन 'किमेतत्, किं तदि' त्यनुयुञ्जाना सती व्रजमपि प्रविश्य तत्र यद्यदनुभवितुमर्हति तत्तदपि संचिन्त्य माता कथयति स्मेति कामपि परिपाटीम् परिकल्प्य श्रीधन्विनव्यनगराधीशेन विष्णुचित्तेन सूरिणा कथितमिदं द्राविडवाङ्मयं दशकं संकीर्तयन्तो जनाः मणिवर्णभगवत्किङ्करा भवितार इति फलकीर्तनेन समापितमिदं दशकम्॥ .... .... (१०)

— तथा चैतद्दशक सारसंग्राहक श्लोक एषः —

पूर्वावस्थानुवृत्त्या पुनरपि वचसा मातुः—एनां मदीयां
पुत्रीं कृष्णो व्यमुष्णान्मम गृहमभवच्छोभया शून्यमेव।
श्वश्रूस्सैनां यशोदा किमु बहुमनुते क्लेशयेद्वा न जाने
बाला दध्नो न मन्थे प्रभवति, बहुधैवं ब्रवीत्यत्र सूरिः॥

इति श्रीभट्टनाथसूक्ते तृतीयशतके अष्टमं दशकमवसितम्॥

॥ श्रीरस्तु ॥

# ॥ ३–९. अथ नवमं दशकम्—एन्नादन् देविक्कु ॥

अवतारिका—भगवतः कृष्णस्येव श्रीरामचन्द्रस्यापि शुभगुणाननुभवितुमुत्कण्ठा सुमहती समजायत सूरेः। तत्रापि तयोरुभयोर्गुणान् युगपदेव भोक्तुमभिलाष उदजृम्भत। अत एव सूरिरुभयोर्भूमिकां परिगृह्य, एकस्या वाचा कृष्णगुणान् अन्यस्या वाचा रामगुणांश्च संकीर्तयन्ननवधिकमानन्दमनुभवति। दशकेऽस्मिन् प्रथम-तृतीय-पञ्चम-सप्तम-नवमगाथाः कृष्णगुणानुभवनिष्णाताया गोपकन्यकाया वाचा निबद्धाः। द्वितीय-चतुर्थ-षष्ठ अष्टम-दशमगाथास्तु रामगुणोपभोगनिरताया ललनाया वाचा निबद्धाः। जगति विवाहादिसमयविशेषेषु वनिता-स्संघीभूय मण्डलाकारेण करतालसनाथगानविशेषेण सह चरन्त्यो नृत्तविशेषमनुतिष्ठन्तीति सर्वत्र साक्षात्कारार्ह-मेतद्दक्षिणदेशेषु। एतादृशनृत्तविशेषकलनेन सह नन्दनन्दनदशरथनन्दनयोर्गुणानुभवः प्रचलतीहेति वेदितव्यम्। कृष्णो भगवान् शचीपतेः प्रार्थनया नरकासुरं निहत्य तेन पुराऽपहृतमिन्द्रस्य वस्तुजातमानीय तस्मै प्रदातुं सत्य-भामया सह तार्क्ष्यमधिरुह्य देवलोकमुपाययौ। तत्र तु शची सत्यभामाया नानाविधानुपचारान् कृत्वाऽपि देवैक-भोग्यताधिया पारिजातप्रसूनं तस्यै न प्रादात्। भामा तु पारिजाततरोः द्वारकांप्रति नयनमकामयत भर्तुस्सविधे। सतु तस्याः कामनां सपदि पूरयितुमिच्छुः कल्पद्रुममुत्खाय तार्क्ष्यस्कन्धे निधाय अथ योद्धुमागतमिन्द्राणीपतिं च कान्दिशीकमारचय्य द्वारकां निनायेति कथा प्रथिता। इमामाह प्रथमतः कृष्णगुणानुरक्ता कन्यका। अथ ताटकावध-परशुरामभङ्गवृत्तान्तावाह रामगुणविद्धा। अथ शिशुपालभङ्गपूर्वकं रुक्मिणीपाणिग्रहणकथाम्, कैकेयी-निदेशावतंसनेन राज्यभरणमुपेक्ष्य सानन्दं वनप्रवेशकथाम्, पाण्डवदूत्यभारतसमरनिर्वहणादिकथाम्, प्रणत-भरतमुकुटघटितपादुकाभिषेककथाम्, कालियमस्तककलितविचित्रताण्डवकथाम्, शूर्पणखाङ्गभङ्गकथाम्, शकटा-सुरभङ्ग-यमलार्जुनभञ्जन-गोरक्षण-वेणुनादकथाम्, सेतुबन्धन-रावणमारण-विभीषणाभिषेचनकथांच क्रमशः कथया-मासतुरुभे कन्यके इत्यनया प्रणाल्या निबद्धमिदं दशकं भगवद्गुणविद्धभक्तजनभागधेयपरिपाकात्मकं वेदितव्यम्॥

(गाथा.) एन्नादन् देविक्कु अन्नु इन्वप्पू ईयादाळ्
तन् * नादन् काणवे तणूपू मरत्तिनै *
वन्नादप्पुळ्ळाल् वलियप्परित्तिट्ट *
एन्नादन् वन्मैये प्पाडिप्पर एम्बिरान् वन्मैयैप्पाडिप्पर ॥ १ ॥

अस्मत्स्वामिनो वसुदेवसूनोर्भगवतो दयितायास्सत्यभामाया अभिमतं कल्पकप्रसूनमप्रयच्छन्त्याः पुलोमजायाः पतिम् मवधानमनादृत्य कल्पकानोकहान् वैनतेयमुखेनापहृतवतो मन्नाथस्य प्रकर्षं प्रकीर्त्य सखि लास्यमाकलय। अस-दुपकारकस्य कृष्णस्योत्कर्षमुद्गायन्ती सखि नृत्तविशेषमाकलय॥ .... .... (१)

(गाथा.) एन्विल्वलि कण्डु पोवेन्नेदिर्वन्दान् *
तन् विल्लिनोडुम् तवत्तै एदिर्वाङ्गि *
मुन् विल्वलित्तु मुदुपेण्णुयिरुण्डान् *
तन्विल्लिन् वन्मैयैप्पाडिप्पर दाशरथि तन्मैयैप्पाडिप्पर ॥ २ ॥

मम हस्ते चकासतश्चापस्य बलं निरीक्षस्व तावदिति प्रस्पर्धितुमागतस्य परशुरामस्य धनुश्च तपश्चापहृतवतः, पुरा विश्वामित्राध्वररक्षणावसरे ताटकाया असूनपहृतवतश्च रामभद्रस्य धनुषो विक्रमं संकीर्त्य नृत्तमाकलय सखि॥ (२)

(गाथा.) उरुप्पिणिनङ्गैयै त्तेरेत्तिक्कोण्डु *
विरुप्पुत्तु अङ्गेह विरैन्देदिर्वन्दु *
शेरुक्कुत्तान् वीरम् शिदैय * तलैयै
च्चिरैत्तिट्टान् वन्मैयैप्पाडिप्पर देवकिशिङ्गच्चै प्पाडिप्पर ॥ ३ ॥

रुक्मिणीं देवीम् स्वकीयस्यन्दनमधिरोप्य सकुतूहलं गमनावसरे सजवं प्रस्पर्धितुमभ्युज्जिहानस्य अवलिप्तस्य च रुक्मस्य दुर्वचामवज्ञामुत्पादितवतः कृष्णस्य विक्रमं संकीर्त्य सखि लास्यमाकलय। देवकीसिंहसंकीर्तनपूर्वकं नृत्तमाकलय ॥ .... .... .... .... .... (३)

(गाथा.) माच्चुत्ताय् शेन्नु वनम् पोहेयेन्निड *
ईन्नुत्ताय् पिन्तोडर्न्दु एम्बिरानेन्नळ *
कून्नुत्ताय् शोल्ल कोडिय वनम् पोन *
शीत्तमिलादानै प्पाडिप्पर शीदैमणाळनै प्पाडिप्पर ॥ ४ ॥

सुमित्रासमाख्यायां जनन्यां वनगमनमनुज्ञातवत्यां कौसल्यायामनुसृत्य मत्पुत्रकेति विलपन्त्यां कैकेय्यामाज्ञापयन्त्यां च कठोरं विपिनं प्रविष्टवन्तं प्रफुल्लवदनं रामभद्रं संकीर्त्य लास्यमाकलय सखि, सीतापतिं संकीर्त्य नृत्तमाकलय ॥ (४)

(गाथा.) पञ्चवर् दूतनाय् भारतम् कैशेय्दु *
नञ्जुमिळ् नागम् किडन्द नल्पोय्है पुक्कु *
अञ्जप्पणत्तिन्मेल् पायून्दिट्टरुळ् शेय्द *
अञ्जनवण्णनै प्पाडिप्पर अशोदैतन् शिङ्गच्चै पाडिप्पर ॥ ५ ॥

पञ्चपाण्डवदूतभावमूरीकृत्य भारतसमरनिर्वहणं कृतवतः, कालियविषधराधिष्ठितयमुनाभागमवगाह्य तस्य फणामण्डले पतनेन तं चकितमारचय्य अथानुग्रहं च कृतवतोऽञ्जनवर्णस्य कृष्णस्य कीर्तनेन सह सखि लास्यमाकलय। यशोदासिंहसंकीर्तनेन नृत्त माकलय ॥ .... .... .... .... (५)

(गाथा.) मुडियोन्नि मूवुलहङ्गळुमाण्डु * उन्
अडियेर्करुळेन्नु अवन् पिन् तोडर्न्द *
पडियिल् गुणत्तु भरतनम्बिक्कु * अन्नु
अडिनिलैयीन्दानै प्पाडिप्पर अयोत्तियर्कोमानै प्पाडिप्पर ॥ ६ ॥

मुकुटधारणपूर्वकं त्रैलोक्यरक्षाभरस्वीकरणेन दासोऽयमनुग्राह्य इति प्रार्थनया समागतवते निरुपमगुणशालिने भरताय पुरा पादुकाप्रदानपूर्वकमनुग्रहं कृतवन्तमयोध्याधिनाथं संकीर्त्य सखि लास्यमाकलय ॥ .... (६)

(गाथा.) कालियन् पोय्है कलङ्ग प्पाय्न्दिट्टु * अवन्
नीण्मुडियैन्दिलुम् निन्रु नटञ्जेय्दु *
मीळववनुक्करुळ् शेय्द वित्तहन् *
तोळ्वलिवीरमे पाडिप्पर तूमणिवण्णनै प्पाडिप्पर ॥ ७ ॥

कालियनागाधिष्ठितं ह्रदं कलुषीकृत्य तत्रावगाह्य तस्य विषधरस्य फणापञ्चके विलक्षणं ताण्डवमाकलय्य अथ तस्मै प्राणभिक्षामर्पितवतो विदग्धस्याच्युतस्य दोर्विक्रमं संकीर्त्य सखि लास्यमाकलय ॥ .... (७)

(गाथा.) तार्क्किळन्तम्बि करशीन्दु * दण्डकम्
नूत्तवळ् शोर्क्कोण्डु पोहि नुडङ्गिडै *
शूर्पणखावै शेवियोडु मूक्कु * अवळ्
आर्क्कवरिन्दानै प्पाडिप्पर अयोत्तिक्करशनै प्पाडिप्पर ॥ ८ ॥

अयोध्यासाम्राज्यं भ्रातृभरतसात्कृत्य कटुहृदयायाः कैकेय्या वचसा दण्डकारण्यमवगाह्य शूर्पणखाख्यायाः कृशाङ्ग्याः कर्णनासं विछिद्य तामाक्रन्दितवती कृतवतस्साकेतनाथस्य गुणगणकीर्तनेन सह सखि लास्यमाकलय ॥

(गाथा.) मायचकट मुदैत्तु मरुदिरुत्तु *
आयर्हळोडु पोयू आनिरै कात्तु * अणि
वेयिन् कुळलूदि वित्तहनाय् निन्र *
आयर्हळेत्तिनै प्पाडिप्पर आनिरै मेयूत्तानै प्पाडिप्पर ॥ ९ ॥

अपोढशकटासुरम्, अपमर्दितयमलार्जुनम्; गोपालबालैस्सह वनं गत्वा संरक्षितगोबृन्दं चारुतरवेणुगानचतुरं च गोपालकृष्णं संकीर्त्य सखि लास्यमाकलय ॥ .... .... .... (९)

(गाथा.) कारार्कडलै यडैत्तिट्टु इलङ्गै पुक्कु *
ओरादान् पोन्मुडि ओन्बदोडोन्नैयुम् *
नेरावबन्तम्बिक्के नीळरशीन्द *
आरावमुदनैप्पाडिप्पर अयोत्तियर्वेन्दनै प्पाडिप्पर ॥ १० ॥

अब्धौ सेतुबन्धमारचय्य लङ्कां प्रविश्य अविवेकिनो रावणस्य शीर्षदशकं विछिद्य तदनुजाय विभीषणाय शाश्वतिकं साम्राज्यमनुगृहीतवन्तमपर्याप्तामृतमयोध्याधिनाथं संकीर्त्य सखि लास्यमाकलय ॥ .... (१०)

(गाथा.) नन्दन्मदलैयै काकुत्स्तनै नविन्नु *
उन्दि परन्द ओळियिळैयार्हळ् शोल् *
शेन्दमिळ् तेन्पुदुवै विष्णुचित्तन् शोल् *
ऐन्दिनोडैन्दुम् वल्लार्क्कल्लिल्लैये ॥ ११ ॥

नन्दनन्दनं दशरथात्मजं च पर्यायेण संकीर्त्य कृतखेलनानां ललनानामनुभवं श्रीविष्णुचित्तो मुनीन्द्रो द्राविडसूक्तिभिः प्राचीकशत् । ता इमा दश गाथास्संकीर्तयन्तस्सकलदुःखवैदेशिका भवितार इति फलकीर्तनेन समापितामिदं दशकम् ॥ .... .... .... .... (११)

— तथा चैतद्दशकस्य सारसंग्राहक श्लोक एषः —

श्रीकृष्णस्यैव चेष्टाः कथयितुममितोत्साहभाकाऽपि गोपी
श्रीरामस्यैव चर्याः कथयितुमितरेत्येवमास्थाय गोप्योः ।
मूर्ती, कृष्णस्य रामस्य च मधुरकथाः पारिजातापहार-
श्रीपादूदानमुख्या विशदमभिदधे विष्णुचित्तो मुनीन्द्रः ॥

इति श्रीभट्टनाथसूक्ते तृतीयशतके नवमं दशकमवसितम् ॥

---

॥ श्रीरस्तु ॥

## ॥ ३–१०. अथ दशमं दशकम्—नेरिन्दकरुङ्गुळल् मडवाय् ॥

अवतारिका—प्राक्तनदशके युगपद्रामकृष्णगुणानुभवतो हर्षप्रकर्षमनुभूतवान् सूरिवरः, अथ भगवतो दशरथात्मजस्य परं गुणाननुबुभूषुः रावणेनापहृतामशोकवने स्थितां भगवतीम् जानकीममित्रीक्ष्य अभिज्ञानानि विज्ञापितवतो हनुमतो वाचा रामचरितानि प्रथयन् दशकमिदं निबध्नाति । सीतापाणिग्रहणसमनन्तरं परशुरामभङ्गतः प्रभृति मारीचमायामृगाक्रन्दितश्रवणेन लक्ष्मणप्रस्थानपर्यन्तं कथाजातमभिज्ञानत्वेन विज्ञाप्य रामनामाङ्कितमङ्गुलीयकं च ददौ वायुसूनुः । तच्च सीता सादरं स्वीकृत्य शिरसि निधाय निरवधिकमानन्दमन्वविन्दतेति-कथनमस्मिन् दशके रामचन्द्रदिव्यगुणानुभवात्मकमवसेयम् । मध्ये काकासुरनिग्रहकथाऽपि (षष्ठगाथायां) विज्ञाप्यते हनुमता । यद्यपि श्रीरामायणे सेयं काककथा सीतादेव्या हनुमते कथितेत्यवलोक्यते, तथाऽपि न क्षतिः; अयं कोऽपि विलक्षणोऽनुभवप्रकार इति ॥

*

(गाथा.) नेरिन्द करुङ्गुळल् मडवाय् निन्नडियेन् विण्णप्पम् *
शेरिन्द मणिमुडिच्चनकन् शिलैयिरुत्तु निनैक्कोणर्न्द-
दरिन्दु * अरशु कळैकट्ट अरुन्तवत्तोनिडै विलङ्ग *
शेरिन्द शिलैकोडु तवत्तै शिदैत्तदुमोरडैयाळम् ॥ १ ॥

चारुचिकुरप्रकरे वैदेहि ! दासस्य ममेदं विज्ञापनं शृणु तावत् । रत्नमुकुटाञ्चितशिरसा जनकराजेन कन्याशुल्कतया व्यवस्थापितं रौद्रं धनुर्भङ्क्त्वा भवतीं परिणीय समायाति रामभद्र इत्यवगत्य दुष्टक्षत्रनिबर्हणनिपुणः परशुरामो मध्येमार्गं स्पर्धितुमाययौ । अथ राघवः तद्धस्तस्थितवैष्णवधनुर्ग्रहणपूर्वकं तदीयं तपो लुम्पति स्म ! इत्येतदभिज्ञानमवगच्छतु भगवती ॥ .... .... .... .... ..(१)

(गाथा) अळ्ळियम्पू मलर्क्कोंदाय्! अडिपणिन्देन् विण्णप्पम् *
शोल्लुहेन् केट्टरुळाय् तुणै मलर्क्कण् मडमाने *
एल्लियम्पोदिनिदिरुत्तल् इरुन्ददोरिडवहैयिल् *
मल्लिकै मामालैकोण्डु अङ्गार्त्तदुमोरडैयाळम् ॥ २ ॥

स्पृहणीयपुष्पमालिकासदृशि हरिणाक्षि जानकि! चरणदासस्यास्य सेयं विज्ञप्तिर्विज्ञाप्यमाना कृपया श्रोतव्या। अभिरामनिशाकाले परमभोग्यावस्थितिस्थानविशेषे कुत्रचित् भवत्या रामभद्रो मल्लीस्रजा निबद्धोऽभूदित्येदप्यभिज्ञानमवगन्तव्यम् । [इदमभिज्ञानमितिहासपुराणादिष्वप्रसिद्धं दिव्यसूरिवरेणानेन साक्षात्कृतमित्याचार्या आशेरते। वनप्रयाणात्पूर्वमयोध्यावासकाले कदाचित्तदिदं संपन्नमिव।] .... .... (२)

(गाथा.) कलक्किय मामनत्तनळाय् कैकेशि वरम् वेण्ड *
मलक्किय मामनत्तननाय् मन्नवनुम् मरादोळिय *
कुलकुमरा! काडुरैयप्पोवेन्नु विडै कोडुप्प *
इलक्कुमणन्तन्नोडुमङ्गु एहियदोरडैयाळम् ॥ ३ ॥

सीते! विज्ञापये। कुब्जाकलुषितहृदयायाः कैकेय्या वरयाचनां प्रतिपेद्धमशक्तेन कलुषितचेत्सा दशरथेन 'अभिजात कुमारक! वनवासमुररीकुरु' इति संदिष्टस्सन् राघवस्सह सौमित्रिणा विपिनमुपाययौ। इत्येतदप्यभिज्ञानमवगन्तव्यम् ॥ .... .... .... .... .... (३)

(गाथा.) वारणिन्द मुलैमडवाय् वैदेही! विण्णप्पम् *
तेरणिन्द वयोत्तियर्होन् पेरुन्देवी! केट्टरुळाय् *
कूरणिन्द वेल्वलवन् गुहनोडुम् गङ्गैतन्निल् *
शीरणिन्द तोळमै कोण्डदुमोरडैयाळम् ॥ ४ ॥

दिव्यकञ्चुकालंकृतदिव्यावयवे वैदेहि! विज्ञापये। अयोध्याधिनाथदेवदेवदिव्यमहिषि! निशमय। गङ्गाकूले सुतीक्ष्णहेतिहस्तेन व्याधराजेन गुहेन सह विलक्षणं सख्यमन्वभावि भगवता श्रीरामचन्द्रेणेत्येतदप्यभिज्ञानमवगन्तव्यम् ॥ .... .... .... .... .... (४)

(गाथा.) मानमरुमेन्नोक्कि वैदेही! विण्णप्पम् *
कानमरुम् कल्लदरु पोय् काडुरैन्द कालत्तु *
तेनमरुम् पोळिल्ल् शारल् शित्तिरकूटत्तिरुप्प *
पान्मोळियाय् भरतनम्बि पणिन्ददुमोरडैयाळम् ॥ ५ ॥

अयि हरिणाक्षि! मधुरवाणि! वैदेहि! कठोरकाननाध्वना गत्वा मधुस्यन्दिभिरारामैः परिवृतं चित्रकूटसानुमासेदुषि भवतीसनाथे रामचन्द्रे भरत उपेत्य प्रपेदे इत्येतदप्यभिज्ञानमवगन्तव्यम् ॥ .... (५)

(गाथा.) शित्तिरकूटत्तिरुप्प शिरुकाकै मुलै तीण्ड *
अत्तिरमे कोण्डेरिय अनैत्तुलहुम् तिरिन्दोडि *
वित्तहने रामावो निन्नभयमेन्नळैप्प *
अत्तिरमे अदन्कण्णै अरुत्तदुमोरडैयालम् ॥ ६ ॥

चित्रकूटनिवासावसरे पयोधरार्दनरूपमपराधं कृतवन्तं वलिभुजमुद्दिश्य ब्रह्मास्त्रं प्रयुयुजे तव नाथः। अथ स त्रीन् लोकान् संपरिक्रम्य पित्रा च महर्षिभिस्सुरैश्च परित्यक्तस्सन् 'विदग्ध ! राघव ! महाप्रभो ! प्रदेह्यभयम्, इति प्रार्थ्य पुनरायातः। अथ स तेनैवास्त्रेण विछ्ननयनः कृत इत्येतदप्यभिज्ञानमवगन्तव्यम् ॥ [अत्र वक्तव्यं किमपि अवतारिकायामुक्तमनुसन्धेयम् ॥] .... .... .... (६)

(गाथा.) मिन्नोत्त नुण्णिडैयाय् मेय्यडियेन् विण्णप्पम् *
पोन्नोत्त मानोन्नु पुहुन्दिनिदु विळैयाडं *
निन्नन्विन् वळिनिन्नु शिलैपिडित्तेम्बिरानेह *
पिन्ने यङ्गिलकुमणन् पिरिन्ददुमोरडैयालम् ॥ ७ ॥

विद्युत्सन्निभवलग्ने ! वैदेहि ! सत्यदासस्य मम विज्ञप्तिरेषा। कस्मिंश्चन मायाहिरणमयहरिणे पञ्चवट्यां विहरति सति रामचन्द्रस्त्वत्प्रेरितस्सन् धनुष्पाणिस्तमनुसरति स्म हरिणम् । अथ लक्ष्मणोऽपि वियुयुजे-इत्येतदप्यभिज्ञानमवगन्तव्यम् ॥ .... .... .... .... .... (७)

(गाथा.) मैत्तहु मा मलर्कुळलाय्! वैदेही विण्णप्पम् *
ओत्त पुहळ् वानरकोन् उडनिरुन्दु निनैत्तेड *
अत्तहु शीरयोत्तियर्होन् अडैयाळमिवै मोळिन्दान् *
इत्तहैयालडैयाळम् ईदवन्कै मोदिरमे ॥ ८ ॥

अतिचारुकुसुमालंकारयोग्यचिकुरवन्धे वैदेहि ! विज्ञापये। रामसौहार्दलाभविख्यातकीर्तिस्सुग्रीवो महाराजो रामभद्रेण सह स्थित्वा भवत्या गवेषणाय किंकरान् कीशान् दिक्षु विदिक्षु च विससर्ज। तदात्वे साकेतपतिस्स राघवः परमप्रेम्णा अभिज्ञानान्येतान्यनुजग्राह। वीक्षस्व देवि ! एतदपि तस्याङ्गुलिविभूषणमुत्तममभिज्ञानम् ॥ .... (८)

(गाथा.) दिक्कुनिरै पुहळाळन् तीवेळ्वि चेन्ननाळ् *
मिक्कपेरुम् सभैनडुवे विल्लिरुत्तान् मोदिरङ्कण्डु *
ओक्कुमालडैयाळम् हनुमानेन्नुचिमेल् *
वैत्तकोण्डु उहन्दनलाळ् मलर्कुळलाळ् सीतैयुमे ॥ ९ ॥

दिगन्तविश्रान्तयशसो जनकनृपतेरध्वरमुद्दिश्य कौशिकमुनिना सह समागत्य महापरिषन्मध्ये धनुर्भङ्गं कृतवतो रामभद्रस्य दिव्याङ्गुलिविभूषणमवलोक्य, 'भगवन् मारुते! भवता निवेदितान्यभिज्ञानानि युज्यन्ते' इति प्रशस्य जानकी तदङ्गुलीयकमवतंसपदे निधाय प्रमुमुदे ॥.... .... .... (९)

(गाथा.) वारारुम्मुलै मडवाळ् वैदेहि तनैकण्डु *
शीरारुम् तिरलनुमन् तेरिन्दुरैत्त वडैयाळम् *
पारारुम् पुहळ्पुदुवै भट्टर्पिरान् पाडल्वल्लार् *
एरारुम् वैहुन्दत्तु इमैयवरोडिरुप्पारे ॥ १० ॥

पुरा लङ्कायां वैदेहीम् भगवतीम् देवदेवदिव्यमहिषीमवलोक्य बलवता मारुतिना सम्यगवबोधितान्यभिज्ञानान्यधिकृत्य यशस्विना भट्टनाथमुनीन्द्रेण प्रोक्ता द्राविडगाथा इमा ये कीर्तयन्ति ते दिव्ये धाम्नि सूरिभिस्सह विराजेरन्निति फलकथनेन समापितमिदं दशकम् ॥ .... .... .... .... (१०)

— तथा चैतद्दशकसारसंग्राहकश्लोक एषः —

लङ्कायां जानकीं प्राक् पवनसुत उदीक्ष्यात्मनो रामदूती-
भावप्रत्यायनार्थं रघुवरकथितास्ता अभिज्ञानवाचः ।
विज्ञाप्य क्रोधरामे मदशमनमुखाः, रामनामाङ्गुलीयं
दत्वा प्राहर्षयच्चेत्यवददिह महान् विष्णुचित्तो मुनीन्द्रः ॥

इति श्रीभट्टनाथसूक्ते तृतीयशतके दशमं दशकमवसितम् ॥

इति श्री काञ्चीप्रतिवादिभयङ्कर–अण्णङ्गराचार्यकृतिषु
द्राविडाम्नायदिव्यप्रबन्धविवर्ते श्री भट्टनाथसूक्ते
तृतीयं शतकमवसितम् ॥

श्रीभट्टनाथसूरिदिव्यचरणावेव शरणम् ॥

श्रीमच्छठकोप-यतिवर-यतीन्द्रप्रवणेभ्यो नमः ॥

———

॥ श्रीरस्तु ॥

अथ श्रीभट्टनाथसूक्ते चतुर्थं शतकम्

## ॥ तत्र प्रथमं दशकम् — कदिरायिर मिरवि ॥

अवतारिका—एक एव सर्वेश्वरो मत्स्य-कूर्म-वराह-नरहरि-वामन-राम-कृष्णादिनात्मनाऽवतरति, धर्मी त्वेक एवेति तादात्म्यप्रथनेन विलक्षणमनुभवं विरचयितुकामो विष्णुचित्तसूरिरधुना युगपन्मूर्तिद्वयं बिभ्राणः एकया मूर्त्या भगवदन्वेषणरसमनुभवन् अपरया च मूर्त्या अमुत्र भगवानेवंविधो दृष्ट इति तद्दर्शनानन्दरसानुभवं प्रथयन् दशकमिदं विलक्षणवैखर्या निबध्नाति । उद्यद्भानुसहस्रभास्वरकिरीटधारी भगवान् रामचन्द्रः कच्चिदवालोकीति गवेषणमिव पूर्वार्धे । दृष्टो ननु स भगवान् हिरण्यकशिपुवक्षःकवाटविदारणः प्रह्लादेन स्तूयमान इति प्रत्युत्तरार्पणमुत्तरार्धे । रथाङ्गशङ्खासिगदाशार्ङ्गभूषितपाणिर्भगवान् किमु दृष्ट इत्यन्वेषणमिव पुनः पूर्वार्धे । ननु दृष्टोऽधुनैव जनकराजसभायां पाशुपतं धनुर्भञ्जयन् सीतां परिणयन्निति प्रत्युत्तरविज्ञापनमुत्तरार्धे । प्रलयापदि सर्वमपि जगन्निगीर्य नैयग्रोधे दले कृतशयनो भगवान् किमालोकित इति प्रश्न इव पूर्वार्धे । नन्विदानीमेव दृष्टस्स भगवान् नीलादेवीपाणिग्रहणकृते सप्तर्षभौद्धत्यविध्वंसनेन श्रान्ततनुः कृष्ण इति कथनमुत्तरार्धे । कुवलयापीडाख्यमत्तवारणदर्पवारणस्सप्तसालभेत्ता भगवान् कच्चिदैक्षीत्यनुयोग इव पूर्वार्धे । नन्वद्यैव सेवितो वानरवीरेषु किंकुर्वाणेषु सेतुबन्धनसमुत्सुकस्सागरतीरमध्यासीनस्स हरिरिति प्रबोधनमुत्तरार्धे । एवं नाम विलक्षणप्रक्रियया दशकमिदं निबध्यते ॥ .... .... .... .... .... .... .... .... *

(गाथा.) कदिरायिरमिरवि कलन्देरित्तालोत्त नीळ्मुडियन् *
एदिरिल्ल पेरुमै इरामनै इरुक्कुमिडम् नाडुदिरेल् *
अदिरुम् कळल् पोरुतोळ् इरणियनाहम् पिळन्दरियाय् *
उदिरमळैन्द कैयोडिरुन्दानै उळ्वा कण्डारुळर् ॥ १ ॥

असंख्येयकिरणावलीसंभृतसहस्ररश्मिसहस्रयुगपदुदयोल्लेखयोग्यपृथुचूडावतंसविराजितम् अप्रतिद्वन्द्वमाहात्म्यशालिनं भगवन्तं दाशरथिं यदि मृगयध्वे, तर्हि वच्मि निशमयत । वीरकटकाञ्चितपादस्य दोःखर्जूशालिनश्च हिरण्यासुरस्य वक्षस्स्थलीं नरहरिरूपेण निर्भिद्य रुधिरधारावसिक्तपाणिमवस्थितं देवदेवं यथावत्सेवितवन्तो भक्ता इह सन्ति ॥ [ दाशरथिनरसिंहयोस्तादात्म्यकीर्तनपर्यवसायि वच एतत् । एवमग्रेऽपि ॥ ] .... .... (१)

(गाथा.) नान्दहम् शङ्गु तण्डु नाणोलिच्चार्ङ्गम् तिरुचक्करम् *
एन्दुपेरुमै इरामनै इरुक्कुमिडम् नाडुदिरेल् *
कान्दळ् मुहिळ् विरल् शीदैकाहि कडुम्शिलै शेन्रिरुक्क *
वेन्दर्तलैवन् जनकराजन्तन् वेळ्वियिल् कण्डारुळर् ॥ २ ॥

नन्दकशङ्खगदाशार्ङ्गचक्रालंकृतपाणिं श्रीराघवं महात्मानं यदि मृगयध्वे, तर्हि वच्मि निशमयत । अतिमृदुलाङ्गुलीविराजद्वैदेहीनिमित्तं राजाधिराजजनकनृपतेरध्वरभुवमासाद्य रौद्रं धनुर्भञ्जयन्तं तमवलोकितवन्तो भक्ता इह सन्ति ॥

(गाथा.) कोलैयानैकोम्बु परित्तु कूडलर् शेनै पोरुदळिय *
शिलैयाल् मरामरमेय्ददेवनै शिक्केन नाडुदिरेल् *
तलैयाल् कुरक्किनम् ताङ्गिच्चेन्नु तडवरैकोण्डडैप्प *
अलैयार् कडर्करै वीत्तिरुन्दानै अङ्गुत्तैक्कण्डारुळर् ॥ ३ ॥

कुवलयापीडसमाख्यशरारुगजराजहन्तारं जनस्थाननिकेतनराक्षसानीकनिरासकं सप्तसालभेदिसायकोल्लसत्पाणिं च देवं यदि दृढाध्यवसायपूर्वकं मृगयध्वे तर्हि वच्मि निशामयत । मर्कटमण्डलीषु महत्तरान् शैलान् शिरसोपानीय सेतुबन्धनकैङ्कर्यतत्परासु सतीषु उत्तरङ्गजलधिरोधसि निषण्णमवनिजाजानिमवलोकितवन्तः सन्ति भक्ताः ॥ (३)

(गाथा.) तोयम् परन्द नडुवु शूळलिल् तोल्लैवडिवुकोण्ड *
मायक्कुळवियदनै नाडुरिल् वम्मिन् शुवडुरैक्केन् *
आयर्मडमहळ् पिन्नैक्काहि अडलविडैयेळिनैयुम् *
वीयप्पोरुदु वियर्त्तु निन्नानै मेय्म्मैये कण्डारुळर् ॥ ४ ॥

कृत्स्नेऽपि भूमण्डले प्रलयार्णवमग्ने सति सदुपायतः स्वकीयं विश्वरूपं संकोच्य बालाकृतिं स्वीकृतवन्तं भगवन्तं यदि भो मृगयध्वे, तर्हीह समागच्छत वच्मि वक्तव्यम् । श्रीकुम्भनामकगोपालदुहितुस्सुन्दर्या नीलायाः पाणिग्रहणार्थं सुदारुणैस्सप्तमिरुक्षमिस्सह प्रस्पर्ध्य ततः स्वेदाम्बुकणिकाचितं तस्थिवांसं मुकुन्दं तत्त्वतो दृष्टवन्तस्सन्ति नाम ॥ .... .... .... .... .... (४)

(गाथा.) नीरेरु शेञ्जडै नीलकण्ठनुम् नान्मुहनुम् मुरैयाल् *
शीरेरु वाचकम् शेय्यनिन्न तिरुमालै नाडुदिरेल् *
वारेरु कोङ्गै उरुप्पिणियै वलियप्पिडित्तुकोण्डु
तेरेत्ति * शेनैनडुवु पोर् शेय्य शिक्केनक्कण्डारुळर् ॥ ५ ॥

गङ्गावतंसितकपर्दशालिना नीलकण्ठेन चतुर्मुखेन च यथायथं स्तूयमानशुभगुणं श्रियःपतिं यदि मृगयध्वे तर्हि निशामयत; कञ्चुकाञ्चितपयोधरां रुक्मिणीं देवीं प्रसभं परिगृह्य स्यन्दनमधिरोप्य, तदात्वे सहसाऽभिभवितुमुपनतैः शिशुपालादिमिस्सह सेनामध्ये प्रस्पर्धमानं रुक्मिणीनाथं सुष्ठु संसेवितवन्त स्सन्ति भक्ताः ॥ .... (५)

(गाथा.) पोल्लावडिवुडैप्पेय्च्चि तुञ्जप्पुणर्मुलै वाय्मडुक्क
वल्लानै * मामणिवण्णनै मरुवुमिडम् नाडुदिरेल् *
पल्लायिरम् पेरुन्देविमारोडु पौवमेरि तुवरै *
एल्लारुम् शूळ शिङ्गाशनत्ते इरुन्दानै क्कण्डारुळर् ॥ ६ ॥

अतिघोरवर्ष्मधारिणीं पूतनां स्तन्यपानेन मारयितुं प्रभवन्तं मणिविडम्बिमनोहरविग्रहं भगवन्तं वासुदेवं यदि संसेवितुमिच्छथ तर्हि निशामयत । सागरतरङ्गसंकुलायां द्वारकापुर्यां महति समाजे षोडशस्त्रीसहस्रसमेतं सिंहासने चकासतं दामोदरं दृष्टवन्तस्सन्ति नाम ॥ .... .... .... (६)

(गाथा.) वेळ्ळै विळिशङ्गु वेञ्जुडर् तिरुच्चकर, मेन्दुकैयन् *
उळ्ळविडम् विनविल् उमक्किरै वम्मिन् शुवडुरैकेन् *
वेळ्ळैप्पुरवि कुरक्कुवेल्कोडि त्तेमिंशै मुन्दु निन्दु *
कळ्ळप्पडै त्तुणैयाहि भारतम् कैशेय्य कण्डारुळर् ॥ ७ ॥

कैंकर्यरसिकसज्जनाह्वानतत्परधवलशङ्खं ज्योतिश्चूडालमौलिं चक्रराजं च बिभ्राणो भगवान् कुत्र विराजत इति यदि पृच्छथ तर्हि निशमयत वक्तव्यं वच्मि । श्वेतहयशालिनं कपिकेतुभूषितं च महारथमधिष्ठाय सारथिभावं प्रतिपद्य पाण्डवानीकसहायतया भारतयुद्धं प्रवर्तयन्तं भगवन्तं प्रेक्षितवन्तस्सन्ति नाम ॥ .... (७)

(गाथा.) नाळिहै कूरिट्टुक्कात्तु निन्न अरशर्हळ् तम्मुहप्पे *
नाळिहैपोहप्पडै पोरुदवन् देवकितन् शिरुवन् *
आळिकोण्डन्नु इरवि मरैप्प शयत्तिरदन् तलैयै *
पाळिलुरुळप्पडै पोरुदवन् पक्कमे कण्डारुळर् ॥ ८ ॥

भारतयुद्धे त्रयोदशेऽहनि अभिमन्युहन्तारं जयद्रथं श्वस्सूर्यास्तमयतः प्राग्यदि नाहं निहन्यां तर्हि वह्नावह्नाय जह्यां प्राणानिति प्रतिजज्ञे पार्थ इति विज्ञाय तं जयद्रथं निर्दिष्टकालावधि गर्तेऽवस्थाप्य संरक्षतां प्रतिरक्षिभूभुजां पुरः अकाले सूर्यास्तमयमुद्भावयितुं निजहेतिराजेन सूर्यमाच्छादितवान् देवकीसूनुः कुत्रेति चेत्; तदात्वे गभस्तिमालिनि चक्रराजेन गूहिते सति सूर्यास्तमयभ्रान्त्या बहिर्निर्गतं जयद्रथं व्यापादितवतः पार्थस्य पार्श्वे विराजमानं तं वीक्षितवन्तस्सन्ति नाम ॥ .... .... .... .... (८)

(गाथा.) मण्णुम् मलैयुम् मरिकडल्हळुम् मत्तुम् यावुमेल्लाम् *
तिण्णम् विळुङ्गियुमिळ्न्द देवनै शिकेन नाडुदिरेल् *
एण्णर्करियदोरेनमाहि इरुनिलम् पुक्किडन्दु *
वण्णक्करुङ्गुळल् मादरोडु मणन्दानैकण्डारुळर् ॥ ९ ॥

उर्वीमुर्वीधरानुत्तरङ्गजलधीन् अन्यदप्यखिलं पदार्थजातं निगीर्य पुनरुद्गिरन्तं देवं यदि श्रद्धया मृगयध्वे तर्हि निशमयत । अवाङ्मनसगोचरविभवशालिदिव्यवराहवपुरास्थाय प्रलयार्णवेऽवगाह्य अण्डमित्तितस्समुन्मोचितया भूमिदेव्यासह संश्लेषमनुभवन्तमादिदेवं साक्षात्कृतवन्तस्सन्ति नाम ॥ .... .... (९)

(गाथा.) करिय मुहिल्पुरै मेनि मायनै कण्डशुवडुरैत्तु *
पुरविमुहम् शेय्दु शेन्नेलोङ्गि विळैकळनिप्पुदुवै *
तिरुविर्पोलि मरैवाणन् पट्टर्पिरान् शोन्न मालै पत्तुम् *
परवु मनमुडैप्पत्तरुळ्ळार् परमनडिशेर्वर्हळे ॥ १० ॥

नीलमेघनिभदिव्यमङ्गलविग्रहस्याश्चर्यचेष्टितस्य भगवतस्संदर्शनलक्ष्माणि संकीर्तयता सस्यसमृद्धिसंपन्नकेदारमालाञ्चित-श्रीवन्विनव्यनगराधिनाथेन श्रीवैष्णववैदिकाग्रेसरेण भट्टनाथमुनीन्द्रेणानुगृहीतमिदं गाथादशकं सहृदयमनुसंदधाना भक्ताः परमपुरुषपादारविन्दभाजस्स्युरिति फलकीर्तनेन समापितमिदं दशकम् ॥ .... (१०)

— तथा चैतद्दशकसारसंग्राहकश्लोक एषः —

भास्वत्सूर्यायुतश्रीरुचिधरमकुटः पञ्चहेतीविभूषो
रामो न्यग्रोधपत्रे विरचितशयनः केशवो मृग्यते चेत् ।
प्रह्लादस्तूयमानः पशुपतिधनुरुद्भञ्जनस्सेतुकारी
संदृष्टोऽत्रैव धन्यैरिति समकलयद्विष्णुचित्तो ऽत्र सूक्ते ॥

इति श्रीभट्टनाथसूक्ते चतुर्थे शतके प्रथमं दशकमवसितम् ॥

---

॥ श्रीरस्तु ॥

## ॥ ४-२. अथ द्वितीयं दशकम् — अलम्बावेरुट्ट ॥

अवतारिका—दशकद्वितयेन श्रीवनाद्रि [तिरुमालिरुम् शोलैनामक श्रीसुन्दरबाहुभगवदभिव्यक्ति-स्थल] प्रशंसा क्रियते । तत्रेदं प्रथमं दशकम् । अयं श्रीवनाद्रिस्सुन्दरभुजस्य भगवतः अतिशयितविभवां स्थितिं बिभर्ति । भगवान् कीदृशः? सकलजगत्प्रध्वंसनैकप्रवणखरदूषणदशवदनकुम्भकर्णादियातुधानवृन्दनिर्मूलनविचक्षणः, व्रजे चिरात्प्रवृत्तामिन्द्रपूजां निरुध्य तां गोवर्धनमहीधरे प्रवर्तितवान्, ग्राहग्रस्तगजेन्द्रार्तिहारी, कंसप्रचोदितकुवलया-पीडाख्यमातङ्गमदमर्दननिर्दयः; वारुणास्त्रप्रयोगतः कान्तारेऽपि कर्कशे जलवार्तादरिद्रे सलिलमुद्भाव्य पिपासित-पाण्डवाश्वपिपासाशमनं कृतवान् । इत्येवमेवं प्रशंसा क्रियते ॥ *

(गाथा.) अलम्बा वेरुट्टा कोन्नु तिरियुमरक्करै *
कुलम् पाव्पडुत्तु कुलविळक्काय् निन्न कोन्मलै *
शिलम्बार्क्क वन्दु देयूव महळिर्हळाडुम् शीर् *
शिलम्बारु पायुम् तेन् तिरुमालिरुम् शोलैये ॥ १ ॥

प्राणिनां तर्जनेन भर्त्सनेन हिंसनेन चैव सततं कालं क्षिपतां रक्षसां समूलोन्मूलनमारचय्य समिन्धानस्य रघुकुल-दीपस्य भगवत आवसथभूतो भूधरः क इति चेत्; निनदन्नूपुरशालिनीभिर्देवललनाभिरुपस्थिताभिर्निषेव्यमाणाया नूपुरगङ्गायाः प्रवाहैरभिरामो वनाद्रिः । [स एष दिव्यदेशो भक्तैस्सेवनीय इति वा, अस्माभिस्सेव्यत इति वा शेषपूरणम् ॥ ] .... .... .... .... .... (१)

(गाथा.) वल्लाळन् तोळुम् वाळरक्कन् मुडियुम् * तङ्गै
पोल्लाद मूक्कुम् पोक्कुवित्तान् पोरुन्दुम् मलै *
एल्लाविडत्तिलुमेङ्गुम् परन्दु पल्लाण्डोलि *
शेल्लानिर्कुम् शीर् त्तेन् तिरुमालिरुम् शोलैये ॥ २ ॥

अप्रतिमपौरुषशालिनः खड्गपाणेर्दशाननस्य भुजांश्च शिरांसि च शूर्पणखायाः कर्णनासं च विलोपितवता भगवता अधिष्ठितः पर्वतविशेषः क इति चेत्; मङ्गलाशासनध्वनिमुखरमुखसार्वत्रिकजनवृन्ददन्तुरो दाक्षिणात्यो वनाद्रिः ॥

(गाथा.) तकार् मिक्काईळै चश्चलम् शेय्युम् शलवरै *
तेक्का नेरिये पोक्कुविकुम् शेल्वन् पोन्मलै *
एक्कालमुम् शेन्रु शेविच्चिरुक्कुमडियरै *
अक्कानेरियै मात्तुम् तण्मालिरुम् शोलैये ॥ ३ ॥

भगवता तुल्यान् ततोऽभ्यधिकांश्च भागवतान् घ्नतां छलात्मनां पापिनां नरकमार्गप्रापणे प्रवीणेन माधवेनाधिष्ठितः स्पृहणीयोऽद्रिविशेषः क इति चेत्; सततं समेत्य संसेवमानान् भक्तजनान् घोरनिरयमार्गप्रवेशविधुरान् कुर्वाणस्तापहरो वनाद्रिः ॥ .... .... .... .... .... (३)

(गाथा.) आनायर्कूडि अमैत्त विळवै * अमरर्तम्
कोनार्क्कोंळिय गोवर्धनत्तु चेय्दान्मलै *
वानाट्टिल् निन्रु मामलर् कर्पकत्तोत्तिळि *
तेनारु पायुम् तेन् तिरुमालिरुम् शोलैये ॥ ४ ॥

गोपालवृद्धैस्संमिळितैस्संकलितमन्नकूटोत्सवममरेशभोगानर्हमाकलय्य गोवर्धनाद्रये कारितवता भगवताऽधिष्ठितः पर्वतश्रेष्ठः क इति चेत्, देवलोकवर्तिनो महनीयकुसुमभरभरितस्य कल्पकानोकहस्य गुलुच्छतः प्रसृमरो मधुपूरो यत्र नदीरूपेण प्रवहति स वनाद्रिः ॥ .... .... .... .... (४)

(गाथा.) ओरुवारणम् पणिकोण्डवन् पोय्हैयिल् * कञ्जन्तन्
ओरुवारणम् उयिरुण्डवन् शेन्रुरैयुम् मलै *
करुवारणम् तन्पिडि तुरन्दोड * कडल्वण्णन्
तिरुवाणै कूरत्तिरियुम् तण्मालिरुम्शोलैये ॥ ५ ॥

पुरा तटाकतीरे वारणेन्द्रस्य कैङ्कर्यमनुभूतवता कंसवारणमारणकृता च भगवताऽधिष्ठितः पर्वतश्रेष्ठः क इति चेत्; * सुन्दरदोर्दिव्याज्ञालम्भनकातरवशानुयायिनि करिणि। प्रणयजकलहसमाधिर्यत्र वनाद्रि स्स एष सुन्दरदोष्णः * इति श्री कूरनाथगुरुवरोक्तरीत्या स्वदयिता वशा प्रणयरोषेण वैमुख्यमासेदुषी 'सुन्दरबाहोर्भगवतो दिव्याज्ञा' इति करिकृतां शपथोक्तिमाकर्ण्य यत्र परावर्तते स वनाद्रिः ॥ .... .... (५)

(गाथा.) एवित्तुचेय्वान् एन्रेदिर्न्दु वन्द मल्लरै *
शावत्तहर्त्त शान्दणितोळ् चतुरन् मलै *
आवत्तनमेन्रु अमरर्हळुम् नन्मुनिवरुम् *
शेविच्चिरुक्कुम् तेन्तिरुमालिरुम् शोलैये ॥ ६ ॥

कंसप्रेरणया स्पर्धितुमागतान् चाणूरमुष्टिकादीन् मल्लान् क्षिप्रं व्यापादितवता, तथाऽपि कुब्जालिप्त चन्दनपङ्क-लेपमनापुषा च चतुरेण भगवताऽधिष्ठितः पर्वतश्रेष्ठः क इति चेत्; विरिञ्चादयस्सुराः सनकादयो महर्षयश्च 'आपद्धनभूत भगवन्!' इति स्तुवन्तो यत्र नित्यसेवानिरता विलसन्ति, स वनाद्रिः ॥ .... (६)

(गाथा.) मन्नर्मरुह मैत्तुनन्माक्कु ओरुतेरिन्मेल् *
मुन्नङ्गुनिन्नु मोळैयेळुवित्तवन् मलै *
कोन्नविल् कूर्वेर्कोन् नेडुमारन् तेन्कूडर्कोन् *
तेन्नन् कोण्डाडुम् तेन् तिरुमालिरुम् शोलैये ॥ ७ ॥

कुरुक्षेत्रं प्रति युद्धाय प्रयाणकाले पाण्डवरथाश्वेषु भृशं पिपासितेषु वारुणास्त्रप्रयोगतो महीतलात्पयःपूरमुद्भावितवता अतएव धार्तराष्ट्राणां हृदयक्षोभमुत्पादितवता च कृष्णभगवताऽधिष्ठितः पर्वतश्रेष्ठः क इतिचेत्; * इदमिमे शृणुमो मलयध्वजं नृपमिह स्वयमेव हि सुन्दर। चरणसात्कृतवानिति * इति श्रीकूरनाथगुरुवरोक्तरीत्या सुतीक्ष्णहेति-हस्तेन राजाधिराजेन मलयध्वजेनोपलालितो वनाद्रिः ॥ .... .... .... (७)

(गाथा.) कुरुहाद मन्नरै कूडुकलकि वेङ्गानिडै *
शिरुहाल् नेरिये पोक्कुविकुम् शेल्वन् पोन्मलै *
अरुहाल् वरिवण्डुगळ् आयिर नामम् शोल्लि *
शिरुहालैप्पाडुम् तेन् तिरुमालिरुम् शोलैये ॥ ८ ॥

ये नाम विमुखास्सन्ति राजानः तान् समूलमुन्मूल्य कर्कशेषु रूक्षेषु काननेषु विद्रुतान् कुर्वता श्रीधरेणाधिष्ठितः पर्वतश्रेष्ठः क इति चेत्; प्रभाते श्रीविष्णुसहस्रनामसंकीर्तननिरतानां षट्पदानां झंकारैस्संकुलो वनाद्रिः ॥ [ * षट्पदोऽयं द्विखण्ड इत्युक्तद्वयाख्यमन्त्ररत्नानुसन्धाननिरता भागवता इह षट्पदशब्देनापदिश्यन्त इति वेदितव्यम् ॥ .... .... .... .... .... (८)

(गाथा.) शिन्दप्पुडैत्तु शेङ्गुरुदिकोण्डु भूतङ्गळ् *
अन्दिप्पलिकोडुत्तु आवत्तनम् शेय् अप्पन्मलै *
इन्दिरकोपङ्गळ् एम्बेरुमान् कनिवायोप्पान् *
शिन्दुम् पुरविल् तेन् तिरुमालिरुम् शोलैये ॥ ९ ॥

भूतयोनयस्सन्तोऽपि वैष्णवनामरूपशालिनो भगवद्भागवतभक्तिभरिताश्च सञ्चरन्तो भूतगणाः (आस्तिकजनान् समीक्ष्य कृताञ्जलयस्तिरोहिता भूत्वा) देहपोषणैकसक्तान् नास्तिकान् प्रसभं प्रहृत्य तद्देहनिस्सृतरुधिरधाराः स्वजात्यनुरूपतया स्वयं पिबन्तः सुन्दरबाहवे भगवते निवेद्य, आपद्धनभूतोऽयं भगवानिति प्रतिपत्त्या यस्य स्वामिनो गिरिवरमाश्रयन्ते तस्यासौ गिरिवरः क इति चेत्; भगवतो बिम्बोपमेयं दिव्याधरं स्मारयतामिन्द्रगोपाभि-धानां जन्तुविशेषाणां सञ्चारतस्संकुलैः सानुभिः परीतो वनाद्रिः ॥ .... .... (९)

(गाथा.) एट्टुत्तिशैयुम् एण्णिरन्द पेरुन्देविमार् *
विट्टुविळङ्ग वीत्तिरुन्द विमलन् मलै *
पट्टिप्पिडिहळ् पहडुरिञ्जिचेन्रु मालैवाय् *
तेट्टित्तिळैक्कुम् तेन् तिरुमालिरुम् शोलैये ।। १० ।।

सर्वतो दिक्षु समुल्लसन्तीनां दिव्यमहिषीणां [षोडशसहस्रदेवीवर्गस्य] मध्ये द्वारकायां सिंहासनमध्यासीनस्य विमलस्य भगवत आवसथभूतः पर्वतश्रेष्ठः क इति चेत्; सायं स्वैरचारिकरिणीकलभसंश्लेषलीलाविलासविभासुरो वनाद्रिः ॥ .... .... .... .... .... (१०)

(गाथा.) मरुदप्पोळिलणि मालिरुम् शोलै मलैतन्नै *
करुदियुरैकिन्र कार्कडल् वण्णनम्मान् तन्नै *
विरदम् कोण्डेत्तुम् विल्लिपुत्तूर् विष्णुचित्तन् शोल् *
करुदियुरैप्पवर् कण्णन् कळलिणै काण्बर्हळे ।। ११ ।।

कुरवकानोकहवितितजटिलं श्रीवनाद्रिं सबहुमानमधितिष्ठतः सिन्धुसवर्णस्य भगवतस्सुन्दरबाहोः स्तुतौ नियमपूर्वकं निष्णातस्य श्रीधन्विनव्यपुरनाथस्य विष्णुचित्तसूरेस्सूक्तमिदं सादरं संकीर्तयन्तो भक्ताः श्रीकृष्णभगवत्पादारविन्द-द्वन्द्वसंदर्शनभाग्यभाजस्स्युरिति फलकीर्तनेन समापितमिदं दशकम् ॥ .... .... (११)

तथा च एतद्दशकसारांशसंग्राहकश्लोक एषः

लोकप्रध्वंसिरक्षोगणहननपटोरिन्द्रपूजानिरोद्धुः
हस्तित्रातुश्च हस्तिक्षपणकृतधियो वारुणास्त्रप्रयुक्त्या ।
पार्थाश्वप्रीणनस्य स्थितिमतिविभवां बिभ्रति श्रीवनाद्रौ
प्रेमाणं निस्सपत्नं प्रकटयति मुनिर्विष्णुचित्तोऽत्र सूक्ते ॥

इति श्रीभट्टनाथसूक्ते चतुर्थशतके द्वितीयं दशकमवसितम् ॥

श्रीभट्टनाथसूरिदिव्यचरणावेव शरणम् ॥

---

॥ श्रीरस्तु ॥

॥ श्रीविष्णुचित्तसूरिदिव्यचरणावेव शरणम् ॥

श्रीभट्टनाथसूक्ते चतुर्थशतके तृतीयं दशकम्

## ४-३. उरुप्पिणिनङ्गैतन्नै ॥

अवतारिका—इदमपि दशकं पूर्वदशकमिव श्रीवनाद्रिदिव्यदेशस्यैव प्रशंसनतत्परम् । सूरिवरोऽसौ दिव्यदेशेऽस्मिन् विशिष्य प्रावण्यशाली; अत एव उपरिष्टादपि पञ्चमशतके तृतीयदशकेन पुनरपि स्तौति दिव्यदेशमिमम् ॥ वस्तुतः परमभोग्यः परमरमणीयश्च खल्वयं सुप्रसिद्धवैभवनिधिर्दिव्यदेशः । गिरिवरेऽस्मिन् विराजमानो भगवान् श्रीमत्यां रुक्मिणीदेव्यां गाढानुरागभरितहृदयः । कालिययमलार्जुनधेनुकादिहननविख्यातविक्रमः नरकासुराभिधानस्य क्षोणीपुत्रस्य विध्वंसने विशारदः बाणासुरबाहुवनच्छेदनचतुरः शिशुपालनिहन्ता द्रौपदीमङ्गल-सूत्ररक्षणदक्षिणः दशवदनमदमर्दनश्चेत्युच्चावचैः प्रकारैरभिष्टूयते दशकेनानेन । एतादृशप्रभावशालिना भगवता-ऽलंकृतो वनाचल एवास्माकं गतिरिति कथितं भवति ॥ .... .... .... *

(गाथा.) उरुप्पिणिनङ्गै तन्नै मीट्टूपान् तोडन्दोंडिचेन्न *
उरुप्पनैयोट्टिकोण्डिट्टु उरैत्तिट्ट उरैप्पन् मलै *
पोरुप्पिडैकोन्रै निन्रु मुरियाळियुम् काशुम् कोण्डु *
विरुप्पोडु पोन्वळङ्गुम् वियन्मालिरुम् शोलैयदे ॥ १ ॥

रुक्मिणीं देवीं स्वसविधादपहर्तुमभ्युजिहानं रुक्मिनामानं प्रसभमवस्कन्द्य रथचरणे निबध्य तत्परिभवं वाचामगोचर-मुत्पादितवता भगवता वासुदेवेनाधिष्ठितो गिरिवरः क इति चेत्; सौवर्णाङ्गुलीयकदीनारादिदाननिरतवदान्य-पुरुषनिर्विशेषं सुवर्णसदृशकोरककुसुमाद्यवकिरणनिरतकनकानोकहपरीतो महान् वनाद्रिनामा दिव्यदेशः ॥

[ **टिप्पणीः**—भाषायां कोन्रैवृक्ष इति व्यवह्रियमाणो वृक्षविशेषः कनकानोकहशब्देनात्र विवक्षितः । एतज्जातीया वृक्षा वनाद्रौ सन्त्यपरिमिताः । अस्मादनोकहविशेषादुद्भवत् कोरककुसुमादिकं सर्वं वस्तुजातं सुवर्ण-सदृशमेव स्यात् । तथा चैवंविधवस्तूत्पादकास्तरुविशेषाः सौवर्णाङ्गुलीयकदीनारादिप्रदातृवदान्यपुरुषसधर्माण इति कथितमिह चारुतरम् ॥ हिरण्मयाङ्गुलीयकदीनारादिसदृशान्येव वस्तूनि कनकानोकहतः प्रादुर्भवन्तीति प्रसिद्धिः ॥(१)

(गाथा.) कञ्जनुम् कालियनुम् कलिरुम् मरुदुमेरुदुम् *
वञ्जनैयिन्मडिय वळर्न्द मणिवण्णन् मलै *
नञ्जुमिळ् नाहमेळुन्दणवि नळिर्मामदियै *
शेञ्जुडर् नावळैक्कुम् तिरुमालिरुम् शोलैयदे ॥ २ ॥

कंसकालियकुवलयापीडयमलार्जुनवृषभासुरादिनिरसननिपुणेन वर्धिष्णुना भगवता वासुदेवेनाधिष्ठितः पर्वतश्रेष्ठः क इति चेत्;—स्वकीयया रसनया हिमकरमास्वादयितुमभ्युजिहानैर्विषधरैः परीतो वनाद्रिः ॥ [गिरिवरस्यास्य चन्द्रमण्डलस्पर्शितारूप उच्छ्रायातिशय उक्तो भवति ॥] .... .... .... (२)

(गाथा.) मन्नु नरहन् तन्नै शूळ्पोहि वळैत्तेरिन्दु *
कन्निमहळिर् तम्मै कवर्न्द कडल्वण्णन् मलै *
पुन्नै शेरुन्दियोडु पुन वेङ्गैयुम् कोङ्गुम् निन्रु *
पोन्नरिमालैहळ्शूळ् पोलिळ् मालिरुम् शोलैयदे ॥ ३ ॥

वलिष्ठनरकासुरवधप्रकारं विमृश्य तमाक्रम्य हेतिराजप्रयोगतो निहत्य, तेन पुरा कारागृहे निहिताः षोडशसहस्रसंख्याः कन्यकाः स्वपत्नीत्वेन स्वीकृतवता सागरसवर्णेन भगवताऽधिष्ठितः पर्वतश्रेष्ठः क इति चेत् :—पुन्नागसुरपुन्नागाद्यनेकानोकहा वृन्दशः स्थित्वा हिरण्मयपुष्पाणि प्रसुवानास्सन्तो यं हिरण्मयमालिकापरिवृतमिवावभासयन्ति स एष वनाद्रिः ॥ .... .... .... .... .... (३)

(गाथा.) मावलि तन्नुडैय महन्वाणन् महळिरुन्द *
कावलैक्कट्टळित्त तनिकाळै करुदुम्मलै *
कोवलर् गोविन्दनै कुरमादर्हळ्, पण्कुरिञ्जि *
पावोलिपाडि नडम्पयिल् मालिरुम् शोलैयदे ॥ ४ ॥

महाबलिचक्रवर्तिसूनोर्बाणासुरस्य दुहित्रा उषयाऽध्युषितं सुरक्षितं भवनं भञ्जितवता पुरुषपुंगवेन वासुदेवेन स्वानुरूपवासस्थलत्वेनावधारितो गिरिवरः क इति चेत् ;—गोपालकृष्णं गोविन्दमधिकृत्य सुस्वरं गायन्तीभिर्नृत्यन्तीभिश्च भिल्लपुरन्ध्रीभिः परिवृतस्स एव वनाद्रिः ॥ .... .... .... (४)

(गाथा.) पलपल नाळम् शोल्लिप्पळित्त शिशुपालन् तन्नै *
अलवलैमै तविर्त्त अळहन् अलङ्गारन् मलै *
कुलमलै कोलमलै कुळिर्मामलै कोत्तमलै *
निलमलै नीण्डमलै तिरुमालिरुम् शोलैयदे ॥ ५ ॥

स्वविषयकाण्यनवधिकान्युपालम्भवचनानि प्रजल्प्य दूषितवतः शिशुपालस्य वाचाटत्वं विनाशितवता अलङ्कारनाम्ना सुन्दरबाहुना भगवताऽधिष्ठितः पर्वतश्रेष्ठः क इति चेत् ;—भक्तकुलसंजीवनः सौन्दर्यनिधिः परमशीतलो जयशीलः पुष्पफलद्रुमाद्यभिवृद्धियोग्यस्थलमय उत्तुङ्गशिखराञ्चितश्च स एव वनाद्रिः ॥ .... .... (५)

(गाथा.) पाण्डवर्तम्मुडैय पाञ्चालिमरुक्कमेल्लाम् *
आण्डङ्गु नूत्तुवर्तम् पेण्डिर्मेल्वैत्त अप्पन् मलै *
पाण्डहुवण्डिनङ्गळ् पण्गळ्पाडि मदुप्परुह *
तोण्डलुडैयमलै तोल्लैमालिरुम् शोलैयदे ॥ ६ ॥

पञ्चपाण्डवदयितायाः पाञ्चाल्यास्संतापमखिलमपि धार्तराष्ट्राणां दयितासु अनुप्रवेशितवता भगवताऽधिष्ठितो गिरिवरः क इतिचेत् ;—संगीतमुखरमधुपावलीनां मधुपानसौकर्यार्थमुद्यानवनसमुल्लासाय अगाधजलाशयभरितः शाश्वतिको वनाद्रिः ॥ .... .... .... .... .... (६)

(गाथा.) कनङ्गुळैयाळ् पोरुट्टा कणै पारित्तु, अरक्कर् तङ्गळ् *
इनम् कळुवेत्तुवित्त एळिल्तोळेम्मिरामन् मलै *
कनम् कोळितेळ्ळुवि वन्दु शूळ्न्दु अहलू आलमेल्लाम् *
इनम् कुळुवाडुम् मलै एळिलू मालिरुम् शोलैयदे ॥ ७ ॥

कनकमयकुण्डलालंकृतकर्णशालिन्यास्सीतायाः कृते सायकान् प्रयुज्य नक्तञ्चरवृन्दं कङ्कगृध्रोपभोज्यं कृतवता सुन्दरबाहुना भगवता राघवेणाधिष्ठितः पर्वतश्रेष्ठः क इति चेत् :—हिरण्याद्यनर्घवस्तुभिस्सह प्रवहन्त्यां नूपुर-गङ्गायामवगाहनार्थमितस्ततो बृन्दशस्समुपस्थितैर्भक्तैः परीतो रमणीयो वनाद्रिः ॥ ... (७)

(गाथा.) एरिशिदरुम् शरत्ताल् इलङ्कैयिनै, * तन्नुडैय
वरिशिलै वायिल्पेय्दु वाय्क्कोड्डम् तविर्त्तुहन्द *
अरैयनमरुम् मलै अमररोडु कोनुम् शेन्रु *
तिरिशुडर् शूळुम् मलै तिरुमालिरुम् शोलैयदे ॥ ८ ॥

वर्हि वमतस्सायकान् प्रयुज्य लङ्कापुरीं स्वकीयधनुर्वंशंवदामाकलय्य, "द्विधा भज्येयमप्येवं न नमेयं तु कस्यचित्" इत्युक्तिप्रकटितं रावणस्यावलेपमपाकृतवता प्रभुवरेणाधिष्ठितः पर्वतश्रेष्ठः क इति चेत्; सपरिवारेण शचीपतिना दिवाकरदोषाकराभ्यां च परिचर्यमाणस्स एव वनाद्रिः ॥ .... .... .... (८)

(गाथा.) कोट्टुमणू कोण्डिडन्दु कुडङ्गैयिल् मणू कोण्डळन्दु *
मीट्टुमदुण्डुमिळ्न्दु विळैयाडु विमलन् मलै *
ईट्टिय पल्पोरुळ्हळ् एम्बिरानुक्कु अडियुरैयेन्नु *
ओट्टरुम् तण्शिलम्बारुडै मालिरुम् शोलैयदे ॥ ९ ॥

हिरण्याक्षापहृतां भूमिमादिवराहरूपेण दंष्ट्राग्रतस्समुद्धृतवता, महाबलिहृतं त्रैलोक्यं भिक्षुरूपेण पदत्रयक्रमणच्छलेन स्वायत्तीकृतवता, भुवं प्रलये निगीर्य अथ चोद्गीर्णवता, सर्वमिदं कृत्यजातमवलीलयैव निर्वहता विमलेन च भगवताऽधिष्ठितः पर्वतश्रेष्ठः क इति चेत्; अनर्घाणि सुबहूनि मणिमुक्तादिवस्तूनि भगवते उपायनतया समर्प्य प्रवहन्त्या शिशिरया नूपुरापगया मुखरस्स एव वनाद्रिः ॥ .... .... .... (९)

(गाथा.) आयिरम् तोळ्परप्पि मुडियायिरम् मिन्निलह *
आयिरम् पैन्दलैय अनन्तशयनन् आळुम् मलै *
आयिरमारुहळुम् शुनैहळ् पलवायिरमुम् *
आयिरम् पूम्पोळिलुमुडै मालिरुम् शोलैयदे ॥ १० ॥

बाहूनां सहस्रं प्रसार्य शिरसां सहस्रं किरीटखचितमणिप्रभापुञ्जतस्समृद्धप्रकाशमारचय्य च सहस्र फणाञ्चितं भुजगराजमधिशयानेन भगवता सादरमूरीकृतः पर्वतश्रेष्ठः क इति चेत्; सरित्सहस्रैर्जलाशयनियुतै र्दिव्योद्यानप्रयुतैश्च विराजमानो वनाद्रिः ॥ .... .... .... (१०)

(गाथा.) मालिरुम् शोलैयेन्नुम् मलैयैयुडैय मलैयै *
नालिरुमूर्तितन्नै नाल्वेदक्कडलमुदै *
मेलिरुम् कर्पहत्तै वेदान्त विळुप्पोरुळिल् *
मेलिरुन्द विळक्कै विट्टुचित्तन् विरित्तनवे ॥ ११ ॥

श्रीवनाद्रिनामकदिव्यगिरिवरस्वामिनं गिरिवरसधर्माणं सुमहितवासुदेवसंकर्षणप्रद्युम्नानिरुद्धाभिधानमूर्तिचतुष्टयात्मकम् ऋग्यजुस्सामाथर्वणाख्यवेदचतुष्टयरूपसागरसंभूतदिव्यामृतस्वरूपिणम् उत्तुङ्गकल्पशाखिनं वेदान्तपरमार्थसर्वस्वभूत-प्रदीपात्मकं च परमात्मानमुद्दिश्य विष्णुचित्तेन विज्ञापितमिदं दशकमतिभोग्यम् ॥ .... (११)

— तथा चैतद्दशकसारांशसंग्राहकश्लोक एषः —

रुक्मिण्यां गाढरूढप्रणयभरितहृत् कालियादिप्रहर्ता
विध्वस्तक्षोणिपुत्रो बलिजभुजवनच्छेदनश्चैद्यहन्ता ।
पाञ्चालीसूत्ररक्षी दशवदनमदध्वंसनो यत्र रागी
सोऽयं श्रीकाननाद्रिश्शरणमिति महान् विष्णुचित्तोऽभिधत्ते ॥

इति श्रीभट्टनाथसूक्ते चतुर्थे शतके तृतीयं दशकमवसितम् ॥
श्रीभट्टनाथदिव्यसूरिदिव्यचरणावेव शरणम् ॥

---

॥ श्रीरस्तु ॥

॥ श्रीमते रामानुजाय नमः ॥ श्रीमद्वरवरमुनये नमः ॥

श्रीभट्टनाथसूक्ते चतुर्थशतके

## ॥ ४–४. चतुर्थं दशकम्—नावकारियम् शोल्लिलादवर् ॥

अवतारिका—पाण्ड्यमण्डले तिरुक्कोट्टियूर्नाम्ना प्रसिद्धः श्रीगोष्ठीपुराभिधानो दिव्यदेशो विराजते परमविलक्षणः; तमिममधिवसतां भागवतानां प्रशंसनमुखतस्स एष दिव्यदेशोऽनुभूयते सूरिवरेण दशकेऽस्मिन् । अत्रत्याः श्रीवैष्णवा भक्ताग्रेसराः कीदृशाः? क्षुद्रपुरुषार्थलिप्सया क्षुद्रनरप्रशंसनम् अनृतभाषणम् इतरजनदूषणं चेत्येवंविधानां वाग्दुरितानां वैदेशिकाः; दुर्भिक्षकालेऽप्यतिथिसत्कारे अतीव समुत्सुकाः, किं बहुना! सर्वथाऽपि निरवद्या नित्यनैमित्तिकादिकर्मानुष्ठानबद्धश्रद्धाः । एवंविधप्रभावभासुरैर्भागवतैराढ्यमिदं क्षेत्रम् तेषां भागवतानां भवनेषु दिव्येषु भासमानानां मणीनां प्रभया प्रोज्ज्वलं च । एवंविधे दिव्यगोष्ठीपुरे विराजमानं भगवन्तं ये नाम कैङ्कर्यत आह्लादयन्ति, तेषां प्रशंसनम्, अतथाविधानां विनिन्दनं च निबध्नाति सूरिवरोऽस्मिन् दशके ॥

(गाथा.) नावकारियम् शोल्लिलादवर् नाळ्तोरुम् विरुन्दोम्बुवार् *
देवकारियम् शेय्दु वेदम् पयिन्नुवाळ् तिरुक्कोट्टियूर् *
मूवर् कारियमुम् तिरुत्तुम् मुदल्वनै चिन्दियाद, * अप्
पावकारिहळैप्पडैत्तवन् एङ्ङनम् पडैत्तान् कोलो ॥ १ ॥

नरस्तुतिमिथ्याकथनादिवाचिकावद्यविदूरगैः नित्यमतिथिसत्कारनिरतैश्च श्रीवैष्णवैर्भगवदाराधनप्रवणैराम्नायाभ्यसननिष्णातैर्मण्डिते श्रीगोष्ठीपुराभिधाने दिव्यदेशे विराजमानं मूर्तित्रयकृत्यनिर्वाहकं जगन्निदानं भगवन्तं ये न चिन्तयन्ति तान् पापिनो जनान् स्रष्टा हन्त कथमिव ससर्ज ॥

["न विषेण न शस्त्रेण नाग्निना न च मृत्युना । अप्रतीकारपारुष्याः स्त्रीभिरेव स्त्रियः कृताः" इतिवत् ते पापिनो न विधात्रा सृष्टाः; अपि तु स्वात्मनैव सृष्टा इति हृदयम् ।] .... (१)

(गाथा.) कुत्तमिन्नि कुणम् पेरुक्कि गुरुक्कळुक्कु अनुकूलराय् *
शेत्तमोन्नुमिलाद वण्कैयिनार्हळ् वाऴ् तिरुक्कोट्टियूर् *
तुत्तियेळुलहुण्ड तूमणिवण्णन् तन्नैत्तोळादवर् *
पेत्ततायर् वयित्तिनै प्पेरु नोय् शेय्वान् पिरन्दार्हळे ॥ २ ॥

निरवद्यगन्धैरभिवर्धमानगुणवृन्दैः आचार्यानुवर्तनशीलैः कामक्रोधादिदुर्गुणदूरगैरुदारैश्च श्रीवैष्णवैर्मण्डिते श्रीगोष्ठीपुरदिव्यदेशे विराजमानं समयविशेषे सप्तलोकीनिगरणनिपुणं नीलमणिनिभं च भगवन्तं ये न प्रणमन्ति, हन्त ते जननीजठरवेदनाविवर्धनाय परं गर्भतो बहिर्निस्सृताः ॥ .... .... .... (२)

(गाथा.) वण्ण नल्मणियुम् मरतकमुळुत्ति निळलेमळुम् *
तिण्णैशूळ् तिरुक्कोट्टियूर् तिरुमालवन् तिरुनामङ्गळ् *
एण्णक्कण्ड विरल्हळाल् ईरप्पोळुदुमेण्णहिलादु पोय् *
उण्णक्कण्ड तम् ऊत्तैवायूक्कु कवळमुन्दुकिन्नार्हळे ॥ ३ ॥

रमणीयमाणिक्यमरतकादिखचिततया प्रभाविशेषविभासुराभिर्वेदिकाभिर्विलसति श्रीमति गोष्ठीपुरदिव्यदेशे विराजमानस्य भगवतो माधवस्य दिव्यनाम्नां गणनार्थमेव सृष्टाभिरङ्गुलिभिस्तत्कार्यं क्षणमप्यकृत्वा कुक्षिम्भरिः पापी जनो वक्त्रे कवलप्रापणकर्मण्येव हन्त ता अङ्गुलीर्व्यापारयन्ति ॥ .... .... (३)

(गाथा.) उरहमेल्लणैयान् कैयिलुरै शङ्गम्पोल् मडवन्नङ्गळ् *
निरैकणम् परन्देरुम् शेङ्गमल वयल् तिरुक्कोट्टियूर् *
नरकनाशनै नाविर्कोण्डळैयाद मानिडशादियर् *
परुहुनीरुम् उडुकुम् कूरैयुम् पावम् शेय्दन ताङ्कोलो ॥ ४ ॥

सुकुमारतरभोगिभोगशयनीयशायिनो भगवतो दिव्यहस्तस्थितपाञ्चजन्यवदवभासमानैर्हंसवृन्दैरधिष्ठितानां सरसिजकुसुमानां विततिभिरभिरामैः केदारैः परिवृते श्रीगोष्ठीपुरदिव्यदेशे विलसन्तं नरकनाशनं भगवन्तं ये पापिनो नैव जिह्वया कीर्तयन्ति नराधमाः, तैःपीयमानं पानीयं परिधीयमानं वसनं च महत्तरपापफलतयैव तत्सम्बन्धमविन्दत हन्त ॥ .... .... .... .... .... (४)

(गाथा.) आमैयिन् मुदुहत्तिडैक्कुदिकोण्डु तूमलर् शाडिप्पोय् *
तीमैशेय्दिळवाळैहळ् विळैयाडुनीर् तिरुक्कोट्टियूर् *
नेमिशेर्तडङ्गैयिनानै निनैप्पिला वलिनेञ्जुडै *
पूमिभारङ्गळुण्णुम् शोत्तिनै वाङ्गिप्पुल्लैत्तिणिमिने ॥ ५ ॥

कच्छपानां पृष्ठतलमधिरुह्य तत उत्प्लुत्य सलिले निपत्य कुसुमानि श्लथयित्वा विहरद्भिर्झषैः परीतानि सरांसि बिभ्रति श्रीगोष्ठीपुरदिव्यदेशे विलसन्तं चक्रपाणिं भगवन्तं ये खलु नैव ध्यायन्ति तैः कठोरचित्तैः भुवो भरायितैः पापिभिर्भुज्यमानमन्नं प्रसभमपहृत्य तेषां वदनेषु घासान् प्रक्षिपत भोः ॥ .... .... (५)

(गाथा.) भूतमैन्दोडु वेळ्वियैन्दु पुलन्कळैन्दु पोरिहळाल् *
एदमोन्रुमिलाद वणू कैयिनार्हळ्वाऴ् तिरुक्कोट्टियूर् *
नादनै नरशिङ्गनै नविन्रेत्तुवार्हळुळक्किय *
पादधूळिपडुदलाल् इव्वुलहम् पाक्कियम् शेय्ददे ॥ ६ ॥

पञ्चभिर्भूतैः षञ्चभिर्महायज्ञैः पञ्चभिर्विषयैः पञ्चभिरिन्द्रियैश्च अवद्यगन्धविधुराणामुदाराणां श्रीवैष्णवानामावसथभूते श्रीगोष्ठीपुरदिव्यदेशे विलसन्तं नाथं नृसिंहं भगवन्तं संकीर्त्य स्तुवन्ति ये, तेषां पादारविन्दसंचारसमुद्भूतैः पांसुभिः स्पृष्टा सैषा मेदिनी भाग्याधिका भवति नूनम् ॥ [ टिप्पणी ;—पञ्चभिर्भूतैरवद्यगन्धविधुरत्वं नाम-पाञ्चभौतिकदेहस्य निरवद्यत्वमेव । भगवद्भागवतव्यतिरिक्तविषयेषु देहस्य विनियोजनमवद्यम् । तथाविधावद्यविरहिता इति यावत् । पञ्च महायज्ञा नाम-ब्रह्मयज्ञो देवयज्ञो भूतयज्ञः पितृयज्ञो मनुष्ययज्ञश्च । एतैरवद्यविधुरत्वं नाम वेदाध्ययन-अग्निहोत्र-प्राणिसमाराधन-पितृसंतर्पण-अतिथिसत्काररूपसत्कृत्यसंपन्नत्वम् । शब्दस्पर्शरूपरसगन्धाख्यैः पञ्चभिर्विषयै र्निरवद्यत्वं नाम—स्वरूपविरुद्धशब्दादिविषयवितृष्णत्वम् । पञ्चभिरिन्द्रियैर्निरवद्यत्वं नाम—चक्षुरादीनां पञ्चानामिन्द्रियाणां भगवद्भागवतैकविषयकत्वम् । एवं सर्वथा निरवद्यैर्महात्मभिरधिष्ठितोऽयं दिव्यदेश इति कथनेन एतादृशमहात्माधिष्ठितत्वमेव दिव्यदेशानां वैभवमिति च कथितं भवति । ] .... .... (६)

(गाथा.) कुरुन्दमोन्रोशित्तानोडुम् शेन्रु कूडियाडि विळाचेय्दु *
तिरुन्दु नान्मरैयोर् इराप्पहलेत्तिवाऴ् तिरुक्कोट्टियूर् *
करुन्दड मुहिल्वण्णनै कडैक्कोण्डु कैतोळुम् पत्तर्हळ् *
इरुन्दवूरिलिरुक्कुम् मानिडर् एत्तवञ्जळ् शेय्दार्कोलो ॥ ७ ॥

असुराविष्टकुन्दमहीरुहोत्पाटनपटुश्रीकृष्णभगवद्गुणानुभवरूपमहोत्सवमहितान्तरङ्गैः, तत्त्वयाथात्म्यप्रकाशकचतुर्वेदविशारदैश्च महात्मभिरहर्निशमभिष्टुतं श्रीगोष्ठीपुराधिनाथं वर्धुकवलाहकोपमं भगवन्तं स्वनैच्यानुसन्धानपूर्वकं प्रणिपतन्ति ये भागवताः, तैरध्युषिते देशे निवसन्तो मनुजास्सत्यं वाचामगोचरतपःफलानुभोक्तारः ॥ .... (७)

(गाथा.) नळिन्र्दशीलन् नयाचलन् अभिमान तुङ्गनै, नाडोरुम् *
तेळिन्द शेल्वनै चेवहङ्कोण्ड शेङ्गण्माल् तिरुक्कोट्टियूर् *
कुळिन्र्दुरैहिन्र गोविन्दन् गुणम् पाडुवारुळ्ळ नाट्टिनुळ् *
विळैन्द दानियमुम् इराक्कदर् मीदुकोळ्ळहिलार्हळे ॥ ८ ॥

अभ्यर्हितशीलगुणम् अप्रस्खलितनीतिमार्गम् अभिमानतुङ्गं सदासुप्रसन्नं च शेल्वनम्बिनामकं भक्ताग्रेसरमन्तरङ्गकिङ्करतया स्वीकृतवतः पुण्डरीकाक्षस्य गोष्ठीपुराधिनाथस्य गोविन्दस्य भगवतः शुभगुणान् कीर्तयन्तो महान्तो यत्र देशे विराजन्ते तत्र समुत्पद्यमानं धान्यादिकं राक्षसा नैवाभिभवितुं प्रभवन्ति ॥ देवभोग्यमेव तद्भवतीति यावत् ॥

[ टिप्पणी :—*यत्राष्टाक्षरसंसिद्धो महाभागो महीयते। न तत्र संचरिष्यन्ति व्याधिदुर्भिक्षतस्कराः * इत्याद्युपश्लोकितप्रभावशालिनो महाभागा भागवतोत्तमा अस्मिन् दिव्यदेशे निवसन्तीत्युक्तं भवति। गाथायामस्यां प्रस्तुतः शेल्वनम्बिसमाख्यो भक्ताग्रेसरः पाण्ड्यमण्डलाधिपतेर्वल्लभदेवभूपतेरमात्यः। श्रीविष्णुचित्तसूरेरस्य स एव महान् सूरित्वप्रापक इत्यपि वक्तुं शक्यम्। सूरेरस्य वैभवे तदनुसन्धेयम्। तिरुप्पल्लाण्डुदिव्यप्रबन्धे एकादश्यां गाथायामपि सोऽयं महात्मा अभिष्टुत इति स्मर्तव्यम्। तत्रेव अत्रापि अभिमानतुङ्ग इति विशेषणदर्शनात् महात्मा सोऽयम् अभिमानतुङ्गविरुदाञ्चित इवेत्युन्नीयते। श्रीवैष्णवाभिमाने समुत्तुङ्ग इति यावत्॥] .... (८)

(गाथा.) कोम्बिनार् पोळिल्वाय् कुयिलिनम् गोविन्दन् गुणम् पाडुशीर् *
शेम्पोनार् मदिळ्शूळ् शेळुङ्कळनियुडै त्तिरुकोट्टियूर् *
नम्बनै नरशिङ्गनै नविन्रेत्तुवार्हळैक्कण्डकाल् *
एम्बिरान् तन शिन्नङ्गळ् इवरिवरेन्रु आशैहळ् तीर्वने॥ ९॥

विविधविटपिविटपाभिराममहोद्यानिरतपरभृतनिकरोद्गीयमानगोविन्दगुणगणे हिरण्मयप्राकारपरिवृते सुसमृद्धकेदार-परिवेष्टिते च श्रीगोष्ठीपुरे विराजमानं भगवन्तं भक्तजनविश्वसनीयं नरहरिं स्तुवतो भागवतान् यद्यहं वीक्षेय, 'एते खलु महान्तो भगवत्पर्यायभूताः' इति संकीर्त्य कृतकृत्यो भवेयम्॥ .... .... (९)

(गाथा.) काशिन्वाय्क्करम् विर्किलुम् करवादु मात्तिलि शोरिन्दु *
तेशवार्त्तै पडैक्कुम् वण्कैयिनार्हळ्वाळ् तिरुकोट्टियूर् *
केशवा! पुरुषोत्तमा! किळर्शोदियाय्! कुरळा! एन्रु *
पेशुवारडियार्हळ् एन्तम्मै विर्कवुम् पेरुवार्हळे॥ १०॥

आत्यन्तिकदुर्भिक्षकालेऽपि विप्रलम्भमन्तरेण प्रत्युपकारनैरपेक्ष्येण अतिथिसत्कारमाकलय्य दिगन्तविश्रान्तकीर्तिं-मार्जयद्भिरुदारैर्महात्मभिरध्युषिते श्रीगोष्ठीपुरे विराजमानं भगवन्तमुद्दिश्य 'भो केशव! पुरुषोत्तम! तेजस्विन्! वामन!' भगवन्! इत्याक्रोशतां भक्तानां वयं विक्रयार्हा भवेम॥ .... .... (१०)

(गाथा.) शीदनीर् पुडैशूळ् शेळुङ्कळनियुडै त्तिरुकोट्टियूर् *
आदियानडियारैयुम् अडिमैयिन्रि त्तिरिवारैयुम् *
कोदिल् पट्टर्पिरान् कुळिर्पुदुवैमन् विष्णुचित्तन् शोल् *
एदमिन्रियुरैप्पवर् इरुडीकेशनुक्काळरे॥ ११॥

शिशिरसलिलधारासंवीतकेदारमालापरिवृतदिव्यगोष्ठीनगराधिनाथस्य आदिदेवस्य भगवतो दासभूतान् प्रशंसता, तद्दास्यविमुखान् विनिन्दता च श्रीधन्विनव्यनगराधिनाथेन निरवद्येन श्रीभट्टनाथापरनामधेयश्रीविष्णुचित्तमुनीन्द्रेण कीर्तितमिदं दशकमधीयानास्सन्तो हृषीकेशकिङ्करा भवितार इति फलकीर्तनेन समापितमिदं दशकम्॥ (११)

— तथाचैतद्दशकसारांशसंग्राहकं पद्यमिदम् —

क्षुद्रस्तोत्रं मृषोक्तिं परनरपरिवादं च ये नाद्रियन्ते
येषां दुर्भिक्षकालेऽप्यतिथिजनसमाराधना निस्समाना ।
तैराढ्ये तन्निकाय्यप्रचुरमणिरुचिप्रोज्ज्वले दिव्यगोष्ठी-
क्षेत्रे दीव्यन्तमीशं दशक इह महायोग्यसौ स्तौति साधु ॥

इति श्रीभट्टनाथसूक्ते चतुर्थशतके चतुर्थं दशकमवसितम् ॥
श्रीभट्टनाथमुनीन्द्रदिव्यचरणावेव शरणम् ॥

---

॥ श्रीरस्तु ॥

श्रीमच्छठकोपयतिराजवरवरमुनीन्द्रदिव्यचरणा एव शरणम् ॥

श्रीभट्टनाथसूक्ते चतुर्थशतके

## ॥ ४–५. पञ्चमं दशकम् — आशैवायूच्चेन्न ॥

अवतारिका—दशकेऽस्मिन् मुमुक्षूणां प्रशंसनम् तदितरेषां मोक्षरुचिविरहितानां भगवद्विमुखाना-मुपालम्भश्च प्रचलतः । ये खलु पामरा यावज्जीवं पुत्रकलत्रादिष्वेव ममकारम् अतिमात्रं वहन्तस्सन्तो दुर्वासना-मूलतृष्णास्सन्ततं संवर्धयन्तो म्रियन्ते कदाचन, अथ ते नानाविधा यातनाः प्राप्य भृशमवसीदन्ति-इत्यभागवत-निन्दनम्; ये तु हृदयाभिधाने दिव्यदेशे माधवाभिधानं दैवतं प्रतिष्ठाप्य प्रेमाभिधानपुष्पार्चनाभिस्तत्प्रीणननिरता भवन्ति ते तात्रदत्रामुत्र च शाश्वतसुखशालिनो भवन्तीति भागवतानां प्रशंसनं च कलयति भगवान् भट्टनाथसूरिवरः ॥

(गाथा.) आशैवाय्च्चेन्न शिन्दैयराहि अन्नै अत्तनेन् पुत्तिरर्भूमि *
वाशवार्कुळलाळेन्रु मयङ्गि माळुमेल्लैक्कण्वाय्तिरवादे *
केशवा ! पुरुडोत्तमा ! एन्नुम् केळलाहिय केडिली ! एन्नुम् *
पेशुवारवरेय्दुम् पेरुमै पेशुवान् पुहिल् नम्परमन्रे ॥ १ ॥

आशावशंवदचेतसो भूत्वा मम जननी मम जनको मम तनया मम क्षेत्रं मम भोग्यं कलत्रमित्येवंविधैरेवानुसन्धानैः व्यामुग्धास्स्थिता अपि चरमकाले बान्धवाभासनामोक्तीर्विहाय केशव पुरुषोत्तम दिव्यवराह भगवन्नच्युतेति ये संकीर्तयन्ति तेषां प्रभावस्सत्यं वाचामभूमिरस्माद्दशाम् ॥ .... .... .... (१)

(गाथा.) शीयिनाल् शेरिन्देरियपुण्मेल् शेत्तलेरिकुळम्बिरुन्दु, एङ्गुम् *
ईयिनालरिप्पुण्डु मयङ्गि एल्लैवाय्च्चेन्नु शेर्वदन्मुन्नम् *
वायिनाल् नमोनारणावेन्रु मत्तहत्तिडैकैहळैक्कूप्पि *
पोयिनाल् पिन्नै इत्तिशैक्केन्नुम् पिणैकोड्डकिलुम् पोहवोट्टारे ॥ २ ॥

मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंकुलशरीरजदु:खानि विविधान्यनुभूय मूर्च्छितास्सन्तो ये कदाचन मुमूर्षां वहन्ति ते तस्यामपि वा दशायां (चरमकाले) नमोनारायणायेति वाचा संकीर्त्य शिरस्यञ्जलिमाधाय यदि म्रियेरन्, ते सत्यमपुनरावृत्तिलक्षणं मोक्षमवाप्य नित्यानन्दनिरताः स्युः ॥ .... .... (२)

(गाथा.) शोर्विनाल् पोरुळ्वैत्तदुण्डाहिल् शोल्लुशोल्लेन्दु शुचुमिरुन्दु *
आर्विनविलुम् वाय्तिरवादे अन्दकालमडैवदन् मुन्नम् *
मार्वमेन्पदोर् कोयिलमैत्तु माधवनेन्नुम् दैवत्तै नाट्टि *
आर्वमेन्पदोर् पूविडवल्लार्कु अरवदण्डत्ति लुय्यलुमामे ॥ ३ ॥

विस्मृत्या यत्रकुत्रापि वित्तनिक्षेपः कृतस्त्याचदि कथ्यतां कथ्यतामिति परित उपविश्य बहुधा निर्बन्धे कृतेऽपि वाचमुद्धाव्य किमपि वक्तुमशक्तेरास्पदभूतस्यान्त्यकालस्य प्राप्तेः पुरस्तादेव हृदयाभिधानं दिव्यालयं परिष्कृत्य तत्र माधवाभिधानं दैवतं प्रतिष्ठाप्य भक्तिसमाह्वयमनुपमं पुष्पमर्पयितुं शक्तानां सतां यमकिङ्करयातनानिवर्तनं सुशकम्॥

(गाथा.) मेलेलुन्ददोर् वायुकिळर्न्दु मेल्मिडत्तिनै उळ्ळेवाङ्गि *
कालुम् कैयुम् विदिर्विदिर्त्तेरि कण्णुरक्कमदावदन्मुन्नम् *
मूलमाहिय ओत्तैयेलुत्त मून्नुमात्तिरै उळ्ळेवाङ्गि *
वेलैवण्णनै मेवुदिराहिल् विण्णहत्तिनिल् मेवलुमामे ॥ ४ ॥

उच्छ्वासाधिक्येन कण्ठेऽवरुद्धे पाणिपादपीडासु च अतिरिच्यमानासु दीर्घनिद्रापर्यायमरणे समुत्पन्ने परस्तान्न किमपि सुकृतं सुसम्पादं स्यात् । ततः प्रागेव सकलवेदमूलभूतं प्रणवं त्रिमात्रकमुच्चार्य सागरसवर्णमच्युतं यदि भजध्वे तर्हि ध्रुवा दिव्यधामप्राप्तिः ॥ .... .... .... .... (४)

(गाथा.) मडिवळिवन्दु नीर्प्पुलन्शोर वायिलट्टिय कञ्जियुम् मीण्डे *
कडैवळिवारकण्डमडैप्प कण्णुरक्कमदावदन्मुन्नम् *
तुडैवळि उम्मै नाय्हळ् कवरा शूलत्तालुम्मैप्पाय्वदुम् शेय्यार् *
इडैवळियिल् नीर्कूरैयुम् इळवीर् इरुडीकेशनेन्नेत्तवल्लीरे ॥ ५ ॥

यमकिङ्करदर्शनजनितभीत्या मूत्रावसिक्तनितम्बानां, वदनाद्बहिर्विनिस्सृतयवागूरसानाम्, अवरुद्धकण्ठानां च युष्माकं दीर्घनिद्राख्यमरणोपस्थितेः प्रागेव हृषीकेशचिन्तानिष्ठा यदि सिध्यति तर्हि न वो भविष्यति नरकमार्गेषु भषककर्तृकमूरुमूलखादनम्, नापि शूलाद्यायुधविशेषैः प्रहरणम्; न चापि पथि वस्त्रापहरणम् ॥ .... (५)

(गाथा.) अङ्गम् विट्टवैयैन्दु महत्ति आविमूक्किनिल् शोदित्तपिन्नै *
शङ्गम् विट्टवर् कैयैमरित्तु पैयवे तलै शाय्प्पदन्मुन्नम् *
वङ्गम् विट्टुलवुम् कडर्पळ्ळिमायनै मधुसूदनै मार्विल्
तङ्गविट्टुवैत्त * आवदोर्करुमम् शादिप्पार्क्कन्नम् शादिक्कलामे ॥ ६ ॥

पञ्चस्वपि प्राणेषु बहिर्निर्गतेषु नासाग्रे श्वासशोधनकर्मण्यपि निर्वृत्ते मरणनिश्चयेन बन्धुजनानां हस्तन्यस्तमस्तकता-दशा भवेन्ननु। ततः परं न किमपि सुकृतमार्जयितुं शक्यं स्यात्। ततः प्रागेव सागरशायिनं भगवन्तं मधु-सूदनं निजहृदयेऽवस्थाप्य सुकरं ध्यानं कुर्वतां सतां नित्यानन्दभागिता सुलभा॥ .... (६)

(गाथा.) तेन्नवन् तमर् शेप्पमिलादार् शेवतक्कुवार् पोलप्पुहुन्दु *
पिन्नुम् वन्कयित्ताल् पिणिचेत्तिप्पिन्मुन्नाह इलुप्पदन्मुन्नम् *
इन्नवनिनैयानेन्नुशोल्लि एण्णि उळ्ळत्तिरुळर नोक्कि *
मन्नवन् मदुशूदननेन्पार् वानहत्तु मन्नाडिहळ् तामे॥ ७॥

अतिकुटिलहृदो निर्घृणा यमकिङ्करा वृषभावमर्दनकर्तार इव समुपेत्य युष्मान् कर्कशपाशबद्धान् विरचय्य सन्ताड-यन्त उच्चावचानि हिंसनान्याकलयेयुः; ततः प्रागेव भगवत्स्वरूपरूपगुणनामानि संकीर्त्य अज्ञानध्वान्तवैदेशिकेन मनसा च विचिन्त्य सर्वस्वामी मधुसूदन इति कथयत। तथासति दिव्ये धाम्नि नित्यसूरिभ्योऽप्यभ्यधिका भविष्यथ॥

(गाथा.) कूडिकूडि उत्ताहळिरुन्दु कुत्तमुनिर्कै नचङ्गळ् परैन्दु *
पाडिप्पाडियोर् पाडैयिलिट्टु नरिप्पडैकोरु पाहुडम्पोले *
कोडिमूडियेडुप्पदन्मुन्नम् कौत्तुवमुडै गोविन्दनोडु *
कूडियाडिय उळ्ळत्तरानाल् कुरिप्पिडम् कडन्दु उय्यलुमामे॥ ८॥

बान्धवास्संवशो निपत्य (मृतानां) दुश्चरितगणान् विहाय सुचरितपरमाणुं पर्यतीकृत्य प्रशंसन्तस्सन्तः प्रलाप-विलापान् विशेषतः कृत्वा अथच आसन्दीमधिरोप्य नूतनेन वाससा समाच्छाद्य पितृवननिवासिभ्यो जम्बुकादिभ्यो मृगेभ्यः प्राभृतोपहरणरूपं नेष्यन्ति हि प्रेतान्। ततः प्रागेव, कौस्तुभोद्भासिवक्षसं गोविन्दमेव भगवन्तं यदि हृदि सुष्ठु संचिन्तयथ तर्हि अवश्यानुभाव्यनरकमार्गतोऽपसृत्य दिव्यं धाम निवेश्य समुज्जीविष्यथ॥ .... (८)

(गाथा.) वायोरुपकम् वाङ्गिवलिप्प वार्न्दनीर्कुळिक्कणगळ् मिळत्त *
तायोरुपकम् तन्दैयोरुपकम् दारमुमोरुपकमलत्त *
ती ओरुपकम् शेर्वदन्मुन्नम् शेङ्गण्मालोडुम् शिक्केनचुत्त
मायू * ओरुपकम् निर्कवल्लार्क्कु अरवदण्डत्तिलुय्यलुमामे॥ ९॥

"प्राणे दत्तप्रयाणे मुषितदिशि दृशि त्यक्तसारे शरीरे मत्यां व्यामोहवत्याम्" इत्युक्तप्रक्रियया वक्त्रे विह्वले नयने च बाष्पाकुले कलुषिते जननीजनककलत्रेषु च परित उपविश्य प्रलपत्सु भस्मसाद्भवितव्यता हि भवित्री। ततः प्रागेव पुण्डरीकाक्षं भगवन्तं परमबन्धुं परिगृह्य तदेकदैवतास्सन्ति ये ते सत्यं याम्ययातनादवीयांसो भवितारः॥

(गाथा.) शेत्तुप्पोवदोर्पोदुनिनैन्दु शेय्युम् शैयूहैगळ् देवपिरान्मेल् *
पत्तरायिरन्दार् पेरुम्पेत्तै पाळित्तोळ् विट्टुचित्तन् पुत्तूर्कोन् *
शित्तम् नन्कोरुङ्गि तिरुमालैचेय्दमालै इवै पत्तुम् वल्लार् *
शित्तम् नन्कोरुङ्गि तिरुमालमेल् शेन्नशिन्दै पेरुवर्तामे॥ १०॥

मरणकाले यमभटैः क्रियमाणानि विविधानि हिंसनानि पुरस्तादेव विचिन्त्य देवाधिदेवे भगवति भक्तास्सन्तो ये म्रियन्ते तैः प्राप्यं परमं फलमधिकृत्य विलक्षणभुजबलशालिना श्रीधन्विनव्यनगराधिनाथेन लक्ष्मीनाथैकसक्तचित्तेन श्रीविष्णुचित्तेन सूरिणा कीर्तितमिदं दशकं कीर्तयन्तो महान्तः श्रीमन्नारायणैकान्तिकभक्तिभूमभूषितचित्ता भवितार इति फलकीर्तनेन समापितमिदं दशकम् ॥ .... .... .... (१०)

टिप्पणी :—विलक्षणभुजबलशालित्वविशेषणं यदस्त्यत्र श्रीविष्णुचित्तसूरेः तदिदं न शौर्यवीर्याद्यभिमाननिबन्धनम् । *यद्वा न मे भुजबलं तव पादपद्मलाभे* इत्यस्यां श्रीगुणरत्नकोशदिव्यसूक्ताविव तात्पर्यमुन्नेयमिहापि ।]

— तथा चैतद्दशकसारसंग्राहकं पद्यमिदमिहानुसन्धेयम् —

माता मे मे कलत्रं मम सुत इति दुर्वासनामूलतृष्णाः
नित्यं संवर्धयन्तो मृतिमियुरिह ये ते विषीदन्ति हन्त ।
हृद्देशे स्थापयित्वा मुररिपुमनघप्रेमपुष्पार्चनाभिः
ये तं संमोदयन्ते नियतसुखजुषस्ते स्युरित्याह सूरिः ॥

इति श्रीभट्टनाथसूक्ते चतुर्थशतके पञ्चमं दशकमवसितम् ॥
श्रीभट्टनाथदिव्यसूरिदिव्यचरणावेव शरणम् ।

---

॥ श्रीरस्तु ॥

श्रीमते रामानुजाय नमः ॥ श्रीमद्वरवर मुनये नमः ॥

श्रीभट्टनाथसूक्ते चतुर्थशतके

## ॥ ४-६. षष्ठं सूक्तम् – काशुम् करैयुडै ॥

**अवतारिका**—जगति जातानां शिशूनां नामकरणसंस्कारं कुर्वन्तः पितरो धनपालनरपालनरवाहनचन्द्रेन्द्रादिनामानि कुर्वन्तीति प्रसिद्धमिदं ननु। तादृशेभ्योऽसमञ्जसकारिभ्यो मधुरतर उपदेशो दीयतेऽनेन दशकेन दिव्यसूरिणा । भोभो जनाः यूयं स्वापत्यानि क्षुद्रनामधारीणि कलयथ खलु तदिदं न स्वयंप्रयोजनतया, नाप्यामुष्मिकफलविशेषलिप्सया । अपि तु कतिपयकाकणिकानाम् अशनाच्छादनादीनां च लाभमेवाभिलष्य। हा हन्त! ईदृशाभिलापविवशानां युष्माकम् अविवेको हि भृशं शोचनीयः। एवं क्षुद्रफलकामनया क्षुद्राणि नामानि कुर्वन्तो यूयं यदि भगवतोऽच्युतस्य केशवस्य श्रीधरस्य पुण्डरीकाक्षस्य माधवस्य गोविन्दस्य दामोदरस्य नीलमेघनिभस्य नारायणस्य श्रीपतेर्नामानि दिव्यानि स्वस्वापत्येषु समाद्रियध्वे तर्हि नूनमत्रामुत्र च श्रेयो भूयो भवेद्वः । भगवन्नामधृत्या अत्र दारिद्र्यमेव फलति न पुनरन्य दित्यपि कामं भवतु ; भिक्षाचर्ययाऽपि कुक्षिपूरणं कामं युक्तं वः । सर्वथाऽपि स्वरूपविरुद्धनामकरणं तु हेयं विगेयमेव । नरकनाशकभगवन्नामकरणमेव नरकबाधानिवारणक्षमं पित्रोः—इति स्वादिष्ठमुपदिशति दशकेऽस्मिन् सूरिवरः ॥ *

(गाथा) काशुम् कैयुडैक्कूरैकुम् अङ्गोर्कैचैकुम् *
आशैयिनाल् * अङ्गवत्तप्पेरिडुम् आदर्हाल्
केशवन् पेरिट्टु नीङ्गल् तेनित्तिरुमिनो *
नायहन् नारणन् तम्मन्नै नरहम् पुहाळ् ॥ १ ॥

क्षुद्रमर्त्यसकाशे काकणिकां वा वसनं वा धान्यं वाऽपि लब्धुमिच्छया क्षुद्राणां नराणां हेयानि नामानि स्वापत्येषु चिकीर्षन्तो भो अन्धजनाः। केशवस्य भगवतो दिव्यं नाम कृत्वा संप्रहृष्टा वर्तध्वम्। सर्वलोकाधीशनारायण-नामधारिणस्तस्यापत्यस्य जननी नैव निरयमवाप्नुयात् ॥ .... .... .... .... (१)

(गाथा.) अङ्गोरुकूरै अरैक्कुडुप्पद नाशैयाल् *
मङ्गिय मानिडशादियिन् पेरिडु मादर्हाळ् *
शेङ्गणेडुमाल् शिरीदरा एन्नलैत्तकाल् *
नङ्गहाळ् नारणन् तम्मन्नै नरहम् पुहाळ् ॥ २ ॥

जघन्यमर्त्यसकाशे क्षुद्रं किमपि परिधानं प्रतिगृह्य धारयितुमिच्छया नश्वरमनुजनामानि स्वापत्येषु चिकीर्षन्तो भो विवेकान्धाः। पुण्डरीकाक्षस्य भगवतः श्रीधरस्य नाम यदि कुरुध्वे नारायणनामधारिणस्तस्यापत्यस्य प्रसूर्नैव नरक-मवाप्नुयात्।··भो ललनाः! युष्मानुद्दिश्य कथयाम्येतत् ॥ .... .... .... .... (२)

(गाथा.) उच्चियिलेण्णेयुम् शुट्टियुम् वळैयु मुहन्दु *
एच्चम् पोलिन्दीर्हाळ् एन् शेय्वान् पिरर् पेरिट्टीर् *
पिच्चै पुकाहिलुम् एम्बिरान् तिरुनाममे
नच्चुमिन् * नारणन् तम्मन्नै नरहम् पुहाळ् ॥ ३ ॥

अयि भोस्सन्तानसमृद्धा जनाः! अभ्यञ्जनयोग्यं किञ्चित्तैलं चूडाभूषणं करभूषणादिकं च प्रेप्सन्तः खलु यूयं नश्वरमर्त्यनामानि स्वापत्येषु कृतवन्तः। आः किमिदं मौढ्यम्! भगवतो नाम कृत्वा भिक्षाचर्ययाऽपि हि जीवनं वरम्। तदेव दिव्यं नाम कुरुत। अपत्यस्य माता पिताऽपि नरकं न विन्देत ॥ .... (३)

(गाथा.) मानिडशादियिल् तोन्त्रित्तोर्मानिडशादियै *
मानिड शादियिन् पेरिट्टाल् मरुमैक्किलै *
वानुडै मादवा गोविन्दा एन्नलैत्तकाल् *
नानुडै नारणन् तम्मन्नै नरहम् पुहाळ् ॥ ४ ॥

मानुषजातौ समुत्पन्नस्य मानुषजन्तोः मानुषजातीय क्षुद्रनामकरणे अमुत्र सद्गतिप्राप्त्यवकाशो नैव। नित्यविभूतिनाथ माधव गोविन्दनामकरणे सति मदीयनारायणनामधारिणस्तस्यापत्यस्य माता नैव दुर्गतिं प्रविशेत् ॥ .... .... .... .... .... .. (४)

(गाथा.) मलमुडै यूत्तैयिल् तोन्रित्तोर्मलवूत्तैयै *
मलमुडै यूत्तैयिन् पेरिट्टाल् मरुमैक्किल्लै *
कुलमुडै गोविन्दा गोविन्दा वेन्रळैत्तकाल् *
नलमुडै नारणन् तम्मन्नै नरहम् पुहाळ् ॥ ५ ॥

अशुचिशरीरतस्संजातस्य अशुचिशरीरभृतोऽपत्यस्य अशुचिशरीरकक्षुद्रमर्त्यनामकरणे सति आमुष्मिकश्रेयः प्राप्त्यवकाशो नैव हन्त। भगवन्नाम कृत्वा भोः कुलीन गोविन्दगोविन्देत्याह्वाने क्रियमाणे सुकृतशालिनी तस्यापत्यस्य माता नैव नरकं व्रजेत् ॥ .... .... .... .... (५)

(गाथा.) नाडुम् नहरुमरिय मानिडप्पेरिट्टु *
कूडियळुन्दिकुळियिल् वीळ्न्दु वळुक्कादे *
शाडिरप्पायन्द तलैवा दामोदरा एन्रु
नाडुमिन् * नारणन् तम्मन्नै नरहम् पुहाळ् ॥ ६ ॥

अङ्गप्राङ्गविभागमन्तरेण सर्वेऽपि जना यथा जानन्ति तथा स्वापत्येषु क्षुद्रमनुष्यैस्सह नरकेषु मा नाम निपतत भोः। भगवतो नाम कृत्वा शकटासुरमर्दनपटुचरण स्वामिन् दामोदरेति सादरमाह्वयत स्वस्वपुत्रान्। तथासति तज्जननी नैव विशेन्नरकम् ॥ .... .... .... .... .... (६)

(गाथा.) मण्णिल् पिरन्दु मण्णाहुम् मानिडप्पेरिट्टु * अङ्गु
एण्णमोन्रिन्रियिरुक्कुम् एळैमनिशर्हाळ् *
कण्णुक्किनिय करुमुहिल् वण्णन् नाममे
नण्णुमिन् * नारणन् तम्मन्नै नरहम् पुहाळ् ॥ ७ ॥

पृथिव्यां जनित्वा अन्ततो मृद्भावमेव भेजुषां मर्त्यानां नामानि स्वापत्येषु कृत्वा आमुष्मिकश्रेयस्सम्पादने विचारगन्धविरहितास्सन्तो भो विवेकदरिद्रा जनाः। दृष्टिभोग्यकालमेघसुभगस्य भगवत एव नाम कुरुध्वम्। तर्हि नारायणनामधारिणस्तस्यापत्यस्य माता नासादयेन्नरकम् ॥ .... .... .... (७)

(गाथा.) नम्बि पिम्बियेन्रु नाट्टुमानिडप्पेरिट्टाल् *
नम्बुम् पिम्बुमेल्लाम् नालुनाळि लळुङ्गिप्पोम् *
शेम्केरुन्तामरै कण्णन् पेरिट्टळैत्तकाल् *
नम्बिहाळ् नारणन् तम्मन्नै नरहम् पुहाळ् ॥ ८ ॥

धन्याढ्य इति गव्याढ्य इति च प्राकृतमनुष्याणां नामानि स्वापत्येषु यदि कुरुध्वे सा आढ्यता चतुर्षु दिनेषु विपर्यस्येत्। पृथुकमललोचनस्य भगवतो नाम कृत्वा तेन नाम्ना यद्याह्वयथ स्वापत्यानि, भोः पूर्णाः। नारायणनामधारिणोऽपत्यस्य जननी नैव नरकगामिनी स्यात् ॥ .... .... .... (८)

(गाथा.) ऊत्तैकुळियिल् अमुदम् पाय्वदुपोल् * उङ्गळ्
मूत्तिरप्पिळ्ळैयै एन्मुहिल्वण्णन् पेरिट्टु *
कोत्तुकुळैत्तु कुणालमाडि त्तिरिमिनो *
नात्तहु नारणन् तम्मन्नै नरहम् पुहाळ् ॥ ९ ॥

अशुचिगर्ते अमृतप्रस्रावणवत् युष्मदीयानामशुचीनामपत्यानाम् अस्मदीयजीमूतसवर्णभगवन्नाम कृत्वा सानन्दनर्तनानि ससंभ्रमं कल्यध्वम् । भगवन्नामकीर्तनमेव ननु जिह्वाया योग्यम् । अथ च नारायणनामधारिणस्तस्य माता नैव नरकं विन्देत ॥ .... .... .... ... .... (९)

(गाथा.) शीरणिमाल् तिरुनाममेयिडच्चेत्तिय *
वीरणितोल्पुहळ् विट्टुचित्तन् विरित्त *
ओरणियोण् तमिळ् ओन्वदोडोन्नुम् वल्लवर् *
पेरणि वैहुन्दत्तु एन्नुम् पेणियिरुप्परे ॥ १० ॥

शुभगुणसम्पन्नश्रीमन्नारायणदिव्यनामैव स्वस्वापत्येषु कर्तव्यमिति समुपदिशता जितेन्द्रियेण यशस्विना विष्णुचित्तमुनिवरेण सुविशदमभिहितममिरामद्राविडभाषात्मकं भक्तानां दिव्याभरणनिर्विशेषं चेदं दशकं कीर्तयन्तस्सन्तो वैकुण्ठधाम्नि विलसेयुरजस्रमिति फलकीर्तनेन समापितमिदं दशकम् ॥ .... .... (१०)

— तथा चैतद्दशकसारसंग्राहकमिदं पद्यमिहानुसन्धेयम् —

ते ते स्वामीयपुत्रान् धनवसनमुखक्षुद्रवस्त्वीप्सयैव
क्षोदिष्ठैर्नामधेयैर्विदधति सहितान्, तत्तु हेयं विगेयम् ।
भिक्षाचर्याऽपि वा स्यात् मधुमथनहरेर्दिव्यनामैव धार्यं
सर्वैर्मर्त्यैरितीदं सुललितवचनं प्राह षष्ठे मुनीन्द्रः ॥

इति श्रीभट्टनाथसूक्ते चतुर्थे शतके षष्ठं दशकमवसितम् ॥
श्रीभट्टनाथसूरिदिव्यचरणावेव शरणम् ॥

---

॥ श्रीरस्तु ॥

श्रीमते रामानुजाय नमः । श्रीमद्वरवरमुनये नमः ॥

श्रीभट्टनाथसूक्ते चतुर्थशतके सप्तमं दशकम्

## ॥ ४-७. तङ्गैयैमूक्कुम् तमैयनैत्तलैयुम् ॥

### श्रीदेवप्रयागदिव्यदेशस्तुतिः

अवतारिका—श्रीबदरिकाश्रममार्गे विराजमानं देवप्रयागक्षेत्रमेव "कण्डमेन्नुम् कडिनगरम्" इति द्राविड्या व्यपदिश्यत इत्याहुरार्यवृद्धाः । श्रीखण्डक्षेत्रमिति वा श्रीगण्डक्षेत्रमिति वा संस्कृतनाम भवितुमर्हति । क्षेत्रस्यास्य एतादृशनामसंभवे निदानं महतां मुखादेव निशमनीयम् । क्षेत्रेऽस्मिन् पुरुषोत्तमनामा भगवान् भागीरथीतीरे

दिव्यदर्शनप्रदानेन भक्तान् प्रहर्षयति। (अलकनन्दाभागीरथ्योरिह संगमो भवतीति स्मरन्तु भक्ताः।) तदेत-द्दिव्यक्षेत्रमनेन दशकेन स्तूयते। यत्रकुत्रापि पल्वले कूपे वा स्नानमाचरन्तोऽपि जना यदि गङ्गागङ्गेति कीर्तयेयुः तावन्मात्रेणापि तदीयाशेषपापप्रणाशो भवतीति कथ्यमानमिह नातिशयोक्तिः। तादृशप्रभावशालिन्या गङ्गासरित-स्तीरे नित्यसन्निधिमाकलयन्तं विधिशिवादिदिविषन्निषेवितं दैत्यरक्षोगणनिर्मूलनविचक्षणम् अप्रमेयगुणगणं पुरुषोत्तमं दाशरथिं भगवन्तं सुष्ठु स्तुत्वा संप्रीतस्वान्तो बोभवीति विष्णुचित्तसूरिवरः॥ .... .... *

(गाथा.) तङ्गैयै मूक्कुम् तमैयनैत्तलैयुम् तडिन्द एम् दाशरदिपोय् *
एङ्गुम् तन्पुहळाविरुन्दु अरशाण्ड एम्पुरुडोत्तमनिरुक्कै *
गङ्गै गङ्गैयेन्न वाशकत्ताले कडुविनै कळैन्दिडकिर्कुम् *
गङ्गैयिन् करैमेल् कैतोळनिन्र कण्डमेन्नुम् कडिनहरे॥ १॥

अनुजाया: शूर्पणखाया नासिकाम् अग्रजस्य दशकन्धरस्य शिरांसि च विलोपितवता, अथ साकेतपुरीमधिगत्य "रामो रामो राम इति प्रजानामभवन् कथाः। रामभूतं जगदभूद्रामे राज्यं प्रशासति" इत्युक्तप्रकारेण सर्वत्र स्वस्यैव प्रख्यातिमभिवर्ध्य * दशवर्षसहस्राणि दश वर्षशतानि च स्थित्वा राज्यपरिपालनं कृतवता च दाशरथिना नः पुरुषोत्तमेनाधिष्ठितं स्थलं श्रीखण्डाख्यं महानगरम्। (तत्कुत्र विराजत इतिचेत्;) गङ्गागङ्गेत्युच्चारणमात्रेण कठोरपातकान्यप्यपाकर्तुमर्हन्त्या गङ्गायाः कूले सकलभक्तवृन्दप्रणामयोग्यं विराजते॥ (सौमित्रिणा कृतस्य शूर्पणखाङ्गभङ्गस्य श्रीरामकृतत्ववर्णनमिह न दुष्यति। लक्ष्मणस्तु नासिकाच्छेदनविषये प्रयोज्यकर्ता, रामस्तु प्रयोजककर्ता। अतश्चाभेदोपचारसंभवति। किञ्च, बाहुना खलु नासिकाच्छेदः कर्तव्यो भवति। लक्ष्मणस्तु * रामस्य दक्षिणो बाहुरिति प्रथितः। तत् अवयवकृतस्य अवयविकृतत्वकथनं नह्यनुपपन्नम्॥) .... (१)

(गाथा.) शलम्पोदियुडम्बिन् तळलुमिळ्पेळ्वायुच्चन्दिरन् वेङ्गदिरञ्ज *
मलर्न्देळुन्दणवु मणिवण्णवुरुविन् माल्पुरुडोत्तमन् वाळ्वु *
नलन्दिहळ् शडैयान् मुडिक्कोन्रै मलरुम् नारणन् पादत्तुळायुम् *
कलन्दिळि पुनलाल् पुहर्पडुगङ्गै कण्डमेन्नुम् कडिनहरे॥ २॥

जलमयशिशिरशरीरो हिमांशुः अग्निमयकिरणस्तिग्मांशुश्च यथा चकितौ स्यातां तथानाम तयोरपि मण्डले अतिक्रम्य अभिवृद्धदिव्यमङ्गलविग्रहस्य भक्तपक्षपातिनः पुरुषोत्तमस्य भगमतो हृदयंगमस्थलं श्रीखण्डाह्वयं महानगरम्। तत् कुत्र विराजत इति चेत्; भगवच्छ्रीपादतीर्थधारणरूपमहिमशालिकपर्दिकपर्दस्थितानि कुरवककुसुमानि श्रीमन्नारा-यणपादपद्मालङ्कारभूततुलसीस्रजा सह संयोज्य प्रवहता पाथसा करम्बिताया गङ्गायाः कूले विराजते॥ (श्रीमन्नारा-यणपादारविन्दतः प्रादुर्भूय शिवशिरःपथेन प्रवहन्त्या भागीरथ्याः कूले-इत्युक्तं भवति॥ .... (२)

(गाथा.) अदिर्मुहमुडैय वलम्पुरि कुमिळ्त्ति अळलुमिळाळिकोण्डेरिन्दङ्ग *
एदिर्मुहवशुरर् तलैहळै यिडरुम् एम्पुरुडोत्तमनिरुक्कै *
शदुमुहन्कैयिल् शदुप्पुयन् ताळिल् शङ्करन् शडैयिनिल् तङ्गि *
कदिर्मुहमणिकोण्डिळि पुनल् गङ्गै कण्डमेन्नुम् कडिनहरे॥ ३॥

गभीरनिनदमुखरं श्रीपाञ्चजन्यमाध्माय सुतीक्ष्णं सुदर्शनं हेतिराजं प्रयुज्य च विमुखदैत्यशिरोनिकृन्तनं कृतवता नः पुरुषोत्तमेनाधिष्ठितं स्थलं श्रीखण्डाख्यं महानगरम्। (तत् कुत्र विराजत इतिचेत्;) चतुर्मुखस्य करतले चतुर्भुजस्य पादतले शङ्करस्य जटाजूटे च लब्धास्पदाया दीप्ररत्नप्रकरोदञ्चत्प्रवाहायाश्च भागीरथ्याः कूले विराजते॥ (श्रीमन्नारायणपादारविन्दाच्चतुर्मुखेन वेधसा स्वकमण्डलुतीर्थतोऽभिमर्शनेन प्रादुर्भावितां गङ्गां शङ्करो निजकपर्द-भरेण धारयित्वा गङ्गाधर इति समाख्यां लेभ इति इतिहासोऽत्रानुसंधेयः॥) .... .... (३)

(गाथा.) इमैयवरिरुमान्दिरुन्दरशाळ एत्तुवन्देदिर्पोरुशेनै *
नामपुरम् नणुह नान्दहम् विशिरुम् नम्पुरुडोत्तमन् नहर्दान् *
इमवन्दम् तोडङ्गि इरुङ्गडलळवुम् इरुहरै उलहिरैत्ताड *
कमैयुडैप्पेरुमै गङ्गैयिन् करैमेल् कण्डमेन्नुम् कडिनहरे॥ ४॥

शचीपतिप्रमुखा दिविषदो यथा सावलेपं साम्राज्यमधिवहेयुस्तथा नाम वैरिभूतदैत्यरक्षोगणं यमसदनं प्रापयितुं प्रभविष्णुना नन्दकनामखड्गविशेषप्रयोगविचक्षणेन च भगवता नः पुरुषोत्तमेन स्वीकृतं नगरं श्रीखण्डाख्यं महानगरम्। (तत् कुत्र विराजत इतिचेत्;) हिमाचलतः प्रभृति सेतुपर्यन्तं स्थिताभिस्सकलाभिरपि जनताभिः सकुतूहलमव-गाह्यमानायाः क्षमागुणशालिन्याः परममहितायाश्च गङ्गायाः प्रतीरे विराजते॥ .... (४)

(गाथा.) उलवदोर्पडैयुमुलक्कैयुम् विल्लुम् ओण्शुडरालियुम् शङ्गुम् *
मलुवोडु वाळुम् पडैक्कलमुडैय माल्पुरुडोत्तमन् वाळ्वु *
एलुमैयुम् कूडि ईण्डियपावम् इरैप्पोलुदळविनिलेल्लाम् *
कलुविडुम् पेरुमै गङ्गैयिन् करैमेल् कण्डमेन्नुम् कडिनहरे॥ ५॥

हलमुसलशार्ङ्गतेजिष्ठसुदर्शनपाञ्चजन्यपरशुनन्दकाद्यायुधवरपरिकर्मितबाहुना भगवता पुरुषोत्तमेनाधिष्ठितं स्थलं श्रीखण्डाख्यं महानगरम्। (तत् कुत्र विराजत इतिचेत्;) जन्मान्तरसहस्रसमार्जितपापराशिमशेषमपि क्षणमात्रे निरस्य विशोधयितुं प्रभवन्त्या भागीरथ्यास्तटे॥ .... .... .... (५)

(गाथा.) तलैप्पेय्दु कुमुरिच्चिलम्पोदिमेघम् शलशलपोळिन्दिडक्कण्डु *
मलैप्पेरुङ्गुडैयाल् मरैत्तवन्मदुरै माल्पुरुडोत्तमन् वाळ्वु *
अलैप्पुडै त्तिरैवाय् अरुन्दवमुनिवर् अवपिरतम् कुडैन्दाड *
कलप्पैहल् कोळिक्कुम् गङ्गैयिन् करैमेल् कण्डमेन्नुम् कडिनहरे॥ ६॥

जलगर्भनिर्भरपर्जन्यराशिषु व्रजमुपसृप्य कठोरगर्जनपुरस्सरं घनवृष्टिं विसृजत्सु सत्सु गोवर्धनाद्रिरूपमहातपत्रेण वर्षप्रतिरोधं कृतवता मथुरापुराधिनाथेन भगवता पुरुषोत्तमेन सानन्दमधिष्ठितं स्थलं श्रीखण्डाख्यम् महानगरम्— महत्तरतपश्चर्यानिष्णातानां मुनिवराणां भूयसाम् अवभृथस्नानपात्रभूताया अथ च तद्यागभूमिस्थनानावस्तुसंकीर्ण-प्रवाहशालिन्याश्च भागीरथ्या रोधसि विराजते॥ .... .... .... (६)

(गाथा.) विर्पिडित्तिरुत्तु वेळत्तै मुरुक्कि मेलिरुन्दवन् तलैशाडि *
मर्पोरुदेळप्पाय्न्दु अरैयनैयुदैत्त माल्पुरुडोत्तमन् वाळ्वु *
अर्पुदमुडैय ऐरावदमदमुम् अवरिळम्पडियरोण् शान्दुम् *
कर्पहमलरुम् कलन्दिळिगङ्गै कण्डमेन्नुम् कडिनहरे ॥ ७ ॥

कंसस्यायुधागारे पूजायां स्थितं चापं भञ्जयित्वा कुवलयापीडाख्यं वेतण्डं च मर्दयित्वा तद्धस्तिपालकस्य शिरश्च नाशयित्वा मल्लांश्च युद्धेन मारयित्वा तुङ्गमञ्चस्थितं कंसं च उत्प्लुत्य पादघातेन प्रणाशितवतः पुरुषोत्तमस्य सानन्दनिवासस्थलं श्रीखण्डाख्यं महानगरम्—अद्भुतैरावतवारणदानजलम् अप्सरसामलङ्कारभूतं दिव्यचन्दनपङ्कं कल्पकप्रसूनपुञ्जं च युगपदावहन्त्या गङ्गायास्तटे विराजते ॥ (एतेन, अस्मिन्नेव लोके स्थलविशेषेषु प्रादुर्भूय प्रवहन्तीषु नदीष्वन्यतमा भवति नैषा; अपितु देवलोकादेव प्रवहतीति प्रकटितं भवति ॥) .... (७)

(गाथा.) तिरैपोरुकडल्शूळ् तिण्मदिळ् तुवरैवेन्दु तन्मैत्तुनन्मार्क्काय् *
अरशिनैयविय अरशिनैयरुळुम् अरिपुरुडोत्तमनमर्वु *
निरैनिरैयाह नेडियनयूपम् निरन्दरमोळुक्कुविट्टु, * इरण्डु
करै पुरै वेळ्विप्पुहै कमळ्गङ्गै कण्डमेन्नुम् कडिनहरे ॥ ८ ॥

उद्यदुत्तुङ्गतरङ्गसंकुलसागरपरिवेष्टितायाः शाश्वतप्राकारपरिवृतायाश्च द्वारकाया अधिनाथस्य, पाण्डवपक्षपातभूम्ना धार्तराष्ट्रान् विनाश्य राज्यसंपदं पाण्डवेभ्यः प्रदत्तवतश्च हरेः पुरुषोत्तमस्य स्थलं श्रीखण्डाख्यमहानगरम्—याज्ञिकबृहत्तरयूपस्तम्भसंदोहान् निरन्तरं स्वप्रवाहतो वहन्त्या उभयकूलकूलंकषनीरपूरभरिताया याज्ञिकधूमसौरभसंभृतायाश्च भागीरथ्या रोधसि विराजते ॥ .... .... .... (८)

(गाथा.) वडदिशै मदुरैशाळक्किरामम् वैहुन्दम् तुवरै अयोत्ति *
इडमुडैवदरि यिडवहैयुडैय एम्पुरुडोत्तमनिरुक्कै *
तडवरैयदिरत्तरणिविण्डिडिय त्तलैप्पत्तिक्करैमरम् शाडि *
कडलिनैकलङ्गकडुत्तिळिगङ्गै कण्डमेन्नुम् कडिनहरे ॥ ९ ॥

उत्तरमथुरापुरीं सालग्रामं श्रीवैकुण्ठं द्वारवतीमयोध्याम् अतिविपुलं बदरिकाश्रमं चाधिवसता नः पुरुषोत्तमेनाधिष्ठितं श्रीखण्डाख्यं महानगरम्—मन्दरादिकुलगिरीणां शैथिल्यं धरण्याश्च वैक्लव्यं वनस्पतीनां च भङ्गुरत्वं सिन्धोरपि कालुष्यं समुत्पादयता महीयसा रंहसा प्रवहन्त्या भागीरथ्याः कूले विराजते ॥ .... (९)

(गाथा.) मून्रेळुत्तदनै मून्रेळुत्तदनाल् मून्रेळुत्ताक्कि, मून्रेळुत्तै *
एन्नुकोण्डिरुप्पार्क्कु इरक्कम् नन्गुडैय एम्पुरुडोत्तमनिरुक्कै *
मून्नडि निमिर्त्तु मून्रिनिल्तोन्रि मून्रिनिल् मून्नुरुवानानान् *
कान्तडम्पोळिल् शूळ् गङ्गैयिन् करैमेल् कण्डमेन्नुम् कडिनहरे ॥ १० ॥

अक्षरत्रयात्मकं प्रणवं निरुक्तसमाख्यनिर्वचनप्रक्रियया अर्थत्रयवाचिपदत्रयात्मकवर्णत्रयात्मना विभज्य तदक्षरत्रितयं (प्रणवम्) शरणतया प्रतिपद्यमानेषु महात्मसु दिव्यमनुग्रहमनवग्रहमादधता, प्रणवनमःपदनारायणायपदरूपाष्टाक्षरमहामन्त्रे निर्दिष्टेष्वेतेषु त्रिष्वपि पदेषु चेतनानामनन्यार्हशेषत्वमनन्यशरणत्वमनन्यभोग्यत्वं चेत्याकारत्रयमवबोध्य तत्प्रतिसंबन्धिभूतशेषित्वशरण्यत्वप्राप्यत्वात्मकमाकारत्रयं स्वयं बिभ्रता पुरुषोत्तमेनाधिष्ठितं श्रीखण्डाख्यं क्षेत्रम्—सुरभिमहोद्यानपरिवृतभागीरथीरोधसि विराजते ॥ (श्रीमदष्टाक्षरमहामन्त्रस्था अर्थविशेषा गाथायामस्यामनुसंवीयन्ते; तेच उपदेशमुखतो लभ्याः)॥ .... .... .... .... (१०)

(गाथा.) पोङ्गोलि गङ्गैकरैमलिकण्डचुरै पुरुडोत्तमनडिमेल् *
वेङ्गलिनलिया विल्लिपुत्तूर्कोन् विट्टुचित्तन् विरुप्पुचु *
तङ्गियवन्बाल् शेय्तमिळ्माले तङ्गिय नावुडैयार्कु *
गङ्गैयिल् तिरुमाल् कळलिणैकीळे कुळित्तिरुन्द कणक्कामे ॥ ११ ॥

विसृत्वरवीचिघोषमुखरभागीरथीतटे श्रीखण्डक्षेत्रमधितिष्ठतः पुरुषोत्तमस्य भगवतः पादाब्जभक्तिभूम्ना कलिकोलाहलक्रीडावैदेशिकेन श्रीधन्विनव्यपुराधिनाथेन श्रीविष्णुचित्तमुनीन्द्रेण सकुतूहलं प्रणीता इमा द्राविडदिव्यगाथा ये बिभ्रति जिह्वातले ते गङ्गामवगाह्य श्रीधरपादाब्जसविधे नित्यवासभाग्यभाजां सतां सधर्माणो भवितारः (इति फलश्रुत्या समापितमिदं दशकम्) ॥ .... .... .... .... (११)

— तथाचैतद्दशकसारांशसंग्राहकं पद्यमेतदिहानुसन्धेयम् —

गङ्गागङ्गेति वाचा दुरितमखिलमप्याशु हन्त्र्याः प्रतीरे
भागीरथ्या निवासं विदधतममरैश्शम्भुमुख्यैर्नतांघ्रिम् ।
श्रीखण्डाभिख्यपुर्या अधिपमधिगुणं दैत्यरक्षोगणघ्नं
संसेव्य प्रीतचित्तो दशकमचकथत्सप्तमं विष्णुचित्तः ॥

इति श्रीभट्टनाथसूक्ते चतुर्थशतके सप्तमं दशकमवसितम् ॥
श्रीविष्णुचित्तदिव्यसूरिदिव्यचरणावेव शरणम् ॥

---

॥ श्रीरस्तु ॥

श्रीमते रामानुजाय नमः । श्रीमद्वरवरमुनये नमः ॥

श्रीभट्टनाथसूक्ते चतुर्थशतके

## ॥ ४-८. अष्टमं सूक्तम्—मादवत्तोन् ॥

अवतारिका—अथ त्रिषु दशकेषु श्रीरङ्गक्षेत्रमभिष्टूयते। तत्रेदमादिमं दशकम्। सान्दीपिनिपुत्रानयनवैदिकपुत्रानयनाद्यतिमानुषचेष्टितानुसन्धानेन भगवान् श्रीरङ्गनाथोऽनुभूयते दशकेऽस्मिन्। तेषुतेषु दिव्यदेशेषु विराजमानाद्भगवतोऽपि भगवदावसथभूतदिव्यदेशस्यैव परमोद्देश्यत्वात् दिव्यदेशमुख्यविशेष्यकत्वेनैव कीर्तनं संपद्यत इति ध्येयम् ॥ .... .... .... .... *

(गाथा.) मादवत्तोन् पुत्तिरन्पोयु् मरिकडल् वाय्माण्डानै *
ओदुवित्त तक्कणैया उरुवुरुवे कोडुत्तानूर् *
तोंदवत्तित्तूय्मरैयोर् तुरैपडियत्तुलुम्बि एङ्गुम् *
पोदिल्वैत्त तेन्शोरियुम् पुनलरङ्गमेन्बदुवे ॥ १ ॥

बहुतिथात्कालात्पूर्वमुत्तरङ्गे पारावारे निपत्य प्रमीतं महातपस्विनस्सान्दीपनेस्सुतं गुरुदक्षिणात्वेन यथायथमुपहृत्य प्रदत्तवतो भगवतो दिव्यं धाम किमितिचेत्; धौतवस्त्रिभिः परमपावनैर्वैदिकैर्विगाह्यमानया, प्रान्तेषु सर्वत्र मधुस्यन्दिपुष्पावलीसमुल्लसितया च कावेर्या सरिता परिवृतं श्रीरङ्गक्षेत्रम् ॥ .... .... (१)

(गाथा.) पिरप्पहत्ते माण्डोलिन्द पिळ्ळैहळै नाल्वैरैयुम् *
इरैप्पोळुदिल् कोणर्न्दुकोडुत्तु ओरुप्पडुत्तवुरैप्पनूर् *
मरैप्पेरुम् तीवळर्त्तिरुप्पार् वरुविरुन्दै यळित्तिरुप्पार् *
शिरप्पुडैयमरैयवर् वाळ् तिरुवरङ्गमेन्बदुवे ॥ २ ॥

प्रसूतिकासद्मन्येव प्रनष्टान् चतुरोऽपि शिशून् [ कस्मिंश्चन ब्राह्मणे दयया ] अल्पीयसि काले दिवस्समाहृत्य जनन्या संयोजितवतः प्रगल्भस्य भगवतो दिव्यं धाम किमिति चेत् :—वैदिकाग्निहोत्रनिरतैः अतिथिसत्कारनिष्ठासंपन्नैरभ्यर्हितैर्वैदिकोत्तमैरध्युषितं श्रीरङ्गक्षेत्रम् ॥ .... .... .... (२)

(गाथा.) मरुमहन् तन् शन्ददियै उयिर्मीट्टु, मैत्तुनन्मार् *
उरुमहत्ते वीळामे गुरुमुहमाय्क्कात्तानूर् *
तिरुमुहमाय्चेङ्गमलम् तिरुनिरमाय्क्करुङ्गुवळै *
पोरुमुहमाय् निन्नलरुम् पुनलरङ्गमेन्पदुवे ॥ ३ ॥

अश्वत्थामसमाह्वयेन द्रोणपुत्रेण भारतयुद्धे अपाण्डवास्त्रप्रयोगत उत्तरागर्भादुद्वास्य निधनं गमितं पाण्डवसन्ततिभूतं (परिक्षिन्नाम्ना परस्तात्प्रसिद्धं) शिशुपिण्डं संजीवितवता, भारतयुद्धाख्ये नरमेधयागे पाण्डवानां यथा निधनं न स्यात्तथा नाम गुरुनिर्विशेषमभिरक्षितवता च भगवताऽध्युषितं क्षेत्रं किमिति चेत् :—भगवन्मुखशोभाद्योतकानामरविन्दानाम् तद्दिव्यमङ्गलविग्रहच्छविप्रकाशकानां कुवलयानां च समन्ततो विकासेन परभागशोभाभिरामं श्रीरङ्गदिव्यधाम ॥ .... .... .... .... .... (३)

(गाथा.) कुन्तोलुत्तै शिदहुरैप्प कोडियवळ् वाय्क्कडियशोल् केट्टु *
ईन्नेडुत्त तायैरैयुम् इराचियमुमाङ्गोलिय *
कान्तोडुत्त नेरिपोहि कण्डहरैक्कळैन्दानूर् *
तेन्तोडुत्त मलर्चोलै तिरुवरङ्गमेन्पदुवे ॥ ४ ॥

मन्थराप्रोक्तदुर्वचनकलुषितहृदयकैकेयीकथितकटुवचनादरेण जननीराज्यादिकं परित्यज्य वनेन वनं गत्वा कण्टकनिर्विशेषान् यातुधानान् अपाकृतवतो भगवतो दिव्यं धाम किमिति चेत् :—मधुस्यन्दिपुष्पावलीपरिशोभितं श्रीरङ्गक्षेत्रम् ॥

(गाथा.) पेरुवरङ्गळवैपत्तिप्पिळकुडैय इरावणनै *
उरुवरङ्गप्पोरुतळित्तु इव्वुलहिनैक्कणू पेरुत्तानूर् *
कुरवरुम्बकोङ्गलर कुयिल्कूवुम् कुळिर् पोळिल्शूळ् *
तिरुवरङ्गमेन्पदुवे एनूतिरुमाल् शेर्विडमे ॥ ५ ॥

महत्तरवरबलशालितावलेपेन कलितबहुतरदुश्चेष्टितस्य दशकन्धरस्य शरीरं समरभुवि संहृत्य जगदिदं लब्धसत्ताकं कृतवतो भगवतो लक्ष्मीनाथस्य परमादरभाजनं धाम किमिति चेत् :—कुरवकाद्यनोकहकोरककुसुमाभिरामं कोमल-कोकिलकूजितसंकुलं शिशिरोद्यानविततिपरिवृतं च श्रीरङ्गक्षेत्रम् ॥ .... .... (५)

(गाथा.) कीळुलहिल् अशुरर्हळै किळङ्गिरुन्दु किळरामे *
आळिविडुत्तवरुडैय करुवळित्त वळिप्पनूर् *
ताळैमडलूडुरिञ्जि धवळवण्णप्पोडियणिन्दु *
याळिनिशै वण्डिनङ्गळ् आळम् वैक्कुमरङ्गमे ॥ ६ ॥

रसातलनिकेतनानसुरवर्गान् सर्वथा निर्मूलयितुं हेतिराजं तत्र गमयित्वा तेषां गर्भमपि विनाशितवता विरोधिनिरसनविशारदेन भगवताऽध्युषितं दिव्यं धाम किमिति चेत् :—केतकीकुसुमान्तःप्रवेशजनितधवलवर्णपरागलेपैः वीणागानसधर्मगीतिभिश्चञ्चरीकबृन्दैर्मुखरं श्रीरङ्गम् ॥ .... .... .... (६)

(गाथा.) कोळुप्पुडैय शोळुङ्गुरुदि कोळित्तिळिन्दु कुमिळ्त्तेरिय *
पिळक्कुडैय अशुरर्हळै पिणम् पडुत्त पेरुमानूर् *
तळुप्परिय शन्दनङ्गळ् तडवरै वायीर्त्तुकोण्डु *
तेळिप्पुडैय काविरिवन्दु अडितोळुम् शीररङ्गमे ॥ ७ ॥

अवलेपभरितान् रुधिरमांसादिमांसलशरीरान् उच्चावचदुश्चरितनिरतान् दैत्यान् प्रेतभावं प्रापितवतो भगवतो दिव्यं धाम किमिति चेत् :—स्फीतस्फीतान् पाटीरभूरुहान् सह्याद्रितटात्समाकृष्य महता घोषेण सह प्रवहन्त्या सह्यकन्यया सरिता परिवृतं श्रीरङ्गक्षेत्रम् ॥ .... .... .... (७)

(गाथा.) वळ्ळेयित्तुकेळलुमाय् वाळेयित्तु च्चीयमुमाय् *
एळ्ळैयिल्लात्तरणियैयुम् अवुणनैयु मिडन्दानूर् *
एळ्ळियम्पोदिरुम् शिरैवण्डु एम्पेरुमान् गुणम्पाडि *
मळ्ळिहै वेण्शङ्गूदुम् मदिळरङ्गमेन्पदुवे ॥ ८ ॥

बलिष्ठदंष्ट्रापरिकर्मितदिव्यवराहरूपं तत्तादृशदिव्यनृसिंहरूपं च परिगृह्य क्रमेण विपुलविश्वम्भरासमुद्धरणं हिरण्याक्ष-वक्षःकवाटविदारणं च चक्रुषो भगवतो दिव्यं धाम किमिति चेत्—नित्यं सायंसन्ध्यासमयेषु भगवद्गुणगणमानव्यग्रैः मल्लिकाकुसुमात्मकविलक्षणशंखध्मानानिरतैश्च भ्रमरैर्मुखरं प्राकारपरिवेष्टितं च श्रीरङ्गक्षेत्रम् ॥ .... ..(८)

(गाथा.) कुन्नाडु कोळुमुहिल्पोल् कुवळैहळ्पोल् कुरैकडल्पोल् *
निन्नाडु गणमयिल्पोल् निरमुडैय नेडुमाल्रू *
कुन्नूडु पोळिल्तुळैन्दु कोडियिडैयार् मुलैयणवि *
मन्नूडुतेन्नलुलाम् मदिळरङ्गमेन्पदुवे ॥ ९ ॥

शिखरिशिखरोदञ्चद्वलाहकं कुवलयकुसुमम् अर्णवम् नृत्यन्मयूरं च निजतनुच्छायया स्मारयतो भगवतोऽच्युतस्य दिव्यं धाम किमिति चेत्;—मलयाचलमहोद्यानान्तः प्रविश्य निस्सरता अथ च चन्दनपङ्कसुरभिकृशाङ्गीकुचतट-स्पर्शजनितमामोदं परिगृह्य शृङ्गाटकेषु सञ्चरता च दाक्षिणात्यपवनेन संभूतसौगन्ध्यं वप्रावलीपरिवेष्टितं च श्रीरङ्गक्षेत्रम् ॥ .... .... .... .... .... (९)

(गाथा.) परुवरङ्गळवै पत्तिप्पडैयालित्तेळुन्दानै *
शेरुवरङ्गप्पोरुदळित्त तिरुवाळन् तिरुप्पदिमेल् *
तिरुवरङ्गत्तमिळ्मालै विट्टुचित्तन् विरित्तन कोण्डु *
इरुवरङ्ग मेरित्तानै एत्तवल्लारडियोमे ॥ १० ॥

सुमहत्तरवरबलाभिमानेन सेनाभिस्सह युद्धोन्मुखमाशराधीशं लङ्केश्वरं रणाङ्गणे भस्मसात्कृतवता श्रियः पत्या भगवताऽध्युषितं श्रीरङ्गक्षेत्रमधिकृत्य श्रीविष्णुचित्तसूरिणा द्राविडया गिरा कीर्तितमिदं दशकमुपादाय ये भक्ताः प्रशंसन्ति मधुकैटभसंहर्तारं भगवन्तम्, तेषां वयं दासभूता भवेम॥ [ एतद्दशकानुसन्धानफलं भागवतदास्यप्राप्ति-रेवेत्युक्तं भवति ।] .... .... .... .... .... (१०)

— तथा चैतद्दशकसारसंग्राहकमिदं पद्यमिहानुसन्धेयम् —

सान्दीपन्यात्मजन्मानयनमथ परीक्षित्समुज्जीवनं च
श्रीवैकुण्ठाच्चतुर्णां द्विजतनुजनुषामाहृतिश्चेत्यमूनि ।
अन्यान्याश्चर्यकृत्यान्यपि च कृतवता माधवेनातिदीव्यत्
श्रीरङ्गाख्यं गरिष्ठं स्थलमिह दशके विष्णुचित्तो, विनौति ॥

इति श्रीभट्टनाथसूक्ते चतुर्थशतके अष्टमं दशकमवसितम् ॥

श्रीभट्टनाथसूरिदिव्यचरणावेव शरणम् ॥

---

॥ श्रीरस्तु ॥

श्रीमते रामानुजाय नमः । श्रीमद्वरवरमुनये नमः ॥

श्रीभट्टनाथसूक्ते चतुर्थशतके

# ॥ ४-९. नवमं दशकम् — मरवडियैत्तम्बिक्कु ॥

अवतारिका—इदमपि दशकं श्रीरङ्गक्षेत्रानुभववैभवप्रयेणावतार्यते। पुरा रामावतारकाले भरत-विभीषणादिभक्तवर्गे यो वात्सल्यभरः पक्षपातातिशयश्च प्रदर्शितः तमद्याप्यर्चावतारेऽप्यत्र संदर्शयन् दुष्टवर्गनिर्मूलनमतितरां कुर्वन् गजेन्द्रापन्निवारणविचक्षणहेतिराजधारी संसारव्याधिहारी च स भगवान् देवदेवः श्रीरङ्गधाम्नि संसेवनीय इत्यभिधीयते दशकेऽस्मिन् ॥ *

(गाथा.) मरवडियैत्तम्बिक्कु वान्पणैयम् वैत्तुप्पोय् वानोर्वाळ *
शेरुवुडैय दिशैक्करुमम् तिरुत्तिवन्दु उलहाण्ड तिरुमाल् कोयिल् *
तिरुवडि तन् तिरुवुरुवुम् तिरुमङ्गै मलर्हण्णुम् काट्टिनिन्र *
उरुवुडैयमलर्नीलम् कात्ताट्ट ओशलिक्कुमोळियरङ्गमे ॥ १ ॥

अनुजाय भरताय दिव्यपादुकाप्रदानरूपमनुग्रहमाकलय्य दण्डकारण्याध्वना गत्वा दिविषदां संजीवनाय युद्धकर्मास्पदभूतायां दक्षिणस्यां दिशि कर्तव्यं कृत्यं [राक्षसकुलनिर्मूलनात्मकम्] सुष्ठु संविधाय पुनरयोध्यां प्रापुषा जगतीरक्षणदक्षिणेन च भगवताऽध्युषितं स्थलं किमितिचेत्;—भगवतो दिव्यमङ्गलविग्रहच्छविं श्रीमहालक्ष्म्या दिव्यविलोचन सुषमां च संदर्शयता वात्याव्यालोलेन कुवलयवनेनाभिरामं श्रीरङ्गक्षेत्रम् ॥ .... (१)

(गाथा.) तन्नडियार् तिरत्तहत्तु तामरैयाळाहिलुम् शिदहुरैक्कुमेल् *
एन्नडियारदु शेय्यार् शेय्दारेल् नन्नुशेय्दारेन्बर्पोलुम् *
मन्नुडैय विभीषणर्क्का मदिळिलङ्गैत्तिशैनोक्कि मलर्कण् वैत्त *
एन्नुडैयतिरुवरङ्गर्क्कन्नियुम् मत्तोरुवर्क्काळावरे ॥ २ ॥

[इयं द्वितीयगाथा संप्रदायरसिकैर्महात्मभिर्विशेषत आद्रियत इति श्लोकरूपेण विवर्त्यते सेयं गाथा, अथ च विव्रियते ॥]

स्वभक्तविषये रमाऽप्यभिदधाति चेद्दूषणं
मदीयजनता रमे! विरचयेन्न तादृक्कृतिम्।
यदि व्यरचयद्ध्रुवं सुकृतमेव तच्चक्रइ-
त्युशन्निव विभीषणप्रवणदृक् स रंगी गतिः ॥ इति ॥

अत्रेदमवधेयम्: श्रियःपतिर्भगवान् स्वयं परमकारुणिकोऽपि सन् तत्तदपराधानुरूपदण्डधरत्वभूम्ना प्रणतानपि चेतनान् अनिष्कृतभूयिष्ठापराधान् अङ्गीकृत्य रक्षितुं न प्रभवति। तदात्वे कारुण्यरूपिणी नित्यमज्ञात-

निग्रहा अनुग्रहमयी संमन्त्रितजगद्धिता च देवदेवदिव्यमहिषी श्रीमहालक्ष्मीः * किमेतन्निर्दोषः क इह जगतीति त्वमुचितैरुपायैर्विस्मार्य स्वजनयसि माता तदसि नः * [श्रीगुणरत्नकोशे] इत्युक्तरीत्या घटककृत्यं कुर्वती कथमपि घटयति सापराधानपि चेतनान् प्रणत्यभिमुखान् भगवता सह। तादृशलक्ष्मीपुरुषकारबलोत्तम्भितगुणविशेषो भगवानपि तांश्चेतनान् सुदृढं स्वीकरोति। अथ च सा लक्ष्मीः 'मन्नाथेन कृतोऽयमङ्गीकारः किं मदीयनिर्बन्धमूलकः ? उत स्वकीयसुदृढप्रेममूलक एव ?' इति परीक्षणार्थं कांश्चन दोषानाचष्टे तेषु चेतनेषु ये पुरा स्वात्मना स्वीकारिताः। 'भगवन्! भ्रमतः प्रमादतो वा मयाऽमीषां चेतनानां विषये घटककृत्यं कृतमभूत्, गुणोदाहरणपूर्वकम्। अथ विमर्शे कृते दुष्टा एवामी न स्वीकारार्हा इति प्रतिभाति। तत् त्यज्यन्तामेते' इति प्रच्यावयितुमिव प्रयतते। तदा भगवान् प्रतिवक्ति—इन्दिरे! त्वद्भक्ताः कदाचन दुष्टा अपि स्युः; मद्भक्तास्तु न कदाऽपि तादृशास्स्युः' इति। पुनरपि रमा भर्तुरध्यवसायदृढिमानं जिज्ञासमाना चेतनदौष्ट्यं सुदृढं ब्रवीति। तदा माधवः प्राह * यद्यमी कृतदोषास्स्युः कृतसच्चरिता एवेति। इत्येवंविधो रमामाधवसंवादविशेषः कोऽपि निबद्धोऽस्ति गाथाया अस्याः पूर्वार्धे। एतेन संवादेन भगवतो वात्सल्यातिशयः अप्रकम्प्यभक्तानुग्रहमहिमा च प्रकाश्यते। दोषेष्वपि गुणत्वबुद्धिरेव वात्सल्यमिति पूर्वाचार्या निरणैषुः। तमिमं निर्णयं श्रुतप्रकाशिकाचार्याः शरणागतिगद्यव्याख्याने श्रीभाष्यश्रुतप्रकाशिकायां च सुव्यक्तमनुजगृहुः। सत्संप्रदायपरम्परया सदाचार्यसकाशे सदर्थग्रहणभाग्यविकला अर्वाचीना भगवल्लोकाचार्यवरवरमुनीन्द्रादिदिव्यसूक्तिष्विव श्रुतप्रकाशिकाकृद्भट्टपाददिव्यसूक्तिष्वपि विद्वेषं वहन्तस्तद्दूषणे बद्धपरिकरा भवन्तीति स्थितम्। भगवतो यथापराधदण्डस्य चेतनानां दोषेष्वपि गुणत्वबुद्धिर्भवतीति चेत् भगवान् दोषभोग्य इत्युक्तं भवति। एतत्तु न साधु। अस्मदीयान् दोषान् भगवान् भोग्यतया पश्यतीति जानन् सर्वोऽपि जनो बुद्धिपूर्वमेव सततं दुरिताचरणेषु समुत्सुकस्स्यात्; शास्त्रपद्धतिरेव ततस्समुच्छिन्ना स्यात्। पापिनामेव जगति भृशमभिनन्दनीयता स्यात् इत्यादिचोद्याविष्करणेन प्रकृतगाथार्थम् एतदनुसारिणीं श्रुतप्रकाशिकाचार्यफणितिं च दूषयन्ति परे। तत्प्रतिक्षेपदक्षास्सिद्धान्तवादाश्चैवमिह वेदितव्याः;—भगवतः कल्याणगुणास्सन्ति भूयांसः। तेषां लक्ष्यभूताश्चेतनाः के ? इति तु न कोऽपि ज्ञातुमीष्टे। * नासौ पुरुषकारेण न चाप्यन्येन हेतुना। केवलं स्वेच्छयैवाहं प्रेक्षे कञ्चित्कदाचन * इत्यूचुषा भगवता कदा को वा चेतनो विषयीक्रियेतेति सत्यं न कोऽपि वेद। यदा कदाचन कस्मिंश्चन व्यक्तिविशेषे तस्य वत्सलस्य हरेः प्रेमपूर उद्वेलं प्रसर्पति चेत् तदा स भगवान् तस्य पुंसो दोषानपि गुणतया भावयन् अत्यर्थंप्रीतिमात्मनः प्रख्यापयतीति हि सिद्धान्तिभिरभिधीयते। एवञ्च सति बुद्धिपूर्वकं साभिनिवेशञ्च पापाचरणमापद्येतेत्यापादनं सर्वात्मनाऽप्यप्रसक्तम्। भगवतः प्रेमा मय्येव प्रसरिष्यतीति पूर्वतो विज्ञाते सति हि कस्यचन पापाचरणौत्सुक्यं जायेत। गुणस्वरूपकथनमात्रेण आपत्तिर्भवेदित्यापादनं हि न स्थाने। तथा सति भगवतः क्षान्तिं नाम गुणमधिकृत्याप्येवमापादनमनिवार्यमेव स्यात्। क्षान्तिशीलस्य भगवतो दण्डधरत्वं नैव भविष्यतीति निश्चयेन स्वच्छन्दं पापाचरणप्रवृत्तयः कथं नु जगति वार्यन्ताम्। अथ भगवतः क्षान्तिरपि नास्तीत्येव परैर्वक्तव्यं स्यात्। यथापराधदण्डत्वमेकमेव भगवतो गुण इति परैरास्थेयं स्यात्। * वैषम्यनैर्घृण्ये न सापेक्षत्वादिति सूत्रानुग्रहश्च तत्र भविष्यति। वात्सल्यं नाम गुणविशेषं प्रत्येकशोऽनुभवतां दिव्यसूरिवराणामाचार्यवर्याणां च श्रीसूक्तय एव नः शरणम्। प्रकृतगाथायां निबद्धे रमामाधवसंवादे विशिष्यावधेयोऽन्योऽपि कश्चन विषयोऽस्ति। प्रथमतो लक्ष्मीः प्राह, संप्रति भवता स्वीकृता अमी चेतना दुष्टा इति। तत्रोत्तरमुक्तं भगवता, न कदाऽपि मद्भक्तास्तथाविधास्स्युरिति। पुनरपि

साग्रहमाह पद्मा-दुष्टा एवामी इति। तदा तु भगवता कथितं तर्हि दोषभोग्यो भवानीति। इति तावत्संवादसंदर्भो वर्तते। तर्हि दोषभोग्यो भवानीति भगवता यदुक्तमिहान्ततः, तत्प्रथमत एव कुतो नोक्तम्? यदा लक्ष्मीश्चेतन-दोषकथने प्रवृत्ता तदैव दोषभोग्योऽहमिति कथनं प्राप्तावसरं खलु। तदा तु नैतदुक्तम्। मद्भक्ता नैव दुष्टास्स्यु-रित्येव तदा प्रोचे भगवान्। पुनरपि साग्रहं रमया दोषवत्त्वे कथिते, तर्हि दोषभोग्यो भवानीति प्राह हरिः। किमत्र कारणमिति च विवेचनीयम्। इदमत्र वेदितव्यम्। भक्तानां दोषाचरणं वर्जनीयमेव सर्वथेति शास्त्रार्थ-स्यापि प्रकाशनीयतया तत्प्रकाशनतात्पर्येण प्रथमतः 'मद्भक्ता नैव दुष्टास्स्युः' इत्यमिदधे। प्रामादिकेष्वगतिकेषु वा सत्स्वपचरितेषु, न मे दोषबुद्धिरुदियादिति स्वकीयगुणविशेषस्यापि प्रकाशनीयत्वावश्यंभावेन परस्तात् तर्हि दोषभोग्यो भवानीत्यभिदधे इति। अथ च गाथाया उत्तरार्धे प्रस्तुतो विभीषणपक्षपातोऽपि विशिष्यावधेयः। * निवेदयत मां क्षिप्रं विभीषणमुपस्थितम्। सर्वलोकशरण्याय राघवाय महात्मने * इत्युपनतं विभीषणमधिकृत्य दुष्टत्वादसौ परित्याज्य इत्यभिप्रेतवतां सुग्रीवप्रमुखानां मतमिव अदुष्टत्वादेष परिग्राह्य इति मारुतेरपि मतमवधीर्य * दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितमिति हि कथयामास राघवः। मारुते! दोषो नास्त्यस्मिन्निति कथनं किमर्थम्? अस्तु नाम कामं दोषः। स्वगुणातिशयसिद्धये तदन्वेषणतत्परस्य मम दोषाः किं हेयास्स्युः? इत्या-शयमाविष्कृतवतो भगवतो विशृङ्खलविसृत्वरं वात्सल्यं को निरोद्धुं क्षमः? अस्मदीयाथां वात्सल्यार्थप्रकाशिकायां [श्रुतप्रकाशिकारक्षायाम्] सुविशदमिमे विषया अनुसन्धेया इति कृतमिह विस्तरेण ॥ .... (२)

(गाथा.) करुलुडैय पोळिलमरुदुम् कदक्कळिरुम् पिलम्बनैयुम् कडिय मावुम् *
उरुलुडैय शकडिनैयुम् मल्लरैयुमुडैय विट्टोशै केट्टान् *
इरुळहच्चुमेरिकदिरोन् मण्डलत्तूडेत्तिवैत्तेणि वाङ्कि *
अरुळ्कोडुत्तिट्टडियवरै आट्कोळ्वानमरुमूरणियरङ्गमे ॥ ३ ॥

स्वजिघांसायुक्तदैत्यावेशविशिष्टयमलार्जुन—कुवलयापीडमत्तवारण—प्रलम्बासुर—शकटासुर—मल्लानां विध्वंस-नेन संपादितयशसा, भक्तवर्गान् भास्करमण्डलाध्वना दिव्यधाम प्रापय्य पुनरावृत्तिविरहरूपमनुग्रहं लम्भयित्वा नित्यकिङ्करतासाम्राज्यं प्रापयता च भगवताऽध्युषितं क्षेत्रम्—अतिरमणीयं श्रीरङ्गदिव्यधाम ॥ [नारदमहर्षि-शापतो नलकूबरमणिग्रीवाभिधानौ कुबेरपुत्रौ व्रजे वृक्षभावं प्राप्तौ तावेव यमलार्जुनव्यपदेशभाजौ। तयोर्दैत्यावेश-विशिष्टत्वकथनं दिव्यसूरेरस्य मङ्गलाशासनपरत्वादुपपद्यते ॥] .... .... (३)

(गाथा.) पदिनारामायिरवर् देविमार् पणिशेय्य तुवरैयेन्नु-
मदिल् * नायकराहि वीत्तिरुन्द मणवाळर्मन्नु कोयिल् *
पुदुनाण्मलर्क्कमलम् एम्बेरुमान् पोन्वयित्तिल् पूवेपोल्वान् *
पोदुनायकम् भावित्तिरुमान्दु पोर्चाय्कुम् पुनलरङ्गमे ॥ ४ ॥

नरकासुरं निहत्य परिगृहीतानां षोडशसहस्रसंख्यानां कलत्राणां परिचर्यया सह द्वारकाभिधानायां दिव्यनगर्यां साम्राज्यमासेदुषा रम्यजामात्रा भगवताऽध्युषितं स्थलं किमितिचेत्, भगवन्नाभीकमलसाधर्म्याभिमानेन समुत्पद्यमानैः

स्थलान्तरीयकमलानां चारुतावलेपं लुम्पद्भिः लोकनायकत्वाभिमानेन सावलेपैरिव स्थितैः कमलकुसुमैरभिरामं तीर्थसमृद्धिभरितं श्रीरङ्गदिव्यधाम ॥ .... .... .... --- (४)

(गाथा.) आमैयाय् गङ्गैयाय् आऴ्कडलायवनिया यरुवरैहळाय् *
नान्मुहनाय् नान्मरैयाय् वेळ्वियाय् तक्कणैयाय् तानुमानान् *
शेममुडै नारदनार् शेन्नुशेन्नु तुदित्तिरैञ्ज किडन्दान्कोयिल् *
पूमरुवि प्पुळ्ळिनङ्गळ् पुळ्ळरैयन् पुहळ् कुळरुम् पुनलरङ्गमे ॥ ५ ॥

महाकूर्म-गङ्गा-गभीरार्णव-पृथिवी-कुलगिरि-चतुर्मुख-चतुर्वेद-यज्ञ-दक्षिणात्मना स्वेन रूपेण चावस्थितस्य, ब्रह्मभावनानिष्ठनारदमहर्षिकृतस्तुतिगोचरस्य भोगिभोगशयनीयशायिनो भगवतो दिव्यं धाम किमिति चेत्; स्वकुलकूटस्थपक्षिराजयशःकीर्तननिरतविहगविततिविहरणास्पदकुसुमावलीशोभिजलाशयाढ्यं श्रीरङ्गक्षेत्रम् ॥

अत्रायमितिहासोऽनुसन्धेयः—कदाचिद्गङ्गानदीमुपेयिवान् नारदभगवान् तत्र बृहता रूपेण विचित्रदर्शनं दिशन्तं महाकूर्ममवलोक्य 'त्वमेव खल्वाश्चर्यभूतो धन्यश्चासि' इत्याह । अथ सोऽब्रवीत्—कथं भो आश्चर्यत्वं धन्यत्वं च मयि स्यात् ? वस्तुतो न मयि ; अपितु मादृशापरस्सहस्रप्राणिवर्गशरणभूताया अस्या गङ्गायाः खलु तदुभयं युक्तम्' इति । अथ नारदो गङ्गां तथा तुष्टाव । अथ साऽब्रवीत् 'भगवन्! एतदुभयं न मयि; मादृशीनां भूयसीनां सरितां शरणभूतस्य सागरस्यैव तदुभयमास्ते' इति । अथ स मुनिवरस्सागरमुपेत्य तं तथा तुष्टाव; सोऽब्रवीत् 'ममाप्याधारभूताया अवन्या एव हि तदुभयं युज्यत' इति । अथ महर्षिरवनीं प्रशशंस तथा नाम । साऽब्रूत 'न मयि तदुभयमास्ते, ममाप्याधारभूतानां कुलगिरीणामेव तदास्ते' इति । तदनु मुनिपुंगवः कुलगिरींस्तथा प्राशंसत् । ते प्रत्यूचुः 'नास्मासु लब्धास्पदमेतदुभयम्; अस्मान् सृष्टवतश्चतुर्मुखस्यैव तदनपायम्' इति । अथ तेन तथा स्तुतः स्रष्टा प्राह 'ममापि मार्गप्रदर्शकाश्चत्वारो वेदा एव तदुभयशालिन' इति । अथ तथा स्तुता वेदा ऊचुः 'यज्ञार्थमेव सृष्टानामस्माकं नास्ति तत्; किंतु प्राधान्यमधिवहतां यज्ञानामेव तदुपपद्यत' इति । ततस्तथा श्लाघिता यज्ञा अवोचन्—आश्चर्यत्वं धन्यत्वं च नास्माकं संभवि; अपितु दक्षिणया सहितस्य साक्षाद्यज्ञपदवाच्यस्य भगवत एवेति । अथ नारदो महामुनिः रैवतकगिरिमध्यासीनं श्रीकृष्णं परमात्मानमुपसृप्य 'भगवन् त्वमेव अश्चार्यभूतश्च धन्यश्चासि' इति प्राह । कृष्णश्च सस्मितम् ओमित्यङ्गीकृतवान् इति । हरिवंशे कीर्तिता सैषा कथा अत्रानुसंहितेति वेदितव्यम् ॥ .... .... (५)

(गाथा.) मैत्तुनन्मार् कादलियै मयिर्मुडिप्पित्तु अवर्हळैये मन्नराक्कि *
उत्तरैतन् शिरुवनैयुम् उय्यक्कोण्ड वुयिराळनुरैयुम् कोयिल् *
भक्तर्हळुम् भगवर्हळुम् पळमोळियाय् मुनिवर्हळुम् परन्दनाडुम् *
सिद्धर्हळुम् तोळुदिरैञ्ज दिशैविळक्काय् निर्किन्र तिरुवरङ्गमे ॥ ६ ॥

पाण्डवानां धर्मपत्नीं द्रौपदीं सुग्रथितचिकुरबन्धामारचय्य तान् पाण्डवानेव साम्राज्यं प्रापितवता, उत्तरागर्भपिण्डसंजीवनं कृतवता च परमात्मनाऽध्युषितं स्थलं किमिति चेत्; भक्तानां महाज्ञानिनां वेदाध्ययननिरतानां महर्षीणां विपुलमहीमण्डलवर्तिनामशेषजनानां सिद्धानां च प्रणतिलक्ष्यभूतं दक्षिणदिशाप्रदीपायितं च श्रीरङ्गक्षेत्रम् ॥ (६)

(गाथा.) कुरळ्परिमचारियाय् मावलियै क्कुरुम्बदक्कि यरशुवाङ्गि *
इरैप्पोळुदिल् पाताळम् कलविरुक्कै कोडुत्तुगन्द वेम्मान् कोयिल् *
एरिप्पुडैय मणिवरैमेल् इळनायिरेलुन्दापोल् अरवणैयिन्वाय् *
शिरप्पुडैय पणङ्गळ्मिशै शेलुमणिगळ् विट्टेरिकुम् तिरुवरङ्गमे ॥ ७ ॥

वामनब्रह्मचारिवर्ष्म परिगृह्य महाबलिगर्वनिर्वापणमारचय्य क्षणमात्रे तं रसातलं प्रापय्य प्रहृष्टहृदो भगवतो दिव्यं धाम किमिति चेत्, जाज्वल्यमानमणिगिरिवरमूर्धनि बालसूर्या बहवस्समुदिताः किमु ! इत्युल्लेखयोग्यतया शेष-भोगिनः फणामणिव्रातमयूखमण्डलप्रकाशप्रचुरं श्रीरङ्गक्षेत्रम् ॥ .... .... (७)

(गाथा.) उरम्पत्ति थिरणियनै उहिर्नुदियाल् ओळ्यिमार्पुरैक्कवूनि *
शिरम्पत्ति मुडियिडिय क्कणूपिदुङ्ग वायलरत्तेळित्तान्कोयिल् *
उरम्पेत्त मलर्कमलम् उलगळन्द शेवडिपोलुयर्न्दु काट्ट *
वरम्बुत्त कदिर्चेन्नेल् ताळ्शाय्त्तु त्तलैवणक्कुम् तण्णरङ्गमे ॥ ८ ॥

वरबलावलिप्तहिरण्यासुरस्य वक्षस्स्थलं निजनखाग्रतो निर्भिद्य तदीयं मकुटं च शिथिलयित्वा नयने च निर्मूल्य वदनं च क्रन्दितमुखरमाकलय्य आश्रितविरोधिनिरसनतः प्रमुदितस्य भगवतो दिव्यं धाम किमिति चेत्:—त्रिविक्रम-भगवत्पादारविन्दनिर्विशेषमुन्नतैः कमलकुसुमैः धान्यगुच्छकभरेणावनतैः अत एव प्रणिपतद्भिरिव स्थितैस्सस्यैश्च परीतं श्रीरङ्गक्षेत्रम् ॥ [टिप्पणी :—भगवतो भागवतानां च दर्शनार्थमेव हि श्रीरङ्गान्तः प्रवेष्टव्यम्; उभय-दर्शनमपि बाह्यकेदारेष्वेव भवति । उच्चैरभिवृद्धकमलदण्डदर्शनेन भगवत्पदारविन्ददर्शनं सिध्यति; प्रह्वीभूतधान्य-गुच्छकविशिष्टसस्यभूदर्शनेन विनयावनतशिरस्कभागवतदर्शनं सिध्यति—इत्युक्तं भवति] ॥ .... (८)

(गाथा.) तेवुडैय मीनमाय् आमैयायेनमाय् अरियाय् कुरळाय् *
मूवुरुविनिरामनाय् कण्णनाय् कर्कियाय् मुडिप्पान्कोयिल् *
शेवलोडु पेडैयन्नम् शेङ्गमलमलरेरि यूशलाडि *
पूवणैमेल् तुदैन्देलु शेम्पोडियाडि विळैयाडुम् पुनलरङ्गमे ॥ ९ ॥

दिव्यमत्स्यकूर्मवराहनरहरिवामनपरशुरामदाशरथिबलरामकृष्णरूपिणः अथ कल्किरूपेण दुष्टान् संहरिष्यतश्च भगवतो दिव्यं धाम किमिति चेत्; कमलकुसुमे डोलोत्सवमनुभवतः पुष्पशयनोत्थरजोरूषितवपुषश्च हंसमिथुनस्य विहरणैरभिरामान् जलाशयान् बिभ्रत् श्रीरङ्गक्षेत्रम् ॥ .... .... .... (९)

(गाथा.) शेरुवालुम् पुळ्ळालन् मण्णाळन् शेरुचेय्यु नान्दगमेन्तु
मोरुवाळन् * मरैयाळन् ओडादपडैयाळन् विलुक्कैयाळन् *
इरवाळन् पगलाळन् एन्नैयाळन् एळुलगप्पेरुम्पुरवाळन् *
तिरुवाळन् इनिताग त्तिरुक्कण्गळ् वळर्किन्र तिरुवरङ्गमे ॥ १० ॥

आश्रितविरोधिवर्गनिरसननिपुणखगपतिवाहनस्य लीलाविभूतिनिर्वाहकस्य रणवीरनन्दकाभिधानखड्गाङ्कितस्य वेदैक-समधिगम्यस्य बलिष्ठसेनाधिनाथस्य महावदान्यस्य चन्द्रसूर्यनियामकस्य मन्त्रियामकस्य सप्तलोकीनिर्वहणधुरन्धरस्य च लक्ष्मीपतेः परमभोग्यशयनस्थली श्रीरङ्गदिव्यक्षेत्रम् ॥ .... .... .... (१०)

(गाथा.) कैन्नागत्तिडर्कडिन्द कनलाळि प्पडैयुडैयान् करुदुङ्गोयिल् *
तेन्नाडुम् वडनाडुम् तोळनिन्न तिरुवरङ्गम् तिरुप्पतियिन्मेल् *
मेय्न्नावन् मेय्यडियान् विट्टुशित्तन् विरित्त तमिलुरैकवल्लार् *
एञ्ञान्तुम् एम्बेरुमानिणैयडिक्कीळ् इणैपिरियादिरुप्पर्तामे ॥ ११ ॥

शुण्डादण्डाङ्कितवेतण्डराजदुःखापहर्तृजाज्वल्यमानहेतिराजपरिकर्मितपाणिना भगवता स्वावसथत्वेन संकल्पितं दक्षिणोत्तरजनपदनिवासिसकलजनताप्रणिपतनलक्ष्यभूतं च श्रीरङ्गदिव्यक्षेत्रमधिकृत्य सत्यवादिना सत्यभक्तेन च विष्णुचित्तसूरिवरेण कीर्तितमिदं द्राविडसूक्तं कीर्तयन्तो महान्तस्सन्ततमपि भगवत्पादारविन्दद्वन्द्वपरिसरवर्तनभाग्य-भाजस्स्युः—इति फलकीर्तनेन समापितमिदं दशकम् ॥ .... .... (११)

— तथा चैतद्दशकसारांशसंग्राहकं पद्यमिदमिहानुसन्धेयम् —

वात्सल्यं भक्तवर्गे निरतिशयमिह ख्यापयन् भक्तरक्षो-
ऽध्यक्षे स्वं पक्षपातं निरवधिमुपसंदर्शयन्, दुष्टवर्गम् ।
कुर्वन्निर्मूलमुच्चैः करिवरविपदुद्ध्वंसिचक्रस्स देवः
श्रीरङ्गे सेवनीयो भवगदभिषगित्याह सूक्तेऽत्र सूरिः ॥

इति श्रीभट्टनाथसूक्ते चतुर्थे शतके नवमं दशकमवसितम् ॥
श्रीभट्टनाथदिव्यसूरिदिव्यचरणावेव शरणम् ॥

---

॥ श्रीरस्तु ॥

॥ श्रीमते रामानुजाय नमः ॥ श्रीमद्वरवरमुनये नमः ॥

श्रीभट्टनाथसूक्ते चतुर्थशतके

# ॥ ४-१०. दशमं सूक्तम्—तुप्पुडैयारै ॥

## (नरकयातनानिवृत्तये श्रीरङ्गनाथप्रपदनम्)

अवतारिका—जगति सर्वेषामपि संसारिणां शरीरवियोगसमये यमकिङ्करबाधा बलवतीति प्रसिद्ध-मेतत् । तदनुचिन्त्य दूयमानस्सूरिवरोऽसौ, * स्थिते मनसि सुस्वस्थे शरीरे सति यो नरः । धातुसाम्ये स्थिते स्मर्ता विश्वरूपं च मामजम् ॥ ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम् । अहं स्मरामि मद्भक्तं नयामि परमां गतिम् * इति वराहचरमश्लोकं चानुसन्दधानः पटुतरकरणत्वावस्थायामस्यामेव श्रीरङ्गनाथ भगवन् ! ते सर्वविधं कैङ्कर्यं करवाणि ; एतत्सर्वं भवान् स्वकीयचित्ते निदधानस्सन् यथाऽहं न परितापभाग्भवेयम् तथा नाम करोत्विति प्रार्थयते दशकेऽस्मिन् ॥ *

(गाथा.) तुप्पुडैयारै यडैवदेल्लाम् शोर्विडत्तु त्तुणैयावरेन्ने *
ओप्पिलेनागिलुम् निन्नडैन्देन् आनैक्कु नीयरुळ्शेय्दमैयाल् *
एप्पेन्नै वन्दु नलियुम्पोदु अङ्गेदु नानुन्नै निनैक्कमाट्टेन् *
अप्पोदैक्किप्पोदे शोल्लिवैत्तेन् अरङ्गत्तरवणैप्पळ्ळियाने ॥ १ ॥

श्रीरङ्गेश्वर शेषशायिन् भगवन्! संरक्षणसामर्थ्यशालिनो भवतः प्रपदनं 'सर्वथा दैन्यकाले संरक्षको भवितुमलं भवान्' इतिधियैव खलु। अनधिकारी सन्नप्यहं भवन्तं प्रपन्नोऽस्मि। करीन्द्ररक्षणकथाप्रत्ययशाली चास्मि। चरमकाले सर्वेन्द्रियदैन्ये संप्राप्ते भवन्तं स्मर्तुमपि नाहं शक्नुयाम्। तदात्वे यद्वक्तव्यं तदधुनैव भगवन्नवादिषम्॥

(गाथा.) शामिडत्तेन्नै कुरिक्कोळ् कण्डाय् शङ्गोडु शक्करमेन्दिनाने *
नामडित्तेन्नै अनेकदण्डम् शेय्वदा निर्पर् नमन्तमर्हळ् *
पोमिडत्तुन् तिरत्तेत्तनैयुम् पुहावण्णम् निर्पतोर्मायै वल्लै *
आमिडत्ते युन्नै चोल्लिवैत्तेन् अरङ्गत्तरवणैप्पळ्ळियाने ॥ २ ॥

शंखचक्रधर श्रीरङ्गेश्वर शेषशायिन्! मुमूर्षुदशायां स्थास्यन्तं मां मा स्म विस्मरः। अन्तःकरणे कलय मां कृपया। मरणसमनन्तरमेव यमकिङ्करा भीषणकरालजिह्वाग्रास्सन्तो नानाविधानि दण्डनानि मां लम्भयितुं सन्नह्येयुः। प्राणप्रयाणसमये मदीयं मनो यथा न भवन्तं मनागपि चिन्तयेत्तथा नाम मायां प्रयोक्तुं प्रभवति हि भवान्। तदधुनैव यथाशक्ति भवन्तं कीर्तयामि भोः॥ .... .... .... (२)

(गाथा.) एल्लैयिल् वाशल् कुरुहचेन्नाल् एत्ति नमन्तमर् पत्तुम्पोदु *
निल्लुमिनेन्नुम् उपायमिल्लै नेमियुम् शङ्गमुमेन्दिनाने *
शोल्ललाम्पोदे युन्नाममेल्लाम् शोल्लिनेनेन्नै कुरिक्कोण्डेन्नुम् *
अल्लल् पडावण्णम् काक्कवेण्डुम् अरङ्गत्तरवणैप्पळ्ळियाने ॥ ३ ॥

सुदर्शनपाञ्चजन्यधारिन् भगवन्! श्रीरङ्गेश शेषशयन! असूनामवसानदशायां यमलोकद्वारप्रवेशसमयस्सन्निहित इति वक्तव्यतायां समुपनतायां यमभटा मां दण्डयितुं समुपस्थिता यदि, तान् प्रतिषेद्धुं न कोऽप्यस्त्युपायः। उच्चारणयोग्यतादशायामस्यामेव भवतो दिव्यानि नामानि सकलानि संकीर्तयामि। इदृशं मां सदा चित्ते निदधानस्सन् यातनाभ्यः परिपाहि भगवन्॥ .... .... .... .... (३)

(गाथा.) ओत्तै विडैयनुम् नान्मुगनुम् उन्नैयरियाप्पेरुमैयोने *
मुत्तवुलगेल्लाम् नीयेयाहि मून्नेळुत्ताय मुदल्वनेयो *
अत्तदु वाणाळिवर्केन्नेण्णि अञ्ज नमन्तमर् पत्तलुत्त *
अत्तैक्कु नीयेन्नै काक्कवेण्डुम् अरङ्गत्तरवणैप्पळ्ळियाने ॥ ४ ॥

वृषभध्वज-चतुर्मुख दुरवगमप्रभावनिधे! सर्वलोकतादात्म्यशालिन्! प्रणवस्वरूपिन्! जगन्निदान! श्रीरङ्गनाथ शेषशय भगवन्! जन्तोरस्य जीवितकालोऽवसित इत्यवधार्य यदा मां यमभटा भीषयन्तस्सन्तो जिघृक्षेयुस्तदा हन्त भवान्मामिरक्षतु॥ .... .... .... .... .... (४)

(गाथा.) पैयरविनणै प्पार्कडलुळ् पळ्ळिकोळ्हिन्न परममूर्ति *
उय्यवुलडु पडैक्कवेण्डि उन्दियिल् तोत्तिनाय् नान्मुगनै *
वैयमनिशरै प्पोय्येन्नेण्णि कालनैयुमुडनेपडैत्ताय् *
ऐयविनि येन्नैक्काकवेण्डुम् अरङ्गत्तरवणैप्पळ्ळियाने ॥ ५ ॥

क्षीराब्धौ फणिनमधिशयान परमपुरुष श्रीरङ्गेश्वर शेषशायिन् भगवन् ! उज्जीवनार्हाणां जगतां सृष्ट्यर्थं निजनाभीनलिने चतुर्मुखमसृजः ; भुवि जातानां नश्वरत्वात् कृतान्तमपि सहैव सृष्टवानसि । इतश्च भीरुम् मां प्रभो परिपालय ॥ .... .... .... .... .... (५)

(गाथा.) तण्णनविल्लै नमन्तमर्हळ् शालकोडुमैहळ् शेय्यानिर्पर् *
मण्णोडु नीरुमेरियुम् कालुम् मत्तुमाकाशमुमाहि निन्नाय् *
एण्णलाम्पोदे युन्नाममेल्लाम् एण्णिनेनेन्नै क्कुरिक्कोण्डेन्नुम् *
अण्णले नीयेन्नै काकवेण्डुम् अरङ्गत्तरवणैप्पळ्ळियाने * ॥ ६ ॥

पृथिव्यप्तेजोवाय्वाकाशरूपपञ्चभूतात्मक ! सर्वस्वामिन् ! श्रीरङ्गे शेषमधिशयान भगवन् ! यमभटाः खलु वाक्कायकृत्येषु न मनागपि मार्दवशालिनः । वाचामभूमिं हिंसनानि कलयेयुः । भवद्दिव्यनामानि चिन्तनयोग्यताशालिन्यस्मिन् समये सुष्ठु संचिन्तयामि । मां सदा चित्ते कलयन् परिपाहि भगवन् ॥ .... (६)

(गाथा.) शेझोंल् मरैप्पोरुळाहि निन्न देवर्हळ्नायकने एम्माने *
एझलिलेन्नुडैयिन्नमुदे एलुलगुमुडैयायेन्नप्पा *
वञ्जवुरुविन्नमन्तमर्गळ् वलिन्दु नलिन्देन्नै प्पत्तुम्पोदु *
अञ्जलमेन्नेन्नैक्काकवेण्डुम् अरङ्गत्तरवणैप्पळ्ळियाने ॥ ७ ॥

निरवद्योक्तिमयनिगमार्थभूत ! देवाधिदेव स्वामिन् ! मम परिपूर्णदिव्यामृतभूत ! सप्तलोकीनिर्वाहक मत्प्रभो श्रीरङ्गेश फणिपतिशयन ! प्रच्छन्नरूपास्सन्तो यमकिङ्कराः प्रसभं मामवसाद्य यदा निहन्युस्तदा अभयप्रदानपूर्वकममिरक्ष भगवन् ॥ .... .... .... .... .... (७)

(गाथा). नानेदुमुन्मायमोन्नरियेन् नमन्तमर् पत्ति नलिन्दिट्टु * इन्द
ऊने पुहे येन्दु मोदुम्पोदु अङ्गुन्नै नानोन्दु निन्नैक्कमाट्टेन् *
वानेय्वानवर् तङ्गळीशा मधुरैप्पिरन्द मामायने *
एन्नानाय् नीयेन्नैक्काकवेण्डुम् अरङ्गत्तरवणैप्पळ्ळियाने ॥ ८ ॥

दिव्यधामनिकेतननित्यसूरिनियामक ! मथुरापुरावतीर्ण परमाद्भुतगुणचेष्टित ! स्पृहणीयकलभोपम ! श्रीरङ्गनाथ शेषशय भगवन् ! दुरत्ययां तव मायां मनागपि नाहं जाने । यमभटा मामत्रस्कन्ध विगाह्य यातनाशरीरेऽस्मिन् प्रविशेत्युक्त्वा यदा प्रहरेयुस्तदा न त्वां मनागपि चिन्तयितुं प्रभवेयम् । परिपाहि भगो ॥ .... (८)

(गाथा.) कुन्नेडुत्तानिरै कात्तवाया कोनिरै मेय्त्तवने एम्माने *
अन्नुमुदल् इन्नरुदियाह आदियञ्जोति मरन्दरियेन् *
नन्नुञ्जोडिय नमन्तमर्गळ् नलिन्दुवलिन्देन्नै प्पत्तुम्पोदु *
अन्नङ्गु नीयेन्नै काक्कवेण्डुम् अरङ्गत्तरवणैप्पळ्ळियाने ॥ ९ ॥

गोवर्धनाचलोद्धारणेन संरक्षितगोवृन्द गोविन्द गोगणचारणचतुर स्वामिन् ! श्रीरङ्गे शेषशय ! यदाऽहं भवदीय-मनुग्रहमवापं ततः प्रभृति तव दिव्यमङ्गलविग्रहं नैव विस्मृतवानस्मि । अतिदारुणा यमभटा यदा मां हठात्कारेण परिगृह्य बाधेरन् तदा तत्र परिरक्षणीयोऽयं जनो भवता ॥ .... .... (९)

(गाथा.) मायवनै मधुसूदननै माधवनै मरैयोर्हळेत्तुम् *
आयर्हळेत्तिनै अच्चुदनै अरङ्गत्तरवणैप्पळ्ळियानै *
वेयर् पुगळ् विल्लिपुत्तूर् मन् विट्टुशित्तन् शोन्न मालैपत्तुम् *
तूयमनत्तनराहि वल्लार् तूमणिवण्णनुक्काळर् तामे ॥ १० ॥

दिव्याद्भुतगुणचेष्टितशालिनं मधुसूदनं माधवं परमवैदिकस्तुत्यं गोपालमच्युतं श्रीरङ्गशेषशयनं भगवन्तमधिकृत्य वैदिकसन्ततिसंस्तूयमानधन्विनव्यनगरनाथश्रीविष्णुचित्तसूरिकथितमिदं गाथादशकं पवित्रहृदयास्सन्तो ये कीर्तयन्ति ते मणिवर्णभगवत्किङ्करास्स्युरिति फलकीर्तनेन समापितमिदं दशकम् ॥ .... .... (१०)

— तथा चैतद्दशकसारसंग्राहकं पद्यमेतदिहानुसन्धेयम् —

प्राणान्ते दुर्गतौ या अहह बहुविधा यातनास्संभवित्र्यः
तास्सोढुं नाहमर्हः, पटुतरकरणैस्सांप्रतं नाथ! सर्वम् ।
कैङ्कर्यं ते क्रियासं प्रणिदधदखिलं चैतदात्मीयचित्ते
श्रीरङ्गाध्यक्ष! रक्षेत्यधिदशममसौ सूरिवर्योऽभ्यधत्त ॥

इति श्रीभट्टनाथसूक्ते चतुर्थशतके दशमं दशकमवसितम् ॥

इति श्री काञ्चीप्रतिवादिभयङ्कर–जगदाचार्यसिंहासनाधीश–श्रीमदण्णङ्गराचार्यकृतिषु
श्री भट्टनाथसूक्तविवर्ते चतुर्थशतकं समाप्तम् ॥

श्रीभट्टनाथ दिव्यसूरि दिव्यचरणावेव शरणम् ॥

---

॥ श्रीरस्तु ॥

श्रीमते रामानुजाय नमः ॥ श्रीमद्वरवरमुनये नमः ॥

श्रीभट्टनाथसूक्ते पञ्चमशतके

# ॥ ५-१. प्रथमं दशकम् — वाक्कुत्तूय्मै ॥

[ पञ्चमं शतकमिति व्यपदेशमात्रम् । चत्वार्येव दशकान्यवतीर्णान्यत्र । ]

## —* भगवत्सविधे अनन्यप्रयोजन कैङ्कर्यरुचि विज्ञापनम् *—

अवतारिका—इदं दशकमतिविलक्षणमवतीर्णम् । सूरिवरस्यास्य आर्तिरेव एतद्दशकात्मना परिणतेति सुवचम् । भो अप्रमेयगुणगणमहोदधे भगवन् ! विधिशिवसनकादीनामपि ध्यातुमत्यन्तदूरं त्वाम् अतिमलिनवचनरसोऽहं नैव स्तोतुं प्रभवामि सत्यम् । तथाऽपि मदीया रसना त्वदन्यं न कमपि वेदेति हेतुना प्रणतपरतन्त्रो भवानेव अगत्या स्तोतव्यतां भजति । वाचिकदोषाणां क्षन्तव्यता ते किमु वक्तव्या? अन्नवसनादिक्षुद्रफललिप्सया भवन्तमुपसर्पन्तो भक्ता अपि बहवः स्युः । नाहं तेष्वन्यतमो मन्तव्यः । भगवन् ! नाहं क्षुद्रफलप्रेप्सुः । यद्यपि प्रकृतिमण्डलेऽस्मिन्निवासपर्यन्तं क्षुद्राणामन्नवस्त्रादीनामप्यपेक्षणीयता काममस्ति नाम । तथाऽप्येतदर्थं भवत्सकाशे प्रार्थनमनावश्यकं भगो । 'अयं किङ्करो जन' इति गौरवेण तत्रतत्र तेते प्रदद्युर्नाम तानितानि भृशमशनवसनादीनि । अतस्तदपेक्षणमप्रसक्तम् । केवलमनन्यप्रयोजनं कैङ्कर्यमेव कामये । तत् परमकृपया वितरेति विविधभगवद्वैभवप्रशंसनपूर्वकं प्रार्थयते सूरिवरोऽस्मिन् दशके ॥ *

(गाथा.) वाक्कुत्तूय्मै यिलामैयिनाले माधवावुन्नै वाय्क्कोळ्ळमाट्टेन् *
नाकु निन्नैयल्लालरियादु नानदञ्जुवनेन्वशमन्नु *
मूर्कुप्पेशुहिन्रानिवनेन्नु मुनिवायेलुमेन्नाविनुक्काट्रेन् *
काक्कैवायिलुम् कट्टुरै कोळ्वर् कारणा करुळक्कोडियाने ॥ १ ॥

भगवन् माधव ! मम तु वागत्यन्तमशुचिरिति हेतुना न त्वां स्तोतुमुत्सहेऽहम् । तथाऽपि मे जिह्वा त्वद्व्यतिरिक्तं न कमपि वेद । अशुचिवाक्त्वप्रयुक्ता भीतिस्तु मम वर्तते । जिह्वा तु न मदधीना । तां निरोद्धुं नाहं प्रभवामि । आः किमयं मूर्खस्सन्नेवं ब्रवीतीति कोपस्स्यादपि कामं भवतः । स्वकीयां जिह्वां नियन्त्रितुमशक्तो ह्यहम् । क्षुद्रमपि मदीयं स्तोत्रं तत्रभवता स्वीकार्यमेव । नैतेन ते काऽपि क्षतिस्स्यात् । भगवन् जगन्निदानभूत गरुडध्वज ! वायसमुखतोऽपि लौकिका गृह्णन्ति हि सुभाषितानि ॥ .... .... .... (१)

(गाथा.) शळक्कु नाक्कोडु पुन्कवि शोन्नेन् शङ्गुचक्करमेन्दुकैयाने *
पिळैप्पराहिलुम् तम्मडियार् शोल्पोरुप्पदु पेरियोर् कडनन्ने *
विळिकुळ्ळण्णिलेन् निन्गण् मत्तल्लाल् वेरोरुवरोडेन्मनम्पत्तादु *
उळैक्कोर् पुळ्ळिमिहैयन्नु कण्डाय् ऊळियेल्लुलहुण्डुमिळ्न्दाने ॥ २ ॥

शंखचक्रालंकृतपाणे · भगवन् ! अवद्यभरितया जिह्वया क्षुद्रवाग्गुम्भनानि कलयेऽहम् । भक्ता अपराध्यन्तीति नैतद्विस्मयनीयम् । तत्सहनं महतां भरः खलु । भवदीयकरुणार्द्रदृगञ्चलादन्यत्र मे स्पृहणीयमस्ति नाम । न मे मन स्त्वत्तोऽन्यत्र लगति । प्रलयनिगीर्णोद्गीर्णसप्तलोक भगवन् रेखाबिन्दुमयगात्रयुक्ते हरिणे विन्दोरेकस्य दृष्टिः कानाम ?

[टिप्पणी :—रेखाविन्दुमयेत्यादिवाक्यस्यायं भावः । हरिणगात्रे असंख्यातरेखाविन्दुसद्भावो न निह्नवार्हः ; तत्र वृद्धिं वा ह्रासं वा न कोऽप्यवधत्ते । तद्वत् अपराधमये मयि अपराधानां वृद्धिर्वा ह्रासो वा नावेक्ष्यताम् इति । अन्यथाऽप्यभिप्रायो वर्णयितुं योग्यः ॥ ] .... .... (२)

(गाथा.) नन्मै तीमैहव्व् ओन्तुमरियेन् नारणावेन्तुमित्तनैयल्लाल् *
पुन्मैयालुनै प्पुवल्लुवम्पेशि पुगळ्वानन्तु कण्डाय् तिरुमाले *
उन्तुमारुनै ओन्तुमरियेन् ओवादे नमो नारणावेन्वन् *
वन्मैयावदुन् कोयिलिल् वालुम् वैष्णवनेन्तुम् वन्मै कण्डाये ॥ ३ ॥

श्रियः पते ! नारायणेत्येतावदुक्तिमात्रं विना सुकृतं वा दुरितं वा न किञ्चिदहं वेद्मि । [नारायणेतिकथनं सुकृतं वा दुरितंवेत्यापि न जानामीति यावत् । ] यद्यपि मे स्वतस्सिद्धमस्ति दौरात्म्यम्, तथाऽपि न त्वामहं छलवृत्त्या स्तौमि । त्वद्विचिन्तनप्रकारं तु नैव जानामीषदपि । अष्टाक्षरमहामन्त्रमनारतं व्याहरन् वर्ते । त्वदीय-दिव्यालयद्वारपालननिष्णातवैष्णवत्वमेव मे दृढाध्यवसितम् ॥ .... .... (३)

(गाथा.) नेडुमैयाळुलगेळुमळन्दाय् निन्मला नेडियायडियेनै *
कुडिमै कोळ्वदर्कु ऐयुरवेण्डा कूरैशोरिवै वेण्डुवदिल्लै *
अडिमैयेन्तुमकोयिन्मैयाले अङ्गे यवै पोदरुङ्गण्डाय् *
कोडुमैकञ्जनै कोन्तु निन्तादै कोत्त वन्तळै कोळ्विडुत्ताने ॥ ४ ॥

त्रैविक्रमक्रमकृताक्रमणसप्तलोक ! हेयप्रत्यनीक महानुभाव ! अतिकर्कशचित्तकंसवधोन्मोचितपितृनिगलबन्ध ! इमं जनं किङ्करत्वेन स्वीकर्तुं न कोऽपि संदेहो वोढव्यस्त्वया । त्वत्सकाशे नास्ति मम तावदशनाच्छादनलिप्सा । त्वद्दास्यरूपराजकुलमाहात्म्यतस्सर्वत एवास्ति मे अशनाच्छादनसौलभ्यम् । अतश्च निर्विशङ्कमहं किङ्करः कर्तव्यः ॥

(गाथा.) तोट्टमिल्लवळ् आत्तोळवोडै तुडवैयुङ्गिणरुमिवैयेल्लाम् *
वाट्टमिन्नि युन् पोन्नडिकीळे वळैप्पहम् वडुत्तुकोण्डिरुन्देन् *
नाट्टु मानिडत्तोडेनकरिदु नत्तुवार् पलर् केळलोन्नागि *
कोट्टुमण्कोण्ड कोळ्गैयिनाने कुञ्जरम् वीळ कोम्बोशित्ताने ॥ ५ ॥

दंष्ट्राग्रोद्धृतधरणीमण्डल दिव्यवराहमूर्ते ! दन्तोद्भञ्जनपूर्वकमारितकुवलयापीडकुञ्जर ! (संसारिणामावश्यकम्) उद्यानकलत्रगोष्ठतटाककेदारकूपादिकं सर्वमपि वस्तुजातं त्वदीयपादारविन्दात्मकमेव मे नियतम् । अनीदृशैः प्राकृतमनुष्यैस्सह संगतिर्मे न स्वदते ; लोको हि भिन्नरुचिः ॥ .... .... (५)

(गाथा.) कण्णा नान्मुगनैप्पडैत्ताने कारणा करियायडियेन् नान् *
उण्णानाळ् पशियावतोन्निल्लै ओवादे नमोनारणावेन्नु *
एण्णानाळुमिरुक्केशुचामवेद नाण्मलर् कोण्डु उनपादम्
नण्णानाळ् * अवै तत्तुरुमागिल् अन्नेनक्कवै पट्टिनिनाळे ॥ ६ ॥

अयि कृष्ण चतुर्मुखजनक ! सकलजगन्निदानभूत ! नीलतनो भगवन् ! दासोऽहं यदा नाश्नामि तदा न मे क्षुद्बाधा काऽपि स्यात् । श्रीमदष्टाक्षरदिव्यमन्त्रानुसन्धानम् ऋग्यजुस्सामवेदमन्त्रैः त्वत्पादमूले दिव्यकुसुमार्चनं च यदा मे विघटते तदैव मम सत्यं क्षुधितदशा ॥ .... .... .... (६)

(गाथा.) वेळ्ळैवेळ्ळत्तिन्मेलोरुपाम्बै मेत्तैयाग विरित्ततन्मेले *
कळ्ळनिद्दिरै कोळ्गिन्नमार्गम् काणलाङ्गोलेन्नाशैयिनाले *
उळ्ळमोर वुगन्देदिर्विम्मि उरोमकूपङ्गळाय् कण्णनीर्गळ् *
तुळ्ळमोर तुयिलणैकोळ्ळेन् शोल्लायानुन्नै त्तत्तुरुमारे ॥ ७ ॥

क्षीरार्णवप्रवाहे अद्वितीयमहिपतिं दिव्यपर्यङ्कत्वेन विस्तार्य तदुपरि निद्रामुद्राखीकृतिप्रकारो यः खलु तवास्ति तद्विचिन्तनं मे घटेत वेत्यनया समुत्कण्ठया द्रुतमनस्कता हर्षमेदुरता पुलकितगात्रता उद्गीर्णबाष्पाम्बुनयनाढ्यता निर्निद्रता च भवति हन्त । भगवन् ! त्वत्प्राप्त्युपायमभिधेहि ॥ .... .... (७)

(गाथा.) वण्णमाल्वरैये कुडैयाह मरि कात्तवने मधुसूदा *
कण्णने करिकोळ् विडुत्ताने कारणा कळिरट्टपिराने *
एण्णुवारिडरैक्कळैवाने एत्तरुम्पेरुङ्कीर्तियिनाने *
नण्णिनानुन्नै नाडोरुमेत्तुम् नन्मैये यरुळ्शेय् एम्बिराने ॥ ८ ॥

सुन्दरमहत्तरगोवर्धनाद्रिं छत्रीकृत्य वर्षबाधानिरासक ! मधुरिपो ! श्रीकृष्ण ! करिवरत्रायक ! जगत्कारण ! कुवलयापीडघातुक ! स्वध्याननिरतभक्तजनव्यसनापनोदनक्षम ! वाचामगोचरमहाकीर्तिनिधे भगवन् ! यथाऽहं त्वामुपसृत्य अनुदिनं स्तुतिकर्ता स्यां तथा नाम भाग्यमनुगृहाण भोः ॥ .... .... (८)

(गाथा.) नम्बने नविन्नेत्तवल्लार्हळ् नादने नरशिङ्गमदानाय् *
उम्बर् कोनुलगेळुमळन्दाय् ऊळियायिनायालिन्मुनेन्दिं *
कम्बमा करिकोळ् विडुत्ताने कारणा कडलैक्कडैन्दाने *
एम्बिरानेन्नै यालुडैत्तेने एळैयेनिडरैक्कळैयाये ॥ ९ ॥

भो भक्तविश्वसनीय ! प्रेमार्द्रहृदयस्तोतृजनसंरक्षणदक्षिण ! दिव्यनृसिंहमूर्ते ! नित्यसूरिनाथ ! सप्तलोकीसमाक्रमणनिपुण ! सकलकालनियामक ! हेतिराजतो निरस्तगजेन्द्रक्लेश ! कारणभूत ! सिन्धुमन्थप्रवीण ! अस्मत्स्वामिन् ! अस्मच्छेषिन् ! मधुनिर्विशेषपरमभोग्य ! चपलस्य ममार्तिमपाकुरु भगवन् ॥ .... (९)

(गाथा.) कामर्तादै करुदलशिङ्गम् काणविनिय करुङ्कुळल् कुट्टन् *
वामननेन् मरतकवण्णन् माधवन् मधुसूदनन्तन्नै *
शेमनन्गमरुम् पुदुवैयर्कोन् विष्णुचित्तन् वियन्तमिळ् पत्तुम् *
नाममेन्नु नविन्नुरैप्पार्हळ् नण्णुवारोळ्ळै नारणनुलहे ॥ १० ॥

मदनजनकं रिपुजनकलभकण्ठीरवं दृष्टिभोग्यं मेचककुन्तलं बालवामनं मरकतनिभं माधवं मधुसूदनमुद्दिश्य श्रीधन्विनव्यनगराधीशश्रीविष्णुचित्तसूरिविज्ञापितं महनीयमिदं द्राविडगाथादशकं भगवन्नामनिर्विशेषं ये कीर्तयन्ति ते क्षिप्रं श्रीमन्नारायणान्तिकगन्तारस्स्युः—इति फलकीर्तनेन समापितमिदं दशकम् ॥ .... (१०)

— तथा चैतद्दशकसारांशसंग्राहकं पद्यमिदमिहानुसन्धेयम् —

नाहं त्वां स्तोतुमर्हाम्यतिमलिनवचाः किंतु जिह्वा न वेद
त्वत्तोऽन्यम्, तत्प्रणौमि प्रणतवश हरे! वाचि दोषान् क्षमस्व ।
नैवान्नं वस्त्रमिच्छाम्यहमिह, सुलभं तत्तु सर्वत्र नाथ!
त्वद्दास्यं कामये तद्वितर करुणयेत्येवमत्राह सूरिः ॥

इति श्रीभट्टनाथसूक्ते पंचमशतके प्रथमं दशकमवसितम् ॥
श्रीभट्टनाथमुनीन्द्रदिव्यचरणावेव शरणम् ॥

---

॥ श्रीरस्तु ॥

श्रीमते रामानुजाय नमः ॥ श्रीमद्वरवर मुनये नमः ॥

श्रीभट्टनाथसूक्ते पञ्चमशतके

## ॥ ५-२. द्वितीयं सूक्तम् — नेय्क्कुडत्तै ॥

—* [ स्वात्मनि भगवदधिष्ठानप्रख्यापनेन दुःखरोगादीनां निष्क्रमणचोदनम् । ] *—

अवतारिका—मुनेरस्य विष्णुचित्त इति यन्नाम प्रथते तत् स्वस्यैव समुचितमिति प्रख्यापयतीव दशकमिदम् । भगवान् वैकुण्ठनाथः स्वीयामहीन्द्रशय्यां क्षीराब्धिं स्वप्रेयसीमिन्दिरां च अविजहदेव स्थावरजङ्गम-रूपसर्वपरिवारसमेतस्सन् शंखचक्रगदासिशार्ङ्गवैनतेयादिभिरस्थानरक्षाव्यसनिभिरभिरक्ष्यमाणस्समागत्य स्थावरप्रति-ष्ठामवाप ममैव हृदये । इतः पूर्वं मम वपुषि सानन्दं स्थितवतां पापव्याधिदुःखराशीनाम् इतः परमत्र क्षणमप्य-वस्थातुमवकाशो नैव मनागपि । हे पापव्याधिदुःखवृन्दानि ! क्षिप्रमपसरत । युष्माकमिह स्थलं क्षीणमभूत् । मम हृदयस्य स्थितिरधुना पूर्ववन्नैव ; अपितु प्रबलतमं रक्षणं प्राप्य अखिल हेयप्रतिभटमभवन्मम हृदयमिदम् । तस्माद्युष्माकमितस्सरभसं पलायनमेव शरणमिति सानन्दमुदीरयति सूरिवरो दशकेऽस्मिन् ॥ *

(गाथा.) नेय्क्कुडत्तैप्पत्ति येरुमेरुम्बुगळ्पोल् निरन्दु * एङ्गुम्
कैक्कोण्डुनिर्किन्न नोय्गाळ् कालम्पेर वुय्यप्पोमिन् *
मेय्क्कोण्डु वन्दु पुगुन्दु वेदप्पिरानार् किडन्दार् *
पैक्कोण्ड पाम्बणैयोडुम् पण्डन्नुपट्टिनङ्काप्पे ॥ १ ॥

घृतकुम्भसंक्रामिपिपीलिकावर्गवत् मम गात्रं कृत्स्नमाक्रम्य वर्तमाना हे व्याधिगणाः ! क्षिप्रमपसरत स्वोजीवनाय । यतो हि वेदवेद्यः परमपुरुषो निजफणिपतितल्पेन सह मम वपुषि शयनमातनुते । नाहमधुना पूर्ववद्वर्ते । मम हृदयपत्तनमद्य सुरक्षितमास्ते ॥ .... .... .... .... (१)

(गाथा.) शित्तिरकुत्तनेलुत्ताल् तेन्पुलकोन् पोरियोत्ति *
वैत्तविलच्चिन्नै मात्ति त्तूदुवरोडि योळित्तार् *
मुत्तुत्तिरैकडल् शेर्पन् मूदरिवाळर् मुदल्वन् *
पत्तर्क्कमुदनडियेन् पण्डन्नुपट्टिनङ्काप्पे ॥ २ ॥

दक्षिणदिक्पालकेन परेतप्रभुणा स्वकीयहस्ताक्षरसनाथीकृतं चित्रगुप्तलिखितं कर्मग्रन्थिपुस्तकम् यमदूता निर्दह्य प्रधाव्य निलिल्यिरे । कुत इति चेत् ;—मुक्तोत्करप्रवाहितरङ्गमालासंकुलजलनिधिशायिनो नित्यसूरिनिर्वाहकस्य भक्तामृतस्य भगवतो दासभूतोऽस्मि । नाहमधुना प्रागिव वर्ते । हृदयपत्तनं मे संप्रति संप्राप्तसंरक्षणम् ॥ .... (२)

(गाथा.) वयित्तिल् तोळुवैप्पिरित्तु वन्पुलच्चेवैयदक्कि *
कयित्तुमकाणि कळित्तुक्कालिडैप्पाशङ्कळत्ति *
एयित्तिडै मण्कोण्डवेन्दै इराप्पकलोदुवित्तु * एन्नै
प्पयित्ति प्पणिशेय्यक्कोण्डान् पण्डन्नु पट्टिनङ्काप्पे ॥ ३ ॥

दंष्ट्राप्रोद्धृतधरणिमण्डल आदिवराहप्रभुः मातृजठररूपकारागृहवासं मम सवासनमपोह्य बलिष्ठपञ्चेन्द्रियाख्यबलीवर्दानुपमर्द्य स्नाय्वस्थिसंकुलस्थूलशरीरसङ्गं च व्युदस्य यमपाशग्रन्थिबन्धयोग्यतां च निराकृत्य नक्तंदिवं मामध्याप्य सदाचारनिष्ठं च कृत्वा नित्यकिङ्करपदे न्यधत्त । नाहं प्रागिव वर्ते । हृदयपत्तनमद्य मे सुरक्षितम् ॥ .... (३)

(गाथा.) मञ्जिय वल्विनै नोय्गाळ् उमकुमोर् वल्विनै कण्डीर् *
इङ्गुप्पुहेन्मिन् पुगेन्मिन् एळिदन्नु कण्डीर् पुगेन्मिन् *
शिङ्गप्पिरानवनेम्मान् शेरुम् तिरुक्कोयिल् कण्डीर् *
भङ्गप्पडादुय्यप्पोमिन पण्डन्नु पट्टिनङ्काप्पे ॥ ४ ॥

आत्ममालिन्यहेतुभूतबलिष्ठदुरितसंभवा भो व्याधयः ! युष्माकं महाननर्थस्समजनि । इह मा विशत माविशत । प्रवेशोऽत्र सत्यं दुष्करो वः । पुनरपि वच्मि माप्रविशत । श्रीमतो नृसिंहभगवतो ह्यावसथभूतं मम वपुः । भङ्गमनवाप्य समुज्जीवितुमपसरत । नाहं प्रागिव वर्ते । हृदयपुरमद्य मे सुरक्षितम् ॥ .... (४)

(गाथा.) माणिकुरळुरुवाय मायनै एन्मनत्तुळ्ळे *
पेणिकोणर्न्दु पुगुदवैत्तुकोण्डेन् पिरिदिन्नि *
माणिक्पण्डारङ्कण्डीर् वलिवन् कुरुम्वर्गळ्ळीर् *
पाणिकवेण्डा नडमिन् पण्डन्नु पट्टिनङ्काप्पे ॥ ५ ॥

अयि भो अतिवलिष्ठतस्करात्मकेन्द्रियवर्गाः ! वटुवामनवर्ष्मवरमाश्चर्यगुणचेष्टितं भगवन्तं सादरमानीय हृदि नित्य-प्रतिष्ठितमकार्षम् । मम वपुरधुना माणिक्यभण्डारायितमहो । अपसरत विना विलम्बम् । नाहं प्रागिव वर्ते । मदीयं हृत्पुरमधुना सुरक्षितम् ॥ .... .... .... .... (५)

(गाथा.) उत्तवुरुप्पिणि नोय्काळ् उमक्कोन्नु शोल्लुगेन् केण्मिन् *
पेत्तङ्ग्ळ् मेय्क्कुम् पिरानार् पेणुम् तिरुक्कोयिल्कण्डीर् *
अत्तपुरैकिन्नेन् इन्नमाळ्विनैगाळ् * उमक्किङ्गोर्
पत्तिल्लै कण्डीर् नडमिन् पण्डन्नु पट्टिनङ्काप्पे ॥ ६ ॥

चिरादत्यर्थमवसादातिशयजनका भो व्याधयः ! किमपि वो हितं कथयामि शृणुत ; मम वपुरधुना गोपालभगवद-भिनिवेशास्पदं मन्दिरं खलु संवृत्तम् ! पुनरपि वदामि सुनिष्कृष्टं वचः ; नरकनिपातहेतुभूतानि भोः पापकर्माणि ! अस्मिन्मम देहे नास्ति मनागपि वस्सङ्गः । अपसरत, नाहं पुरेव वर्ते । संप्रति सुरक्षितमस्ति मे हृदयपत्तनम् ॥

(गाथा.) कोङ्गैच्चिरुवैरैयेन्नुम् पोदुम्विनिल् वीळ्न्दु वळुक्कि *
अङ्गोर्मुळैयिनिल् पुक्किट्टु अळुन्दि किडन्दुळल्वेनै *
वङ्गकडल्वण्णनम्मान् वल्विनैयायिन मात्ति *
भङ्गप्पडावण्णंशेय्दान् पण्डन्नु पट्टिनङ्काप्पे ॥ ७ ॥

विषयान्तरप्रावण्यफलभूतनरकमार्गप्रवेशाभिमुखंस्थितं मां सिन्धुसवर्णो भगवान् मदीयाखिलदुरितराशिनिर्बर्हणपूर्वकं भङ्गकथादवीयांसं वितेने । नाहं पूर्ववदस्मि । सुरक्षितमधुना मे हृदयपत्तनम् ॥ .... (७)

(गाथा.) एदङ्गळायिनवेल्लाम् इरङ्गलिडुवित्त * एन्नुळ्ळे
पीदकवाडैप्पिरानार् पिरमगुरुवागिवन्दु *
पोदिल्कमलवन्नेञ्जम् पुगुन्दुमेन् शेन्नित्तिडरिल् *
पादविलच्चिनै वैत्तार् पण्डन्नु पट्टिनङ्काप्पे ॥ ८ ॥

पीताम्बरधारी भगवान् ब्रह्मोपदेष्टा गुरुर्मे भूत्वा बोधनिकेतनहृदयाब्जकोशं प्रविश्य मदीयमस्तकात्मकं समुत्तुङ्गस्थलं स्वकीयपादमुद्राङ्कितमचकलत् । नाहं प्रागिव वर्ते । सुरक्षितमद्य मम हृदयपत्तनम् ॥ .... (८)

(गाथा.) उरगलुरगलुरगल् ओण्शुडराळिये शङ्गे *
अरवेरि नान्दकवाळे अळगिय् शार्ङ्गमे तण्डे *

इरवु पडाभलिरुन्द एण्मरुलोकपालीर्गाळ् *
परवैयरैयावुरहल्र् पळ्ळियरै क्कुरिक्कोण्मिन् ॥ ९ ॥

अयि भो अत्युज्ज्वल हेतिराज ! भोः पाञ्चजन्य ! भो अतिदारुणनन्दकाख्य खड्गवर ! रमणीय शार्ङ्गचाप ! गदायुध ! जागृत जागृत । नित्यरक्षादीक्षिता भो अष्टदिक्पालकाः ! भोः पक्षिराज वैनतेय ! जागृत । भगवच्छयनागारपालनव्यग्रा भवत ॥ .... .... .... ... (९)

(गाथा.) अरवत्तमळियिनोडुम् अळगिय पार्कडलोडुम् *
अरविन्दप्पावैयुम् तानुम् अगम्बडि वन्दुपुगुन्दु *
परवैत्तिरै पलमोद प्पळ्ळिकोळ्हिन्न पिरानै *
परवुहिन्नान् विष्णुचित्तन् पक्किनङ्कावल्पोरुट्टे ॥ १० ॥

आदिशेषात्मकतल्पेन स्पृहणीयदुग्धाब्धिना अरविन्दवासिन्या च सह सर्वेश्वरस्समागत्य मम वपुषि क्षीरसागरतरङ्गशीकरासारतारकितचारुमूर्तिस्सन् योगनिद्रामुद्राभिरामो निवसति । तमिमं भगवन्तं स्तौति विष्णुचित्तसूरिः स्वहृदयपत्तनरक्षानिमित्तम् ॥ .... .... .... .... (१०)

— तथा चैतद्दशकसारसंग्राहकं पद्यमिदमिहानुसन्धेयम् —

स्वीया भोगीन्द्रशय्या कलशजलनिधिस्सिन्धुकन्येत्यमीभिः
साकं वैकुण्ठनाथो मम हृदि निरतस्सूरिभी रक्ष्यमाणः ।
हे पापव्याधिदुःखोच्चय! झटिति सर क्षीणमत्र स्थलं ते
प्राग्वन्नैवाद्य, रक्षा समभवदिति हि प्राह सूरिर्द्वितीये ॥

इति श्रीभट्टनाथसूक्ते पंचमशतके द्वितीयं सूक्तमवसितम् ॥
श्रीभट्टनाथदिव्यसूरिदिव्यचरणावेव शरणम् ।

---

॥ श्रीरस्तु ॥

श्रीमते रामानुजाय नमः ॥ श्रीमद्वरवरमुनये नमः ॥

श्रीभट्टनाथसूक्ते पञ्चमशतके

## ॥ ५-३. तृतीयं सूक्तम् — तुक्कच्चुळलैयै ॥

—* [ श्रीवनाद्रिनाथसन्निधौ स्वकैङ्कर्याभिनिवेशविज्ञापनम् । ] *—

अवतारिका—अधस्ताच्चतुर्थशतके द्वितीय तृतीयदशकाभ्यां यद्यपि श्रीवनगिरिनामकतिरुमालिरुञ्जोलैदिव्यदेशाधीशसुन्दरबाहुभगवदनुभवसंपन्नः तथाऽप्यपर्याप्तामृतं हि स भगवान् दिव्यसूरीणां विशिष्य सूरिवरस्यास्य इति पुनरप्यनुबुभूषा समुज्जृम्भते। अधुनाऽस्य श्रीसुन्दरभुजस्य भगवतस्सविधे विलक्षणः शास्त्रार्थश्च प्रकटीक्रियते

सूरिवरेणानेन । स्वामिन् सर्वशेषिन् श्रीकाननाद्रीश भगवन् ! त्वत्पादारविन्दैकप्रवणहृदयोऽहं भवता न रक्षितोऽस्मीति यदि कुत्रचिदन्यत्र दास्यं कर्तुं मनसाऽपि वा विचिन्तयेयम्, तच्चिन्तामात्रमपि हि ते महत्तरमवद्यं साधयेत्। * किं तु त्वदग्रे शरणागतानां पराभवो नाथ न तेऽनुरूपः * इति ह्यभियुक्ता अप्याहुः ! अन्यत्र दास्यकरणेऽपि मदुद्देश्यभूतः परमपुरुषार्थस्तु दुर्लभ एव । विधिशिवेन्द्रप्रभृतयो हि क्षुद्रफलमात्रप्रदानप्रवीणा मदपेक्षितमोक्षदाने भृशमकुशलाः! तस्मात्त्वमेव मे शेषी—कैङ्कर्यप्रतिसंबन्धी नान्यःकोऽपि । अविरतं त्वया ममैव चित्तमधिष्ठेयम् इति प्रार्थयते सूरिवरोऽयमस्मिन्दशके ॥ .... .... .... .... *

(गाथा.) तुक्कच्चुळलैयै च्चूळ्न्दु किडन्द वलैयै यरप्परित्तु *
पुक्किनिल् पुक्कुनै कण्डुकोण्डेन् इनिप्पोगविडुवदुण्डे *
मक्कळरुवरै कल्लिडै मोद इळन्दवळ् तन्वयित्तिल् *
शिक्कन वन्दु पिरन्दु निन्नाय् तिरुमालिरुञ्जोलैयेन्दाय् ॥ १ ॥

अश्मखण्डोपरि विक्षिप्य कंसेन मारितमपत्यषट्कं प्रति खिन्नमानसायाः स्थिताया देवक्या दिव्ये जठरे समुद्भूत भगवन् श्रीवनाद्रिनाथ ! दुःखसन्तानसमभिव्याप्तेरास्पदं वागुरापर्यायभूतं प्राकृतमिदं शरीरं जिहासुस्सन् बहुषु दिव्यदेशेषु परिभ्रम्य अन्ततस्त्वामिह पर्यवैक्षिषि । इतः परमन्यतोऽपसर्पणं तव न सहेय । नैव जह्यामहं त्वाम् ॥

(गाथा.) वळैत्तुवैत्तेन् इनिप्पोहलोट्टेन् उन्दननिन्दिरञालङ्गळाल् *
ओळित्तिडिल् निन्तिरुवाणै कण्डाय् नीयोरुवर्क्कुम् मेय्यनल्लै *
अळिचेङ्गुम् नाडुनगरमुम् तम्मुडैत्तीविनै तीर्कलुत्तु *
तेळित्तु वलञ्चेय्युम् तीर्थमुडै तिरुमालिरुञ्जोलैयेन्दाय् ॥ २ ॥

अज्ञामिज्ञविभागमन्तरेण सर्वान् जनान् सदा संरक्ष्य तत्पापनिर्वहणं चाकलय्य प्रवहद्भिः पुण्यतीर्थैरभिरामं श्रीवनाद्रिमलङ्कुर्वन् प्रभो ! त्वाम् इतोऽन्यत्र गमनानर्हं नियन्त्रितवानस्मि। मां विसृज्य अन्यत्र गमनं ते न संमन्ये। स्वकीयेन्द्रजालप्रागल्भ्येन यदि मयि स्वात्मस्वरूपनिह्नवं कुरुषे तर्हि तव दिव्यमहिष्या श्रीमहालक्ष्म्या शपे । त्वं सर्वत्र मायावी खलु भवसि ॥ .... .... .... .... (२)

(गाथा.) उनक्कुप्पणिशेय्दिरुक्कुम् तवमुडैयेन् इनिप्पोयोरुवन्
तनक्कुप्पणिन्दु * कडैत्तलै निर्कै निन्शायैयलिवु कण्डाय् *
पुनत्तिनैकिळ्ळि प्पुदुववि काट्टि उन्पोन्नडि वाळ्हवेन्नु *
इनक्कुरवर् पुदियदुण्णुम् एळिल्मालिरुञ्जोलैयेन्दाय् ॥ ३ ॥

निजाभ्यवहारयोग्यं धान्यं क्षेत्रतस्समुच्छिद्य प्रथमतो नूतनं हविरिदं ते भूयादिति प्रोच्य तुभ्यं निवेद्य त्वत्पादारविन्दमङ्गलाशासनं च कृत्वा भुञ्जानैर्भिल्लनिवहैः परीतं श्रीवनाद्रिमधितिष्ठन् भगवन्! अहमस्मि त्वदेककिङ्करत्वदृढव्रतशाली । त्वं मां न रक्षसीति यद्यहमन्यत्र गत्वा अनन्यार्हशेषत्वविरुद्धमन्यशेषत्वं परिगृह्य दुरीश्वरद्वारबहिर्वितर्दिकादुरासिकामाकलयेयम्, तर्हि तत् भवतस्तेजसो हि क्षतिकरम् ॥ [टिप्पणी; * यत्करोषि यदश्नासि

यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय ! तत्कुरुष्व मदर्पणम् * इति गीतोक्तरीत्या• सर्वोऽपि जनः स्वेनोपभुज्यमानं वस्तु भगवते निवेद्यैवाश्नीयादिति शास्त्रार्थः । श्रीवनाद्रौ वर्तमाना जघन्यजातीया भिल्लजना अपि शास्त्रार्थमिमं परिपालयन्तीति कथनेन सर्वैरप्येवं नाम शास्त्रार्थपरिपालनव्यग्रैर्भवितव्यमिति प्ररोचना कृता भवति । अधस्ताच्चतुर्थशतके द्वितीयदशके नवम्यामपि गाथायां पूर्वार्धमेवंविधशास्त्रार्थप्रतिपत्तिसंपादकमवधेयम् ॥ ] (३)

(गाथा.) कादम्पलवुम् तिरिन्दुळन्नेर्कु अङ्गोर् निळलिल्लै नीरुमिल्लै * उन्
पादनिळलल्लाल् मत्तोरुयिर्पिडम् नानेङ्गुम् काणिगिन्निलेन् *
तूदुशेन्नाय् कुरुपाण्डवर्काय् अङ्गोर् पोय्च्चुत्तम् पेशिचेन्नु *
मेदश्चेय्देङ्गुम् पिणम्पडुत्ताय् तिरुमालिरुञ्जोलैयेन्दाय् ॥ ४ ॥

कुरुवंशजपाण्डवार्थे दूतकर्म कृतवन् भगवन् ! तत्र च कृत्रिमबान्धवभावनामावाह्य आश्रितानाश्रितभिदां विरचय्य सर्वामपि महीं प्रेतमयीं कृतवन् वासुदेव श्रीवनाद्रीश्वर ! बहुयोजनायतभूतलपर्यटनं भूरिशः कृतवताऽपि मया सर्वत्र निष्पानीयता निरालम्बनता चैव दृष्टा । त्वदीयपादच्छायामन्तरेण नान्य त्किमपि जीवनस्थलं क्वचिदप्युत्पश्यामि ॥

(गाथा.) कालुमेळा कण्णनीरुमनिल्ला उडल्शोर्न्दु नडुङ्गि * कुरल्
मेलुमेळा मयिर् कूच्चुमरा एनतोळ्हलुम् वीळ्वोळिया *
मालुगळानिर्कुमेन्मनमे उन्नै वाळ त्तलैप्पेय्दिट्टेन् *
शेलुकळानिर्कुम् नीळ्शुनैशूळ् तिरुमालिरुञ्जोलैयेन्दाय् ॥ ५ ॥

झषविहारसंकुलबहुतरजलाशयपरिवृतं श्रीवनाद्रिदिव्यदेशमधितिष्ठन् हरे ! उज्जीवनेच्छयाऽहं त्वामुपसृतवानस्मि । स्तब्धोऽस्मि ; अविरतनयनाम्बुपूरोऽस्मि । प्रशिथिलकम्पमानगात्रः स्वरगद्गदकण्ठः अविश्रान्तरोमाञ्चः स्तम्भित-भुजमूलश्चास्मि । अयि मम मानस ! त्वदाभिमुख्यबलादेव खल्वियती संपत्तिरासीदिति त्वयि समिन्धानव्यामोहं श्चास्मि ॥

(गाथा.) एरुत्तुक्कोडियुडैयानुम् पिरमनुमिन्दिरनुम् * मत्तु
मोरुत्तरुम् इप्पिरवियेन्नुम् नोय्कु मरुन्दरिवारुमिल्लै *
मरुत्तुवनाय् निन्न मामणिवण्णा मरुपिरवि तविर
त्तिरुत्ति * उन्कोयिल् कडैप्पुहप्पेय् तिरुमालिरुञ्जोलैयेन्दाय् ॥ ६ ॥

श्रीवनाद्रिनाथ भगवन् ! वृषभध्वजो वा नान्ये च केऽपि संसारसमाख्यव्याधिभेषजं विदन्ति । वैद्यो नारायणो हरिरिति सुप्रसिद्धभिषग्भूतमणिवर्ण हरे ! पुनर्जन्मसंगं व्युदस्य त्वदीयदिव्यालयद्वारपालनैकनिष्णातं मां विधेहि ॥

(गाथा.) अक्करैयेन्नुम् अनत्तकडलुळ्ळुन्दि उन्पेररुळाल् *
इक्करैयेरि यिळैत्तिरुन्देनै अञ्जेलेन्नु कैक्कवियाय् *
चक्करमुम् त्तडकैक्कळुम् कण्गळुम् पीतकवाडैयोडुम् *
शेक्कर् निरत्तु चिवप्पुडैयाय् तिरुमालिरुञ्जोलैयेन्दाय् ॥ ७ ॥

तेजस्विना हेतिराजेन पाणिकमलेन नयनारविन्देन पीताम्बरेण च सन्ध्यागगनसदृशप्रभोज्ज्वल श्रीवनाद्रिनाथ भगवन्! संसाराभिधाने अनर्थार्णवे निमज्ज्य स्थितोऽहं भवदीयमहाकृपया प्राप्यं स्थानविशेषं मनसा विचिन्त्य तदनवाप्तिविषादभरितोऽस्मि। ईदृशं माम् अभयहस्तमुद्रया वीतभयं कुरुष्व॥ ... (७)

(गाथा.) एत्तनैकालमुम् एत्तनैयूळियुम् इन्नोडुनाळैयेन्ने *
इत्तनैकालमुम् पोयूक्किरिप्पट्टेन् इनियुन्नैप्पोहलोट्टेन् *
मैत्तुनन्माहैळ वाळ्वित्तु मात्तलर् नूत्तुवरैकेडुत्ताय् *
शित्तम् निन्पालदरिदियन्ने तिरुमालिरुञ्जोलैयेन्दाय्॥ ८॥

श्रीवनाद्रिनाथ भगवन्! वर्तमानं दिनं भविष्यद्दिनमित्येवमेव व्यवहारतो हन्त कियन्तः कालाः कियन्तश्च कल्पा व्यतीताः! तेषु व्यतीतेषु कालेषु व्यभिचरन् सोऽहमज्ञानयन्त्राक्रान्तस्सन् व्यनश्यम्। इतःपरं ते विश्लेषं नैव सहेय। पाण्डवान् समुज्जीव्य धार्तराष्ट्रान् विनाशितवन् भो वनाद्रिनाथ! भगवन्! मम हृदयं त्वय्येव व्यासक्तं वेत्थ खलु॥ (८)

(गाथा.) अन्नु वयित्तिल् किडन्दिरुन्दे अडिमैशेय्यलुत्तिरुप्पन् *
इन्नुवन्दिङ्गुन्नै कण्डुकोण्डेन् इनिप्पोग विडुवदुण्डे *
शेन्नङ्गुवाणनै यायिरन्दोळुम् तिरुच्चक्करमदनाल्
तेन्नि * दिशैदिशैवीळच्चेत्ताय् तिरुमालिरुञ्जोलैयेन्दाय्॥ ९॥

शोणितपुरमुपेत्य बाणासुरबाहुसहस्रं हेतिराजेन विलूय निपातितवन् भगवन् श्रीवनाद्रिनाथ! जननीजठरगर्भवासकालतः प्रभृत्येव त्वत्किङ्करत्वविभवे समुत्पन्नाध्यवसायोऽहमस्मि। अद्य चात्र वनाद्रौ समागत्य त्वां समसेविषि। इतःपरमावयोर्विश्लेषः कथमिव भगो! भवितुमर्हति॥ .... .... .... (९)

(गाथा) शेन्नुलगम् कुडैन्दाडुम् शुनै तिरुमालिरुञ्जोलैतन्नुळ्
निन्नपिरान् * अडिमेलडिमैत्तिरम् नेर्पड विण्णप्पञ्शेय् *
पोन्तिगळ् माडम् पोलिन्दु तोन्नुम् पुदुवैकोन् विट्टुशित्तन् *
ओन्निनोडोन्बदुम् पाडवल्लार् उलगमलन्दान् तमरे॥ १०॥

सकलजनपदजनतावगाहनयोग्यसुपवित्रदिव्यतीर्थालंकृतं श्रीवनाद्रिनामकं दिव्यदेशमधितिष्ठतस्सुन्दरबाहोर्भगवतः पादारविन्दपरिसरे कैङ्कर्यलिप्सुना हिरण्मयभवनाभिरामश्रीधन्विनव्यनगराधिनाथश्रीविष्णुचित्तसूरिवरेण विज्ञापितमिदं दशकं कीर्तयन्तस्सन्तः त्रिविक्रमभगवद्भक्ता भवितार इति फलकीर्तनेन समापितमिदं दशकम्॥ .... (१०)

— तथा चैतद्दशक सारार्थसंग्राहकमिदं पद्यम् —

स्वामिंस्त्वत्पादपद्मप्रणतिनिरतधीस्सोऽहमन्यत्र दास्यं
ध्यायेयं चेतसा चेदपि च तदिह तेऽवद्यदायि प्रसिध्येत्।
शर्वब्रह्मेन्द्रमुख्या अपि न भवमयव्याधिवैद्या वनाद्रि-
स्वामिन्! शेषी त्वमेवेत्यवददिह मुनिर्विष्णुचित्तस्तृतीये॥

इति श्रीभट्टनाथसूक्ते पञ्चमे शतके तृतीयं दशकमवसितम्॥
श्रीभट्टनाथसूरिदिव्यचरणावेव शरणम्॥

॥ श्रीरस्तु ॥

श्रीमते रामानुजाय नमः ॥ श्रीमद्वरवरमुनये नमः ॥

श्रीभट्टनाथसूक्ते पंचमशतके

## ॥ ५-४. चतुर्थ दशकम् — शेन्नियोङ्गु ॥

—* [स्वकीयब्रह्मानन्दविज्ञापनम्] *—

अवतारिका—अस्मिन्दशके श्रीविष्णुचित्तसूरिः स्वाभिलषितब्रह्मानन्दावाप्तिं प्रथयन् स्वकीयमिमं दिव्यप्रबन्धं च निगमयति । स्वात्मनः स्वात्मीयसमस्तवस्तुजातानां च भगवद्दिव्यहेत्यङ्कितत्वसम्पादनेन निर्दग्धाशेष-पापराशिकत्वं समुन्मिषितसुमहत्तरज्ञानसम्पत्तिकत्वं च कथयित्वा दिव्यानन्दामृतजलधिनिमग्नहृदयो भूत्वा स्वप्रबन्धं च समापितवान् ॥ *

(गाथा.) शेन्नियोङ्गु तण् तिरुवेङ्गडमुडैयाय् * उलहु
तन्नै वाळनिन्र नम्बी दामोदरा शदिरा *
एन्नैयुमेन्नुडैमैयैयुम् उन् चक्करप्पोरियोत्तिक्कोण्डु *
निन्नरुळे पुरिन्दिरुन्देन् इनियेन् तिरुक्कुरिप्पे ॥ १ ॥

उत्तुङ्गशिखरशिशिरश्रीवेङ्कटशिखरिनिलय भगवन्! सकललोकसमुज्जीवनपटो गुणपूर्ण दामोदर चतुर हरे! मां मदीयं च निखिलं त्वदीयचक्राङ्कितमारचय्य त्वदीयां करुणां केवलं प्रतीक्षमाणो वर्ते । किं नु भगो! भवदन्तरङ्गम्?
.... ... .... .... .... .... .... (१)

(गाथा.) परवैयेरु परम्पुरुडा नीयेन्नै क्कैक्कोण्डपिन् *
पिरवियेन्नुम् कडलुम् वत्ति पेरुम्पदमाहिन्नदाल् *
इरवु शेय्युम् पावक्काडु तीक्कोळीइ वेहिन्नदाल् *
अरिवैयेन्नुममुदवारु तलैप्पत्ति वाय्क्कोण्डदे ॥ २ ॥

अयि विहगराजवाहन परमपुरुष! यदा मां त्वं किङ्करत्वेन स्वीकृतवानसि तदैव मे भवार्णवः शुष्कतां प्राप । महत्तरं च मे वैभवमुदभूत् । आत्मविनाशकारिणी पापाटवी च दावानलदंदह्यमाना नश्यति । प्रज्ञाभिधाना अमृतनदी च विसृत्वरी जृम्भते ॥ .... .... .... .... (२)

(गाथा.) एम्मनावेन् कुलदैवमे एन्नुडै नायकने *
निन्नुळ्ळेनाय् पेत्त नन्मै इव्वुलहिनिलार् पेरुवार् *
नम्मन्पोले वीळ्त्तमुक्कम् नाट्टिलुळ्ळ पावमेल्लाम् *
शुम्मेनादे कैविट्टोडि तूरुहल् पाय्न्दनवे ॥ ३ ॥

मम जननीसमान ! मम कुलदैवत ! मम नायक ! त्वदीयाभिमानभाजनभूतेन मया प्राप्तं श्रेयो जगतीह सत्यमनन्यसुलभं खलु । नरकं प्रवेश्य यमवद्बाधितुं क्षमाणि मदीयजनपदस्थानि सकलान्यपि पापानि पलायितानि काननेषु न्यलीयन्त हन्त ॥ .... .... .... .... (३)

(गाथा.) कडल् कडैन्दमुदम् कोण्डु कलशत्तै निरैत्ताप्पोल् *
उडलुरुहि वायृतिरन्दु मडुत्तुन्नै निरैत्तुकोण्डेन् *
कोडुमै शेय्युम् कूत्तमुम् एन् कोलाडि कुरुकप्पेरा *
तडवरैत्तोळ् चक्रपाणि शार्ङ्गविल् शेवहने ॥ ४ ॥

बृहत्तरशैलोपमेयबाहुशालिन् चक्रपाणे ! भगवन् शार्ङ्गधन्वन् ! महावीर ! "मयाऽपि सागरं मथित्वा अमृतमुद्धृत्य कलशः प्रपूरितः" इति वक्तुं योग्यतया संसारार्णवादमुष्मादमृतनिर्विशेषं भवन्तं समुद्धृत्य मम हृदयकलशमपूरयम् । अतिकठोरदुर्दण्डनकारी मृत्युरपि मदाज्ञाचक्रसञ्चारार्हस्थलेष्वपि सन्निहितो भवितुं नालमिदानीम् ॥ .... (४)

गाथा. पोन्नैकोण्डु उरैकल्मीदे निरमेळ वुरैत्ताप्पोल् *
उन्नैकोण्डेन्नावहम्पाल् मात्तिन्नि युरैत्तुकोण्डेन् *
उन्नैकोण्डेन्नुळ् वैत्तेन् एन्नैयुमुन्निलिट्टेन् *
एन्नप्पा एन्निरुडीकेशा एन्नुयिर् कावलने ॥ ५ ॥

मन्नाथ ! मम हृषीकेश ! मदात्मसंजीवन ! निकषोपले कनकखण्डकषणवत् सुवर्णनिर्विशेषं त्वामहं मम जिह्वात्मके निकषोपले निकषितुमुपक्रम्य हाहन्त त्वां विगतकान्तिकमकरवम् । त्वामहं मम हृदये न्यधाम् । मां च तुभ्यं समार्पिपम् ॥ ... .... .... .... .... (५)

(गाथा.) उन्नुडैय विक्किरमम् ओन्नोलियामलेल्लाम् *
एन्नुडैय नेञ्जहम्पाल् शुवर्वलि येलुदिकोण्डेन् *
मन्नडङ्ग मलु वलङ्कैकोण्ड इरामनम्बी *
एन्निडैवन्देम्बेरुमान् इनियेङ्गु प्पो.हेन्नदे ॥ ६ ॥

दुष्टक्षत्रनिर्बर्हणार्थं परशुं दक्षिणहस्ते बिभ्राण भगवन् राम ! त्वदीयविक्रमपिशुनानि चरित्राण्यखिलान्यपि निरवशेषं मामकीनहृदयभित्तौ व्यलेखिषम् । स्वामिन् मदधीनतां प्रापुषा भवता इतः कुत्र वा गम्यते ? [टिप्पणी :—गाथायामस्यां "त्वदीयचरित्राण्यखिलान्यपि" इति कथनमात्रेण ह्यलम्; निरवशेषमिति पुनः कथनं किमभिप्रायकमिति चेत्; अखिलान्यपीत्यनेन पराशरपाराशर्यप्राचेतसप्रभृतिमहर्षिकीर्तितान्यखिलानि चरितानि गृह्यन्ते; निरवशेषमित्यनेन महर्षिभिरकथितान्यपि स्वात्मनैव साक्षात्कृतानि चरितानि गृह्यन्ते—इत्याहुराचार्याः । २-७-८, कथितो मालिकवृत्तान्तः, ३-१०-२, कथितो मैथिलीकृतमालिकाबन्धन वृत्तान्तश्च इतिहासपुराणेष्वप्रसिद्धः अनेनैव दिव्यसूरिणा साक्षात्कृतः खलु ॥ ] .... .... .... (६)

(गाथा.) परुप्पदत्तु कयल्पोरित्त पाण्डियर् कुलपतिपोल् *
तिरुप्पोलिन्द शेवडि एन्शेन्नियिन्मेल् पोरित्ताय् *
मरुप्पोशित्ताय् मल्लडर्त्ताय् एन्नेन्तु उन् वाचकमे *
उरुप्पोलिन्द नाविनेनै उनकुरित्ताक्किनैये ॥ ७ ॥

पाण्डयकुलपतिर्मलयध्वजभूपतिर्यथा मेरुशिखरिशिखरे स्वकीयं मीनकेतुं प्रतिष्ठापितवान् तथा स्वामिन्! त्वदीयं श्रीमच्चरणारविन्दं मम शिरसि प्रतिष्ठापितवानसि। कुवलयापीडमत्तवारणदन्तभञ्जन! मल्लध्वंसन! इत्येवमेवं त्वदीयान्येव दिव्यनामानि संततं संकीर्त्य किणाङ्कशोभिजिह्वातलं मां तवैवावसथमकार्षीरहह ॥ .... (७)

(गाथा.) अनन्तन्पालुम् गरुडन्पालुम् ऐदु नोय्दाह वैत्तु * एन्
मनन्तनुळ्ळे वन्दु वैहि वाळच्चेय्दाय् एम्बिरान् *
निनैन्देन्नुळ्ळे निन्तु नेक्कु कण्गळ् अशुम्बोलुह *
निनैन्दिरुन्दे शिरमम् तीर्न्देन् नेमि नेडियवने ॥ ८ ॥

चक्रपाणे महात्मन् महोपकारक भगवन्! अनन्ते गरुत्मति च प्रेमाणमल्पीयांसमाकलय्य ममैव हृदयं नित्यवासास्पदमूरीकृत्य मामुज्जीवयामासिथ। ईदृशं ते अतिमात्रसौलभ्यमनुसन्धाय द्रुतहृदय उद्गीर्णवाष्पाम्बुनयनश्च सन् त्वत्कृतमहोपकारविचिन्तनेन वीतसकलश्रमो भवामि भगवन् ॥ .... .... (८)

गाथा. पनिक्कडलिल् पळ्ळिहोळै प्पळहविट्टु * ओडिवन्देन्
मनक्कडलिल् वाळवल्ल माय मणाळनम्बी *
तनिक्कडले तनिच्चुडरे तनियुलहे येन्नेन्तु *
उनक्किडमायिरुक्क एन्नै युनकुरित्ताक्किनैये ॥ ९ ॥

क्षीरसागरे शयनं विस्मृत्य सादरमिहागत्य मम हृदयार्णवे विराजमान! आश्चर्यशक्तियुक्त रमापते! गुणपूर्ण क्षीरार्णवभास्करमण्डल श्रीवैकुण्ठादिस्थानविशेषेष्वसाधारणेषु तव भासमानेष्वपि निरालम्ब इव हन्त त्वं मामेव त्वदसाधारणनिलयं चकर्थ ॥ .... .... .... .... (९)

(गाथा.) तडवरैवाय् मिळिर्न्दु मिन्नुम् तवळ नेडुङ्कोडिप्पोल् *
शुडरोळियाय् नेञ्जिनुळ्ळे तोन्तुमेन् शोदिनम्बी *
वडदडमुम् वैहुन्दमुम् मदिळ् तुवरापदियुम् *
इडवहैहळ् इहळन्दिट्टु एन्पालिडवहै कोण्डनैये ॥ १० ॥

गुरुतरशिखरिशिखरोदञ्चद्धवलपताकेव मम मनसि विराजमान ज्योतिःपुञ्जमय भगवन्! उदीच्यां दिशि स्थितं कलशार्णवं वैकुण्ठं प्राकारपरिवेष्टितां द्वारवतीम् अन्यानपि च स्थानविशेषान् उपेक्ष्य मय्येव हि महत्तरमादरमुद्वहसि ॥
.... .... .... .... .... .... (१०)

(गाथा.) वेयर्तङ्गळ् कुलत्तुदित्त विष्णुचित्तन्मनत्ते *
कोयिल् कोण्ड कोवलनै कोळुम् कुळिर्मुहिल्वण्णनै *
आयरेत्तै यमरर् कोवै अन्दणर्तम् अमुदत्तिनै *
छायैपोल प्पाडवल्लार् तामुम् अणुक्कर्हळे ॥ ११ ॥

वैदिककुलोद्भूतविष्णुचित्तमनस्येव कृतवासं गोपालं शिशिरमुदिरसवर्णं वल्लवकुलपतिं देवाधिदेवं ब्राह्मणानां परम-भोग्यं च सर्वेश्वरं ये गायन्ति ते छायेव तं भगवन्तमनुवर्तितुं भाग्यं लभेरन्निति फलकीर्तनेन समापितमिदं दशकम् ॥ समापितश्चासौ दिव्यप्रबन्धः ॥ .... .... .... .... (११)

— तथाचैतद्दशकसारांशसंग्राहकं पद्यमिदमिहानुसन्धेयम् —

स्वस्य स्वात्मीयवर्गैस्सममपि भगवद्दिव्यहेत्यङ्कितत्वात्
दग्धाशेषाघतामप्यतिशयितमहाज्ञानतां चाभिधाय ।
दिव्यानन्दामृताब्धिप्रपतितहृदयः स्वप्रबन्धं समाप्तं
चक्रे यो भट्टनाथस्स जयति धरणौ कीर्तिमूर्त्या समृद्धः ॥

श्लो. श्रीभट्टार्यप्रबन्धं श्रुतिशतशिखरोदञ्चदर्थौघगर्भं
द्राविड्या दिव्यवाचा स्थितममरवचोभिज्ञभक्तानुभूत्यै ।
काञ्चीस्थोऽण्णङ्गरार्यो विबुधपरिषदि ख्यातभूमा कवीन्द्रो
दैव्या वाण्या न्यबध्नात् कृतिरिह जयतात्सेयमाचन्द्रसूर्यम् ॥

इति श्रीकाञ्चीपुराभिजन—जगदाचार्यसिंहासनाधीश—प्रतिवादिभयङ्कर
श्रीमदण्णङ्गराचार्यवर्यकृतिषु द्राविडाम्नायदिव्यप्रबन्धविवर्ते
पेरियाळ्वार्तिरुमोळिनामक श्रीभट्टनाथसूक्तविवर्तस्समाप्तः ॥

श्रीभट्टनाथसूरिदिव्यचरणावेव शरणम् ॥
श्रीमच्छठरिपुयतिपतिवरवरमुनीन्द्रदिव्यचरणा एव शरणम् ॥

प्रथमसहस्रे द्वितीयप्रबन्धस्समाप्तः ॥

आदितः प्रभृति गाथासंख्या—४७३.

॥ श्रीरस्तु ॥

---

'लिबर्टीप्रेस्' चेन्नपुरी-१.

॥ श्रीः ॥

# ॥ श्री वैष्णवसंप्रदाय पुस्तकसूची ॥

## ॥ श्रीकाञ्ची-प्रतिवादिभयङ्कर-अण्णङ्गराचार्य संमुद्रणम् ॥

| | रू. आ. |
|---|---|
| भगवद्रामानुजग्रन्थमाला—श्रीरामानुजार्यविरचित वेदार्थसंग्रह-श्रीभाष्य-वेदान्तदीप-वेदान्तसार-गीता-भाष्य-गद्यत्रय-नित्यग्रंन्थ समन्विता। १५—० यतीन्द्रमतदीपिका | १— ० |
| पूर्वाचार्यस्तोत्रमाला (श्रीवैष्णवसम्प्रदायधुरंधर श्रीकुलशेखरसूरिप्रभृति श्रीवरवरमुनिशिष्यवर्गपर्यन्त सकलपूर्वाचार्यप्रणीता) | ३— ० |
| श्रीमद्वेदान्तदेशिकग्रन्थमालायाम् (स्तोत्रावली विभागः) हयग्रीवस्तोत्रादि-द्वात्रिंशत्स्तोत्रबृन्दम्। | ३— ० |
| (काव्यनाटकविभागः) यादवाभ्युदय, हंससंदेश, सुभाषितनीवी, संकल्पसूर्योदयाः | ६— ० |
| तत्त्वटीका, निक्षेपरक्षा, सच्चरित्ररक्षा, श्रीपाञ्चरात्ररक्षा, यज्ञोपवीतप्रतिष्ठा, वैश्वदेवकारिका, सव्याख्यो भूगोलनिर्णयः, भगवदाराधनप्रयोगकारिका, मुक्तकश्लोकाः ॥ | ६— ० |

## अण्णङ्गराचार्यकृतयः

| | |
|---|---|
| रहस्यरत्नमालिका (रहस्यत्रय, तत्त्वत्रय, श्रीवचनभूषणानि श्लोकबद्धानि) | १— ० |
| तर्कशास्त्रसर्वस्वम् १— ० क्षेत्रतीर्थयात्रादर्शः | ०— ८ |
| यतिराजविंशतिः (हिन्दीटीका) ०—१२ आल्वारवैभवम् (हिन्दी) | ०—१२ |
| दिव्यसूरिवैभवम् पूर्वाचार्यवैभवंच १— ० शतभूषणीवज्रकुठारः (सशेषः), वज्रकुठारविजयध्वजश्च | २— ० |
| वैदिकलौकिकरञ्जनदशकम् भगवद्रामानुजदिव्यनामवैभवं च | ०— ८ |
| वात्सल्यार्थप्रकाशिका, अभिनवदयाशतकम्, सभाभुजङ्गीसर्वस्वम्, श्रीतत्त्वशोधनम्, श्रीरामायणदण्डकः, श्रीरामायणरसायनम्, श्रीरामभद्रकर्णामृतम्, गोपालभक्तामृतम्, गोविन्दगीतामृतम्, श्रीवरवरमुनिदण्डकश्च। | २— ० |
| श्रीवैष्णवसौभाग्यम्—श्रीमद्वरवरमुनीन्द्र विषयकद्वादशस्तोत्राणि-टीकया सह। | १— ० |
| सदर्थसमुच्चयः—विविधविषयक-उपन्यासदशकरूपः। | १— ० |

## द्राविडवेददिव्यप्रबन्ध संस्कृतानुवादाः—

| | |
|---|---|
| तिरुप्पल्लाण्डुदिव्यप्रबन्धस्य संस्कृतव्याख्या हिन्दी टीका च। | १— ० |
| पेरियाल्वार्तिरुमोळिनामक भट्टनाथसूक्तदिव्यप्रबन्धः—सार्धचतुश्शतगाथाविवर्तः | ४— ० |
| तिरुप्पावै नामक श्रीगोदाव्रतदिव्यप्रबन्धः—रसघनविपुलव्याख्यासमेतः | ३— ० |
| श्रीगोदासूक्तदिव्यप्रबन्धविवर्तः १— ० कुलशेखरसूक्तविवर्तः १— ० भक्तिसारमुनिसूक्त विवर्तः | १— ० |
| तिरुमालै, तिरुप्पळ्ळियेळुच्चि, अमलनादिपिरान्, कण्णिनुण् शिरुत्ताम्बु नामक दिव्यप्रबन्धचतुष्टय विवर्तः | २— ० |
| बृहत्सूक्तनामक श्रीपरकालसूक्ते प्रथमद्वितीयशतकविवर्तः | २— ० |
| शिरियतिरुमडल् पेरियतिरुमडल् रामानुजनूत्तन्दादि नामक दिव्यप्रबन्धत्रितयविवर्तः | १— ० |
| औत्तरदिव्यदेश दिव्यप्रबन्धावली | २— ० |
| * वैदिकमनोहरानाम्नी पत्रिका प्रतिमासमवतरति। अस्या वार्षिकमूल्यम् | ५— ० |

* द्राविडभाषायामान्ध्रभाषायां च बहवो ग्रन्था अप्यत्र सुलभाः ॥

Apply to: P. B. Annangaracharya, Kancheepuram.

1–12–1961 प्राप्तिस्थानम्—ग्रन्थमाला आफीस्, कांचीपुरम्।